"Sasthra-muktha-vali"; No-15

THE

# *SATHWATHA-SAMHITHA*

( Pâncharâthrâgama )



EDITED BY

P. B. ANANTHA CHARIAR

SANSKRIT PANDIT

Printed and Published

By the

PROPRIETOR

OF

*SRI SUDARSANA PRESS*

*COJEEVERAM.*

1902.



Price-Rs. 2-8-0.

शास्त्र मुक्तावळी - १५.

# सात्वतसंहिता ।

( पांचरात्रशास्त्रम् )

भवभयाभितप्त निखिल जगत्समुज्जीवनकामेन

परमदयाळुना भगवता वासुदेवेन

संकर्षणायोपदिष्टा

अष्टोत्तरशतसंख्येषु पांचरात्रसंहितास्वन्यतमा

श्रीकांची प्रतिवादि भयंकरं

अनन्ताचार्येण

परिशोधिता.

श्री सुदर्शनमुद्राक्षरशालायां

अमुद्र्यत ।

१९०२

श्रीकांची ।

इदानीमेतन्मूल्यम् = २ - ८ - ०

# विषयानुक्रमः

# सात्वत संहिता भूमिका ।

इह किल दुस्तरानन्त संसारपारावारनिमग्ना नाध्यात्मिकादि तापत्रय सन्तापितान् निखिलानपि जन्तू नन्नुजिघृक्षतो भगवतो लक्ष्मीपते र्मुखादुद्भूतं महोपनिषदाख्यं शास्त्रम् । यस्य किल सन्निधौ पञ्चेतराणि कापालादीनि तन्त्राणि रात्रीयन्त इत्यपरा पञ्च-रात्र संज्ञापि प्रवर्तते ।

प्रमाण सार्वभौमताचास्य महाभारते ब्रह्मसूत्रे आगमप्रामाण्ये श्रीभाष्ये - श्रीपांचरात्राधिकरणे, पांचरात्र रक्षाया मन्येषु च बहुषु निबन्धनेषु सुस्पष्टमुद्घुष्यते ।

तदेतत्पञ्चरात्रशास्त्रं एकमूर्ति चतुर्मूर्ति नवमूर्ति प्राधान्यैः चतुस्त्रिवक्रप्राधान्येन च मन्त्रसिद्धान्ता गमसिद्धान्त तन्त्रसिद्धान्त तन्त्रान्तरसिद्धान्त संज्ञाभि श्चतुर्धाविभक्तम् ।

तस्यैतस्य सिद्धान्तचतुष्टयात्मकस्य पाञ्चरात्रशास्त्रस्य पाद्म पद्मोद्भवाद्या अष्टोत्तरशतं संहिताः प्रसिद्धाः ।

तासु च साक्षात भगवन्मुखोद्भततया रत्नत्रयमिति प्रथितासु श्रीसात्वत पौष्करजयाख्याभिधानासु तिसृषुसंहिता स्वन्यतमेयं सात्वत संहिता भगवतोवासुदेवस्य संकर्षणस्यच संवादरूपा तत्वहित पुरुषार्थ तत्साधनभगवदाराधनाद्यवबोधनेन बहूपकरोतिभाविनाम् । यामेवोद्दिश्य महाभारते कुरुपितामहो ज्ञानवृद्धो भीष्मएवं प्राह-

" ब्राह्मणैः क्षत्रियै र्वैश्यै श्शूद्रैश्च कृतलक्षणैः ।
अर्चनीयश्च सेव्यश्च कीर्तनीयश्च सर्वदा ॥
सात्वतं विधिमास्थाय गीतस्संकर्षणेनयः ।
द्वापरस्य युगस्यान्त आदौ कलियुगस्यच ॥ "इति ।

यद्यपीदं वचनं श्रीपाञ्चरात्र सामान्यपरमेव. कृत्स्नस्यापि तस्य सात्वतशास्त्र संज्ञत्वात. अथापि संकर्षणगीतत्व रूपविशेषणस्यै त-न्मात्रा साधारणतया नामप्रसिद्ध्या च एत त्संहिता प्रधानाभिमता भवितुमर्हतीति वयं प्रतिपद्यामहे ।

तदेतादृश्या अस्या मुद्रणे प्रवृत्ता वयम् –

१. अस्मदीय श्री " हयवदन लीलासदन " पुस्तकाल-यस्थ मेकं ग्रन्थाक्षरै स्ताळपत्रेषु लिखितम्,

२. विद्वद्वर्याणां श्रीपद्पुरनिवासिनां श्रीशैलानन्तपुरुष श्रीरङ्गा-चार्य स्वामिनां ताळपत्रलिखित मांध्राक्षर मय मपरम्,

३. " तेषामेव ताळपत्रेष्वेव ग्रन्थाक्षरै र्लिखितमितरत्,

४. " श्री विशाखपत्तन निवासिनां श्रीपरवस्तु यस्. पि. वि. रङ्गनाथस्वामिनां आर्यवरगुरूणां पुस्तकालयस्थं ताळपत्र लिखितं ग्रन्थाक्षरमय मन्यत,

इति पुस्तक चतुष्टयाधारेणास्या श्शोधन मकार्ष्म । आदर्शानां पुस्तकाना मशुद्धिबहुलाना मेकरूपाणा मेवोपलब्धतया सम्भाव्यते महत्यशुद्धि रत्र । तथापि ग्रन्थलोपाभावमात्रेण तुष्यद्भिः कृतज्ञैः क्षन्तव्योयं दोष इति निवेदयति ।

प्र. अनन्ताचार्यः ।

सम्पादकः ।

श्रीं नमः ।

श्री हयग्रीवाय नमः ।

# ॥ शास्त्रमुक्तावळी ॥

## ॥ श्रीपांचरात्रे श्रीसात्वत संहिता ॥

विष्णो राराधनपरा मुनयो मलयाचले ।
संस्थिता स्सिद्धगन्धर्व विद्याधर निषेविते ॥ १ ॥
कालेन केनचित्स्वर्गा द्ग्रामदर्शन लालसः ।
तत्रावतीर्णो देवर्षि र्नारदो भगवन्मयः ॥ २ ॥
ज्ञात्वा तस्याचलां भक्ति देवः परशुलांछनः ।
प्रत्यक्षतां जगामाशु सानुकम्पेन चेतसा ॥ ३ ॥
ततः प्रहृष्टवदनः प्रोद्भिन्नपुलको मुनिः ।
पूजयामास तं देव मष्टांग पतनादिना ॥ ४ ॥
अथाह भगवान् रामो मधुराऽक्षरया गिरा ।
तवास्ति भक्ति रधिका जन्मबीज क्षयं करी ॥ ५ ॥
एषातु सात्विकी शुद्धा नित्यमव्यभिचारिणी ।
तिष्ठन्ति मुनयो येऽत्र प्रार्थयाना हरेः पदम् ॥ ६ ॥
तान् सात्वते क्रिया मार्गे मदाज्ञया व्याहियोजय ।
एवमुक्त्वातु तं विप्र मृषीणां हितकाम्यया ॥ ७ ॥
जगामा दर्शनं देव स्तस्मा देशात्तदिच्छया ।
सतु हृष्टमना वाक्यं शिरसा च्चाभिवाद्य तत् ॥ ८ ॥
निर्जगामाचलेऽथ पुष्पै स्स्थानवरन्तु तत् ।
अपश्य दाश्रमं चान्यं नानाद्विज निषेवितम् ॥ ९ ॥

सस्यपुष्पफलैराढ्यं वापी कूप ह्रदान्वितम् ।
सम्प्रहृष्ट स्तत स्तत्स्थै र्द्विजेन्द्रै रभिवादितः ॥ १० ॥
पूजितश्चार्घ्यपाद्याद्यै र्विनिवेशितविष्टरः ।
अथांजलिधरास्सर्वे प्रोत्फुल्ल नयनाम्बुजाः ॥ ११ ॥
वदन्ति जन्मसाफल्य मद्य न स्तव दर्शनात् ।
श्रुत्वा त त्प्रीति जनकं वाक्यं प्रणयपेशलम् ॥ १२ ॥
नमस्कृत्य हृषीकेशं मुनि रप्याह नारदः ।
मन्ये कृतार्थ मात्मानं नूनं विप्रवरा ह्यहम् ॥ १३ ॥
भवद्भिस्सह सम्बन्धो यस्य मेऽस्मिन्शुभाश्रमे ।
उक्तोहं भवतामर्थे देवेनाक्लिष्टकर्मणा ॥ १४ ॥
यत्तदेकहृदस्सर्व माकर्णयत सत्वम्रतम् ।
अद्यप्रभृति देवेश माराधयत केशवम् ॥ १५ ॥
रहस्याम्नायविधिना शश्वन्मोक्षप्रदेनतु ।

ऋषयऊचुः ।

मुनेश्चिरप्रपन्नानां भक्तानांनोभवान्गतिः ॥ १६ ॥
नारायणपदप्राप्ते र्यच्छ्रेयस्तत्प्रकाशय ।

नारदः ।

यच्चोदितेन हलिना प्राग्युक्तं [ क्तं ] चक्रपाणिना ॥ १७ ॥
पारम्पर्यागतंतन्मे गदतश्शृणुतद्विजाः ।
पुराऽतीतेकृतप्राते त्रेताख्येद्वापरेयुगे ॥ १८ ॥
ईषद्रारक्ततांयाते जगद्धातरिचाच्युते ।
आहसंकर्षणोविष्णुं ज्ञात्वाविनयवानपि ॥ १९ ॥
किमिदंदेवपश्यामि तवरूपविपर्ययम् ।
प्रहस्योवाचभगवा न्मेघगम्भीरयागिरा ॥ २० ॥

नायं सकालो यत्रासी त्वयैकबहुळोऽजनः ।
अत्यरागपरोलोक स्तद्वृत्तंधारयाम्यहम् ॥ २१ ॥

संकर्षण उवाच ।

कालस्वभावजाःकेन कर्मणा राग ईदृशः ।
नछादयतिलोकानां त्वद्भक्तानां विशेषतः ॥ २२ ॥

श्रीभगवानुवाच ।

त्रिविधेनप्रकारेण परंब्रह्मशाश्वतम् ।
आराधयन्तियेतेषां रागस्तिष्ठतिदूरतः ॥ २३ ॥

संकर्षण उवाच ।

भगवंस्त्रिविधं ब्रूहि - उपेयंब्रह्मलक्षणम् ।
हितार्थं च प्रपन्नानां व्यामोह विनिवृत्तये ॥ २६ ॥

श्रीभगवानुवाच ।

षाड्गुण्य विग्रहं देवं भास्वज्ज्वलन तेजसं ।
सर्वतः पाणिपादं त त्सर्वतोऽक्षि शिरोमुखम् ॥ २५ ॥
परमेतत्समाख्यात मेकं सर्वाश्रयं तथा ।
एतत्पूर्वं त्रयं चान्य ज्ञानाद्यै र्भेदितंगुणैः ॥ २६ ॥
विद्धि त द्व्यूहसंज्ञंवै निरायास फलप्रदम् ।
मुख्यानुवृत्तिभेदेन युक्तंज्ञानादिकैर्गुणैः ॥ २७ ॥
नानाकृति च तद्विद्धि वैभवं मुक्तिमुक्तिदम् ॥ २७- ॥

इति श्रीपांचरात्रे श्री सात्वत संहितायां प्रश्नप्रतिवचनंनाम

प्रथमः परिच्छेदः ॥ १ ॥

# अथ द्वितीयः परिच्छेदः ।

श्रुत्वैव मच्युतमुखा देवदेवो हलायुधः ।
हितार्थं भवभीतानां पुनराह द्विजोत्तमाः ॥ १ ॥

संकर्षणः ।

विधिना कीदृशेनैव ह्युपास्ता विहिता त्वयैव ।
उपासकानां भक्तानां समासाद्ब्रूहि मे विभो ॥ २ ॥

श्री भगवानुवाच ।

शृणु सम्य क्प्रवक्ष्यामि यदहं चोदित स्त्वया ।
यज्ज्ञात्वा न पुन र्जन्म पुनरेवाप्नुया न्नरः ॥ ३ ॥
ब्राह्मणानां च सद्ब्रह्म वासुदेवाख्य याजिनां ।
लक्षभूतं यदा स्पष्टं हृदि स्थ मधिकारिणाम् ॥ ४ ॥
विवेकदं परं शास्त्रं ब्रह्मोपनिषदं महत् ।
दिव्यमार्ग समोपेतं मोक्षैक फललक्षणम् ॥ ५ ॥
तादृक्परिस्तुतं तस्मा जगदुद्धरणाय च ।
तदाद्य मुपदेक्ष्यामि यद्वेदै र्बहुभि स्स्थितम् ॥ ६ ॥
भुक्तिमोक्षप्रदं शुद्धं सरहस्यं महाफलम् ।
अष्टांग योग सिद्धानां ह्यागनिरतात्मनाम् ॥ ७ ॥
योगिना मधिकारस्स्या देकस्मिन् हृदयेशये ।
व्यामिश्रयाग मुक्तानां विप्राणां वेदवादिनाम् ॥ ८ ॥
समन्त्रेतु चतुर्व्यूहे त्वधिकारो नचान्यथा ।
त्रयाणां क्षत्रियादीनां प्रपन्नानांच तत्त्वतः ॥ ९ ॥
अमन्त्र मधिकारस्तु चतुर्व्यूहक्रियात्मके ।

सक्रिये मन्त्रचक्रेतु वैभवीये विलोकिनाम् ॥ १० ॥
ममता सन्निरस्तानां स्वकर्म निरतात्मनाम् ।
कर्मवाङ्मनसै स्सम्य ग्भक्तानां परमेश्वरे ॥ ११ ॥
चतुर्णा मधिकारोवै प्राप्ते दीक्षा क्रमे सति ।
एवं सम्प्रतिपन्नानां मन्त्रपूर्वं यथा स्थितम् ॥ १२ ॥
विधान मेक मूर्तीयं समाकर्णय साम्प्रतम् ।
प्रशस्ते विजने शुभे गन्धलिप्ते धरातले ॥ १३ ॥
सुधूपिते र्घ्यपुष्पाढ्ये वर्णचक्रं प्रसाध्यच ।
यस्मि न्प्रतिष्ठितं विश्व माब्रह्मभुवनान्तिकम् ॥ १४ ॥
येनो दितेन जगतः प्रभव स्समनन्तरम् ।
स्वात्म न्युपरते यस्मि न्प्रळय स्सम्प्रजायते ॥ १५ ॥
प्रेरकं चन्द्रसूर्याभ्यां सबाह्याभ्यन्तरन्तु यत् ।
नित्योदितं यदक्षस्थं वर्ण मीश्वरवाचकम् ॥ १६ ॥
यत्र स्थानविभागेन वागात्मा भगवान् स्थितः ।
अकाराद्यो विसर्गान्त स्सौरं चान्द्रं कळागणः ॥ १७ ॥
ह्रस्वदीर्घविभागेन नाभौ यत्र द्विरष्टकः ।
कादिभान्तो प्यरान्तस्थः प्राकृत स्तत्र संचयः ॥ १८ ॥
पृथिव्यादि प्रकृत्यन्त युग्मयोगेन लाङ्गलिन् ।
कलिना देहभृत्कालो नेमिगो नवलक्षणः ॥ १९ ॥
मकाराद्यो विसर्गान्तो यत्र पृथ्वीगण स्स्वयम् ।
कालवैश्वानर स्साक्षा न्मार्ताण्डायुतसन्निभः ॥ २० ॥
ज्वाला ऽ युतसहस्राढ्यो वर्णान्तो भगवान् स्थितः
आमध्या त्प्रथिपर्यन्तं नमोन्तावर्णसन्ततिः ॥ २१ ॥
उच्चार्या र्घ्यादिना भ्यर्च्य विद्याबीजंहि चक्रराट् ।
तत स्समुद्धरे न्मन्त्रं परमात्मनि वाचकम् ॥ २२ ॥

गळन्त ममृतप्रख्य मचिरा न्मोक्षसिद्धिदम् ।
अक्षस्थ मुद्धरे त्पूर्वं नेमे ष्षष्ठ मनन्तरम् ॥ २३ ॥

नाभिद्वितीयेना क्रान्तं द्वितीय मिद मक्षरम् ।
द्वितीयं दशसंयोगि (?) तदादौ चाष्टमा त्परम् ॥ २४ ॥

नाभे स्त्रयोदशोपेतं द्वितीय मिद मक्षरम् ।
अथ द्वितीयं नवमा न्नाभीतुर्या द्विनान्वितम् ॥ २५ ॥

द्वितीय मष्टमा द्वर्णं केवलं विद्धि पंचमम् ।
विज्ञानपाद मादाय त्र्यक्षरं तदनन्तरम् ॥ २६ ॥

आद्य मेकादशा द्वर्णं भिन्नं नाभ्यपरेणतु ।
नेमे स्तृतीयवर्णस्य तत स्तमुपरि न्यसेत ॥ २७ ॥

मन्त्रान्तं नवमं ह्येत दशमं मे निबोधतु ।
नाभिद्वितीयेना क्रान्तं प्राग्वर्णं च्चाष्टमारगम् ॥ २८ ॥

नेमे द्वितीयं तदनु नेमे रादाय चाष्टकम् ।
तदुद्देशा त्तृतीयंच स्थितं तत्पंचमोपरि ॥ २९ ॥

त्रयोदश मिदं विद्धि नवमा दपरं ततः ।
षष्ठस्य नेमिवर्णस्य चोर्ध्वं. तत्त्रितयं न्यसेत् ॥ ३० ॥

युक्तं नाभितृतीयेन ह्यथ षोडश मुच्यते ।
द्वितीयं दशमा द्वर्णा न्नाभ्येकादशसंयुतम् ॥ ३१ ॥

चैतन्याय पदं दद्या त्सनमश्च मतः परम् ।
द्वाविंशार्णो ह्ययं मन्त्रः पदै ष्षड्भि रलंकृतः ॥ ३२ ॥

तत्रैकार्णं पदं ज्ञानं चतुर्वर्णं पदं बलम् ।
षडक्षरंचा प्यैश्वर्यं वीर्यं पंचाक्षरं परम् ॥ ३३ ॥

चतुर्वर्णं पदं तेज श्शान्तं स्या द्व्यक्षरंच यत् ।
तेजो वीर्यं बलं शक्ति रैश्वर्यं ज्ञानमेवच ॥ ३४ ॥

हृगस्त्रं कवचं शैखं शिरोहृच्च यथाक्रमम् ।
मन्त्र स्समाधिविषये नानाभूमिजयेषुच ॥ ३५ ॥
निराकारो निरंगश्च स्मर्तव्यो ब्रह्मलक्षणः ।
तत्प्राप्त्युपाये प्रथमे यागहोमादिकेतु वै ॥ ३६ ॥
साकारं संस्मरे त्सांगं परिवारेण चावृतम् ।
आनीता व्यक्ततां येन स्वयं ज्ञानादयो गुणाः ॥ ३७ ॥
शश्व द्यागसमाप्त्यर्थं कर्मणा मनुकंपया ।
सोनंग स्संस्मृतो मन्त्रो भक्तिश्रद्धावशेनतु ॥ ३८ ॥
फलं यच्छति वै नूनं नित्यं सद्भावितात्मनां ।
प्राधान्येन क्रतोः स्थैर्यं मोक्षो यत्रा नुषंगतः ॥ ३९ ॥
तत्र तद्विघ्नशान्त्यर्थं मन्त्रार्थं विद्धि मन्त्रपम् ।
विपर्ययेतु नेत्रान्तो मन्त्रो यस्मा न्महामते ॥ ४० ॥
दृग्दृष्टिशुद्धमार्गाणां क विघ्ना श्शान्तचेतसाम् ।
स्वक मन्तर्गते तेज स्स्वातन्त्र्याच्च बहिष्कृतम् ॥ ४१ ॥
येन येन हि मन्त्रेण सच नेत्रान्वित स्स्मृतः ।
स्वप्रकाश स्त्वनुपमो येन येन हृदन्तरे ॥ ४२ ॥
सितासित स्समाकृष्टि स्सतु तद्वाचको सितः ।
अथ मन्त्रवरस्यास्य शृणुष्वा राधनं यथा ॥ ४३ ॥
सबाह्याभ्यन्तरावस्थं समार्थ ममलेक्षण ।
परिच्युतमल स्स्नात श्शुद्धवासा जितेन्द्रियः ॥ ४४ ॥
वाग्यतः पुष्पदर्भाद्यै र्द्वाराग्रस्थं पतत्रिपम् ।
सचक्रं पूजयित्वादौ संविशे द्भगवद्गृहम् ॥ ४५ ॥
उपार्जितं पुरस्ता द्वै यागोपकरणं महत् ।
तात्सर्वं दक्षिणे कृत्वा वामेतु करकं न्यसेत् ॥ ४६ ॥

गाळितेनाम्भसा पूर्णं मध्ये भद्रासनं न्यसेत ।
मृत्काष्टोपलधातूत्थ मेकद्वित्रिशतंतु वा ॥ ४७ ॥
चतुरश्र मथाष्टाश्रं चतुरश्रयुतंतु वा ।
चतुष्पाद्समायुक्तं चतुरावरणांकितम् ॥ ४८ ॥
मकरास्यमणाळन्तु प्रमाणेनो पलक्षितम् ।
तद्य श्चोत्तरस्यां वै चळं पक्ष्मान्तराश्रितम् ॥ ४९ ॥
शंखचक्रांकितं कुर्या ज्जलाधारं सुलक्षणम् ।
अथो पविश्य वेदाग्रे काष्ठजेवाऽजिनासने ॥ ५० ॥
बद्धपद्मासनः कुर्या न्न्यासं मन्त्रवरेणतु ।
अभिन्नं मस्तके तत्र दादित्या दपवन्नन्यसेत ॥ ५१ ॥
व्यापकत्वेन तदनु विन्यसे द्भिन्नलक्षणम् ।
अंगुष्ठद्वितया द्याव त्कनिष्ठाद्वितयावधि ॥ ५२ ॥
ज्ञानाद्यं वीर्यपर्यन्तं विन्यसे दंगपंचकम् ।
मूलव द्व्यापकत्वेन नेत्रमूर्ध्वंगुळीषुच ॥ ५३ ॥
आब्रह्मरन्ध्रा त्पादान्त मथ मन्त्रन्तु विग्रहे ।
ततस्तु हृदये ज्ञानं यत्तो भज्येत तत्र तत् ॥ ५४ ॥
ऐश्वर्यं शिरसो देशे यस्मा दुपरि तिष्ठति ।
प्राकृतं तात्विकं वापि सर्वत्र कमलेक्षण ॥ ५५ ॥
हार्दाग्ने रूर्ध्वगायांतु शिखायां शक्तिमन्त्रराट् ।
बलं चाखिलगात्राणां तद्गतं वायुना सह ॥ ५६ ॥
मूर्छितं सर्वगात्रै र्यत्तद्वीर्यं हस्तयो र्न्यसेत् ।
अन्तर्बाह्यस्वरूपं य त्प्राकृतध्वान्तशान्तिकृत ॥ ५७ ॥
तेज स्त त्तैजसे स्थाने न्यासकाले समस्यते ।
चतुःपंचनवद्वारे देहे देवगृहे पुरा ॥ ५८ ॥

न्यस्यैव मभिमानन्तु मन्त्राख्य मवलम्ब्यच ।
मनस्तु रस्तं कुर्या दक्षग्रामं बहि स्स्थितम् ॥ ५९ ॥
चित्तं बुद्धौ विनिक्षिप्य तां बुद्धिं ज्ञानगोचरे ।
ज्ञानभावनया कर्म कुर्या द्धै पारमार्थिकम् ॥ ६० ॥
चतु श्चक्रे नवद्वारे देहे देवगृहे पुरा ।
कण्ठकूपधरारूढं हृत्पद्मं य दधोमुखम् ॥ ६१ ॥
तत्कर्णिका वने मध्ये रूढमूर्ध्वमुखंतु यत् ।
शब्दव्यक्ति स्तदूर्ध्वेंतु स्थिताऽर्केन्द्वग्निलक्षणा ॥ ६२ ॥
त्रिदाग्निभास्वरा नाडी त्वव्यक्त ध्वनिविग्रहा ।
व्यक्तं चक्रत्रयस्योर्ध्वे वर्तते या महामते ॥ ६३ ॥
निस्सृता ब्रह्मरन्ध्रेण गता सूर्यपथात्परम् ।
वायुद्वारेण पाताळं भित्वा याता सुगोचरम् ॥ ६४ ॥
संकल्पविषय स्सर्वं स्तद्धन्यं प्रतितिष्ठति ।
सूत्रे मणिगणावद्ध न्मध्यनाडी ह्यत स्स्मृता ॥ ६५ ॥
लक्षस्थानेतु पूर्वोक्ते तस्या मभ्यन्तरेतु वै ।
सम्पुटे शशिसूर्याख्ये निमेषोन्मेषलक्षणे ॥ ६६ ॥
तत्रार्के चाब्ज मालम्ब्य परा वाग्भ्रमरी स्थिता ।
या सर्व मन्त्रजननी शक्तिश्शान्तामनो विभोः ॥ ६७ ॥
वदन्ति वर्णजं नादं शब्दब्रह्मेति यत्स्मृतम् ।
अकार पूर्वो हान्तश्च धारा सन्तान रूपधृक् ॥ ६८ ॥
नादावस्थान गगने देवोऽनन्तसमन्वितः ।
शान्त स्संवित्स्वरूपस्तु भक्तानुग्रह काम्यया ॥ ६९ ॥
अनौपम्येन वपुषा ह्यमूर्तो मूर्ततां गतः ।
विश्वमाप्यायन्कान्त्या पूर्णेन्दुयुत तुल्यया ॥ ७० ॥

वरदाभयदेनैव शंखचक्रांकितेनतु ।
त्रैलोक्यो द्धृति दक्षेण युक्तः पाणिद्वयेन तु ॥ ७१ ॥
रश्मिभि र्भास्करो यद्व त्समुद्रइव चोर्मिभिः ।
समूर्तिभि रमूर्ताभि रच्युताद्याभि रच्युतम् ॥ ७२ ॥
दीप्तिमद्भिरमूर्तैस्तु सुधाकल्लोलसंकुलैः ।
पूर्ण आभरणै स्सर्वै र्निर्विकारांग्रिविग्रहः ॥ ७३ ॥
ततः खाब्जकमध्यात्तु च्युतामूर्ध्वस्थितां स्मरेत् ।
गंगांभगवतो मूर्ध्नि तेनामृतजलेनतु ॥ ७४ ॥
अर्घ्याद्यखिलभोगानां कार्या वै शुभकल्पना ।
तैः क्रमात्प्रीणये द्देव माद्यन्तुर्यपदेस्थितम् ॥ ७५ ॥
प्रणवद्वितयं चोक्त्वा प्रीयतां मे परः प्रभुः ।
अथ कर्मात्म तत्त्वेतु कृतकृत्ये सति प्रभुः ॥ ७६ ॥
आस्ते विलाप्य स्वंरूपं नित्यं व्यक्ती कृतं च यत् ॥ ७६ ॥

इति श्रीपाञ्चरात्रे श्रीसात्त्वतसंहितायाम्

## द्वितीयः परिच्छेदः ॥ २ ॥

अथ तृतीयः परिच्छेदः ।

नारदः ।

पुनराह जगन्नाथः प्रसंगेन मुनीश्वराः ।
परमाराधनं प्राग्व त्वरस्य परमात्मनः ॥ १ ॥

श्रीभगवानुवाच ।

हृवर्ण कर्णिकायान्तु सुषुम्नाख्यपदेत्वधः ।
चतुर्धा प्रभवाख्येन क्रमेण तमजंयजेत् ॥ २ ॥
ज्ञानविद्या चतुष्केण यथा तदवधारय ।
वेदकत्वेन भगवान् ब्रह्मसंवलिताकृतिः ॥ ३ ॥
स्तम्बवत्कर्णिकामध्ये स्थित्वा वेद्यत्व मेतिच ।
स्वयमेवो पकाराय कर्मिणां ब्रह्मयाजिनां ॥ ४ ॥
प्राग्भागादुत्तरं याव द्गुण भेदेन लांगलिन् ।
विभजत्यात्मनाऽऽत्मानं वासुदेवः परः प्रभुः ॥ ५ ॥
अनुज्झित स्वरूपंस्तु प्राग्भागे षड्गुणात्मना ।
बलसंवलिते नैव ज्ञानेनास्तेऽथदक्षिणे ॥ ६ ॥
ऐश्वर्येणतु वीर्येण प्रत्यग्भागे प्रतिष्ठितः ।
तेज श्शक्त्या त्मना सौम्ये संस्थितः परमेश्वरः ॥ ७ ॥
यद्यप्यरूपो भगवान् व्यूहात्मा गुणलक्षणः ।
अत्रापि पूर्वमेवोक्तं रूप मस्यो पचर्यते ॥ ८ ॥
किन्तु द्वितीयमूर्तेर्वै शुभपाणितल द्वये ।
स्फुटो रेखामय श्शंख स्सुव्यक्तं लांगलं महत् ॥ ९ ॥
रम्येषुणा तृतीयस्य दक्षिणाभिहितः करः ।
तुर्यस्यासिवरेणैव शंखमाभ्यां करद्वये ॥ १० ॥
अवाङ्मुखः करवशा दूर्ध्ववक्त्र स्स्वभावतः ।
एतावता लक्षणेन व्यक्तीभावं गतेनच ॥ ११ ॥
भावस्थितिं निबध्नाति व्यूहेऽस्मिन् साधकस्यतु ।
सादृश्यात्षड्गुणत्वाच्च समत्वाच्च विशेषतः ॥ १२ ॥
शान्तत्वा न्निष्कळत्वाच्च न भेदो विद्यते यतः ।
गुणद्वय द्वयेनैव यद्यप्युक्तं पुरा मया ॥ १३ ॥

एकैकं भगवद्रूपं मुख्यवृत्त्या तथापिहि ।
चतुष्कमत्रशिष्टं य द्गुणानां समवस्थिता: [ ? ] ॥ १४ ॥
तद्भजेवा नुवृत्तिश्च - एकैकस्य च सर्वदा ।
एवं ज्ञात्वा स्मृतिं ब्राह्मीं स्वानन्दां सन्द्लक्षणाम् ॥ १५ ॥
ब्रह्मामृतमये भोगे योजयेत्तमसावृतः ।
विशुद्धबुद्ध्या देहान्ते सावशत्यमलं पदम् ॥ १६ ॥
अथ मन्त्र चतुष्कन्तु ब्रह्मषाड्गुण्यवाचकम् ।
कर्मिणां मोक्षदं शश्व त्पूर्वोद्दिष्टं निबोधतु ॥ १७ ॥
आदायाक्षगतं बीजं नाभिपूर्व मतः परम् ।
अरादेकादशात्पूर्वं तस्याधो विनिवेशिते ॥ १८ ॥
वर्णं नेमे स्तृतायं य त्तृतीय मिद मक्षरद् ।
द्वितीय मष्टमाद्वर्णं नाभे स्तुर्यादिनान्वितम् ॥ १९ ॥
ततस्तु नवमं नेमेः केवलं विद्धि पंचमम् ।
अष्टमादपरं वर्णं द्वितीयस्वर संयुतम् ॥ २० ॥
षष्ठमेत द्विजानीया त्सप्तमं दशमात्परम् ।
अथ द्वितीयदशमा दादायोर्ध्वेतु विन्यसेत् ॥ २१ ॥
अष्टमा त्तद्वितीयस्य मन्त्राणा मिद मष्टकम् ।
द्वितीया त्प्रथमं वर्णं मष्टमा दपरं ततः ॥ २२ ॥
[?] ताह्येकादशमोपेतं द्वितीयं नेमिमण्डलात् ।
पूर्व मेकादशा च्चतुर्द्रं ताद्दङ्नेमे स्तृतीयकम् ॥ २३ ॥
नेमिपूर्वश्च तदनु नाभे रेकादशांकितम् ।
नेमे ष्षष्ठ मथा दाय स्थितं तत्पंचमोपरि ॥ २४ ॥
ततो नाभिद्वितीयेन युक्तं नेमे स्तृतीयकम् ।
द्वितीयं केवलं नेमे रादायच महामते ॥ २५ ॥

कर्त्रे नमः पदं पश्चा द्योजये च्चतुरक्षरम् ।
एकविंशतिभि र्वर्णै रय म्मन्त्र उदाहृतः ॥ २६ ॥
अभिन्नः पदभेदेन भवे देकाधिकस्तु वै ।
प्राग्वर्णेन पदं पूर्वं पंचार्णं द्वितयं भवेत् ॥ २७ ॥
षडक्षरं तृतीयंतु चतुर्थं तद्वदेव हि ।
द्व्यक्षरं पंचमं विद्धि तद्व त्षष्ठं महामते ॥ २८ ॥
अथा परं महामन्त्रं द्वितीय मवधारय ।
यज्ज्ञात्वा नपुन र्जन्म भवत्याराधकस्य च ॥ २९ ॥
आद्याया क्षरमध्यस्थं नाभिपूर्वं मतः परम् ।
पूर्वं नेमेस्तु तस्यैव योज्यं नाभित्रयोदशम् ॥ ३० ॥
द्वितीया दपरं वर्णं सर्वशक्त्यात्मने पदम् ।
द्वितीयं द्वादशा द्वर्णं द्वितीया त्प्रथमं ततः ॥ ३१ ॥
पंचमंच यहिष्ठेभ्य स्त्रिनेता न्विद्धि केवलान् ।
नाभ्येकादशसंभिन्नं द्वितीयं चाष्टमा त्ततः ॥ ३२ ॥
ननोनमः पदयुतो मन्त्रश्चा [ ? ] शाक्षरः ।
अस्यैकार्णं पदं पूर्वं त्र्यक्षरं तदनन्तरम् ॥ ३३ ॥
षडक्षरं तृतीयन्तु चतुर्थं चतुरक्षरम् ।
द्वितीयं द्व्यक्षरं चान्य त्पदयो स्सम्प्रकीर्तनम् ॥ ३४ ॥
तृतीय मथ वक्ष्यामि मन्त्रं मन्त्रविदांवर ।
यज्ज्ञात्वा मानसीं शुद्धिं परा मभ्येति कर्मणाम् ॥ ३५ ॥
बीज मादाय मध्यस्थ माद्य मेकादशा त्ततः ।
नेमे स्तृतीयं तदध ऊर्ध्वेनाभ्यपरन्तु वै ॥ ३६ ॥
अथाद्य माष्टमाद्वर्णं द्वितीयं स्वरसंयुतम् ।
तद्वदेकादशादाद्यं वर्णमन्यं समाहरेत् ॥ ३७ ॥
दशमादपरं वर्णं नेमेरष्टकमन्ततः ।
युक्तंनाभि द्वितीयेन त्वाद्यं नेम्यक्षरन्तुयत् ॥ ३८ ॥

नाभित्रयोदशोपेत मादायदशमात्परम् ।
द्वितीयं नवमाद्वर्णं यत्तन्नाभ्यपरेणतु ॥ ३९ ॥
तत्संख्यं दशमाच्छुद्धं ततोबाह्यात्तु पञ्चमम् ।
नेमे द्वितीयं तदधो युक्तंनाभेः परेणतु ॥ ४० ॥
द्वितीयं दशमाद्वर्णं प्राणाय त्र्यक्षरंपदम् ।
ततस्त्वेकादशादाद्यं केवलंच समाहरेत् ॥ ४१ ॥
अथ नाभि द्वितीयेन युक्तं नेमेस्तृतीयकम् ।
नाभित्रयोदशोपेतं बहिष्ठे त्वपरन्ततः ॥ ४२ ॥
नेमेस्तृतीय स्योर्ध्वंतु नियमा दपरं न्यसेत ।
ततो नाभि द्वितीयेन युक्तं प्राङ्नेमिमण्डलात ॥ ४२ ॥
द्वितीय मथवैबाह्या त्सनमस्कंहि केवलम् ।
त्रयोविंशतिभिर्वर्णै रुपेतोह्येषमन्त्रराट् ॥ ४४ ॥
पदैः पूर्वोक्तसंख्यस्तु तेषां भेदोप्यधोच्यते ।
पूर्वमेकाक्षरंविद्धि द्वितीयंतु नवाक्षरम् ॥ ४५ ॥
तृतीयंद्व्यक्षरं चैव चतुर्थं त्र्यक्षरंस्मृतम् ।
षडक्षर मथोर्ध्वस्थं द्व्यक्षरन्तदनन्तरम् ॥ ४६ ॥
चतुर्थमधुनामन्त्रं निबोधगदतोमम ।
येन विज्ञात मात्रेण संविदुत्पद्यते परा ॥ ४७ ॥
आदायादौ यदक्षस्थं नाभिपूर्वमनन्तरम् ।
तत स्तृतीया दपरं वर्ण मादायलांगलिन् ॥ ४८ ॥
नेमेर्द्वितीयं तस्या ध स्तदधो नाभि पंचमम् ।
द्वितीयमष्टमाद्वर्णं तत्संख्यं नेमिमण्डलात् ॥ ४९ ॥
आदायैतद्द्वयंकुर्या द्युक्तं नाभ्यपरेणतु ।
अथ नाभितृतीयेन युक्तं बाह्यान्त पंचमम् ॥ ५० ॥

आद्यात्पूर्वमथादाय नाभिसप्तम संयुतम् ।
द्वितीयमष्टमाद्वर्णं द्वितीयं नेमि मण्डलात् ॥ ५१ ॥

आदायाभ्यां नियोक्तव्यं द्वितीयं नाभिगोचरात् ।
अथ द्वितीयं दशमा त्केवलं वर्ण माहरेत् ॥ ५२ ॥

द्वितीय मष्टमा द्वर्णं तदूर्ध्वं दशमा त्परम् ।
नाभिद्वितीय मस्यैव योजये त्तदनन्तरम् ॥ ५३ ॥

ततो नेमिद्वितीयन्तु केवलं वर्ण माहरेत् ।
अथ नाभे र्यदादिस्थं प्राग्वर्णं दशमादरात् ॥ ५४ ॥

तदधो द्वितीयं बाह्या त्प्रथिवर्ण मनन्तरम् ।
युक्तं नाभिद्वितीयेन त्वादाय तदनन्तरम् ॥ ५५ ॥

नेमिद्वितीयसंख्यंय न्नमस्कारपदं ततः ।
अष्टादशाक्षरो ह्येष द्व्यधिकः पदसंख्यया ॥ ५६ ॥

एकार्णं पदमाद्यन्तु द्वितीयं चतुरक्षरम् ।
पंचाक्षरं तृतीयन्तु चतुर्थं चतुरक्षरम् ॥ ५७ ॥

तथैव पंचमं विद्धि ह्यन्तस्थद्व्यक्षरं स्मृतम् ।
यत्र यत्र पदानांच वर्णाधिक्य मुदाहृतम् ॥ ५८ ॥
तत्रादौ नाभिपूर्वन्तु व्याहृत्या थं पदं न्यसेत् ॥ ५८ ॥

इति श्रीपाञ्चरात्रे श्रीसात्वतसंहितायाम्

सुषुप्तिव्यूहमन्त्रोद्धारो नाम

## तृतीयः परिच्छेदः ॥ ३ ॥

## अथ चतुर्थः परिच्छेदः ।

नारदः ।

अथाह भगवान् देवो रक्तराजीव लोचनः ।
प्रसन्न स्सुप्रसन्नास्यो विधान मपरं द्विजाः ॥ १ ॥

श्रीभगवानुवाच ।

येनात्मा स्वप्नएवात्मा कर्मिणा मनुकंपया ।
क्रमेण व्यक्ततां नीतो वाग्वर्गकमलोपरि ॥ २ ॥

अभिन्नपूर्णषाड्गुण्य विभवेनो पबृंहितम् ।
भाभि स्सितादिभि र्दीप्त मभिन्नाभि र्निरन्तरम् ॥ ३ ॥

अवलोक्यामलं देव मुदितं स्वेन तेजसा ।
कर्णिकाग्रं समाश्रित्य दिव्यं मन्त्रवरं पुनः ॥ ४ ॥

पश्येत्स्वयं स्वशक्त्यावै काले नालक्ष्य मूर्तिना ।
संहरन्तं च तद्रूपं व्यक्तं पूर्वोक्त लक्षणम् ॥ ५ ॥

एवं मन्त्रमयं देव मुपसंहृत्य लांगलिन् ।
आमूलात्कर्णिकाग्रंच सम्पूर्यास्ते स्वतेजसा ॥ ६ ॥

ब्रह्मयूप स्वरूपेण त्वाक्रम्य स्वम्महामते ।
सौम्यमूर्ति चतुष्कन्तु सर्वदिक्प्रसृतंचयत् ॥ ७ ॥

प्राच्यांसितेनवपुषा सूर्यकान्त्यधिकेनतु ।
व्यक्तिमभ्येति भगवान् वासुदेवा त्मना स्वयम् ॥ ८ ॥

पद्मराग समानेन तेजसा समनन्तरम् ।
उदेति दक्षिणस्यां वै प्रभुस्संकर्षणात्मना ॥ ९ ॥

घर्मांशुरश्मिसन्तप्त शातधामा धिकेनतु ।
रूपेण पश्चिमस्यां च व्यक्तं प्रद्युम्न संज्ञया ॥ १० ॥

शरद्गगन संकाश वर्णेन परमेश्वरः ।
समास्त उत्तरस्यां चा प्यनिरुद्धात्मनाततः ॥ ११ ॥

संस्थान मादि मूर्तेर्वै सर्वेषान्तु समंस्मृतम् ।
सूर्यकोटि प्रभास्सर्वे तेजसा कमलेक्षणाः ॥ १२ ॥

दन्तज्योत्स्ना वितानैस्तु प्रकटीकृत दिङ्मुखाः ।
पूर्णचन्द्रा युताकार मुक्ताहारा द्यलंकृताः ॥ १३ ॥

लसत्पीयूष सदृशै स्स्वाम्बरै स्स्रग्वरैर्युताः ।
वरायुधो द्यतिकरा स्स्वकैश्चिह्नै रनुज्झिताः ॥ १४ ॥

क्षोमोत्थितैस्तुकल्हारैः पादपद्म तलाङ्किताः ।

विनम्रजनसन्ताप शमनव्याप्तृतानना: ॥ १५ ॥

करुणा पूर्णहृदया जगदुद्धारणोद्यताः ।
स्वदेहतेज स्सम्भूत ज्वालामण्डल मध्यगाः ॥ १६ ॥
एव मेवैषभगवान् संपूज्यः प्रा कमयोगतः ।
एकैकेनतु भागेन प्रभवेन क्रमेणतु ॥ १७ ॥

पुनरेवा निरुद्धादी न्प्राङ्मूर्त्यन्तं महामते ।
क्रमान्निरन्तरैर्भोगै रभ्यर्च्यपरमेश्वरम् ॥ १८ ॥

प्रणवद्वितयेनैव शुद्ध्यातुसुविशुद्धया ।
अप्ययाख्येन विधिना ह्याग निरतै र्बुधैः ॥ १९ ॥

तथा भिन्नतनो र्मन्त्रं देवस्या स्य महात्मनः ।
विशाखयूप संज्ञस्य वक्ष्ये विद्याविवेकदम् ॥ २० ॥

वर्णमक्षस्थमादाय त्वाद्यमेकादशा त्ततः ।
भिन्ननाभि द्वितीयेन तृतीयं नेमिमण्डलात् ॥ २१ ॥

द्वितीयं केवलं बाह्या त्तेजो रूपायवैपदम् ।
ततस्त्वेकादशा त्पूर्वं केवलन्तु समाहरेत् ॥ २२ ॥
तृतीयमक्षरं बाह्या द्युक्तं नाभ्यपरेण तु ।
दशमा दपरं पूर्णं पूर्वमेकादशात्ततः ॥ २३ ॥
एकादश स्वराक्रान्त मुद्धरे त्तदनन्तरम् ।
ततो नाभिद्वितीयेन युक्तं प्रत्यक्षरं हि यत् ॥ २४ ॥
केवलं द्वितीयं बाह्या दाद्यमेकादशात्तथा ।
नेमे स्तृतीयं तदनु द्वितीयं स्वरसंयुतम् ॥ २५ ॥
दशमादपरं शुद्धं पूर्वमेकादशा त्ततः ।
नाभ्येकादश संयुक्तं तदन्ते ऽ मल लोचन ॥ २६ ॥
नाभे स्तृतीय संयुक्तं प्रथिवर्णं समाहरेत् ।
अथ नाभि द्वितीयेन युक्तं यत्पर मष्टमात् ॥ २७ ॥
नेमि द्वितीयं तदनु नमस्कार समन्वितम् ।
चतुर्विंशतिभि र्वर्णै र्युक्तो मन्त्रो ह्ययं महान् ॥ २८ ॥
प्रणवेन पदं चास्य पूर्वमेकाक्षरं स्मृतम् ।
द्वितीयं त्र्यक्षरं प्रोक्तं पंचार्णं तदनन्तरम् ॥ २९ ॥
षडक्षरं चतुर्थन्तु सप्तार्णं चात्र पंचमम् ।
पदन्तु द्व्यक्षरं षष्ठं मन्त्रस्यास्य महामते ॥ ३० ॥
नानामन्त्रस्वरूपेण ह्यादिदेवः परो विभुः ।
आदि मध्यावसानेषु स्थित स्सर्वस्य सर्वदा ॥ ३१ ॥
चतुर्व्यूहचतुष्के स्थे शान्तादि व्यक्तलक्षणे ।
प्राधान्येन त्रयाणांच देवानामवतिष्ठते ॥ ३२ ॥
यथाम्बरस्थ स्सविता त्वेकएव महामते ।
जलाश्रयाणिचाश्रित्य बहुत्वं सम्प्रदर्शयेत् ॥ ३३ ॥

एवमेकोऽपि भगवा न्नानामन्त्राश्रयेषुच ।
तुर्यादिपद संस्थेषु बहुत्व मुपयातिच ॥ ३४ ॥
अनुग्रहार्थं भविनां नानाश्रद्धावशेनतु ।
चतुष्क मथ मन्त्राणां निबोधगदतो मम ॥ ३५ ॥
सितादिवर्णव्यक्तीनां वाचकत्वेन वै क्रमात ।
अक्षस्थं नाभिपूर्वश्च वर्णं यद्दशमा त्परम् ॥ ३६ ॥
नेमिपूर्व मथो नाभे स्त्रयोदशसमन्वितम् ।
द्वितीयं द्वादशा द्वर्णं द्वितीया त्परमं ततः ॥ ३७ ॥
पंचमं च बहिष्टेभ्य स्त्रीनेता न्विद्धि केवलान् ।
ततो ऽष्टमात् द्वितीयन्तु नाभ्येकादशभेदितम् ॥ ३८ ॥
पंचार्णं वासुदेवाय पदंच तदनन्तरम् ।
त्रयोदशाक्षरो ह्येष प्रथमं परिकीर्तितः ॥ ३९ ॥
क्रमेण वक्ष्या म्यन्येषा मुद्धारंतु यथा स्थितम् ।
अक्षस्थ मक्षरं नाभे द्वितीयं तदनन्तरम् ॥ ४० ॥
पूर्वमन्त्रानुसारेण ततो दद्या त्पदत्रयम् ।
अथात्र पंचदशमं नाभे रोंकारपूर्वकम् ॥ ४१ ॥
पदत्रयेण तेनैव संयुक्तं विद्धि मन्त्रपम् ।
अथ षोडशसंख्यं य न्नाभेः प्रणवपूर्वकम् ॥ ४२ ॥
पूर्वोक्तलक्षणानान्तु पदानां प्राग्विवेश्यते ।
अस्मा न्मन्त्रत्रया द्विद्धि द्वयं प्राङ्मन्त्रसंख्यया ॥ ४३ ॥
एकएकार्णरहितः पदभेद मत श्शृणु ।
पदद्वयन्तु सर्वेषा माद्य मेकाक्षरं स्मृतम् ॥ ४४ ॥
ऽयक्षरं च तृतीयन्तु चतुर्थं चतुरक्षरम् ।
पंचाक्षरं पंचमं वै त्रयाणां [illegible] ॥ ४५ ॥

तदेकस्य चतुर्वर्ण प्रद्युम्नाख्यस्य लांगलिन् ।
एवं स्वप्नपदस्थस्य समासा त्परिकीर्तितम् ॥ ४६ ॥
ध्यानार्चनं समन्त्रंच भक्तानां हितकाम्यया ॥ ४८ ॥

इति श्रीपांचरात्रे श्रीसात्वतसंहितायाम्

## ॥ चतुर्थः परिच्छेदः ॥

## ॥ अथ पंचमः परिच्छेदः ॥

नारदः ।

अथ विप्रवराभूयः प्राह सर्वेश्वरो हरिः ।
व्यामोह विनिवृत्त्यर्थं भविनां सीरिणे स्फुटम् ॥ १ ॥

श्री भगवानुवाच ।

अनन्त सरसि क्षार्णे विश्रान्तं य न्महा मते ।
अकाराक्षर मूलन्तु नित्यं सर्वाश्रयाम्बुजम् ॥ २ ॥
अकाराक्षर नाळन्तु शेष सर्वर्णपल्लवम् ।
दिगष्टकं समाश्रित्य यत्त त्तिष्ठति चक्रवत् ॥ ३ ॥
तत्पत्रमध्ये भगवान् जाग्रत्संज्ञे पदे त्वथ ।
यष्टव्यो भावनीयश्च यथा त दधुनोच्यते ॥ ४ ॥
परं प्रणवबीजेन सम्पूर्ण स्वेन तेजसा ।
स्थित स्वकर्णिको र्ध्वाञ्च केसरान्तं निरीक्ष्यच ॥ ५ ॥

ततः प्रणव पूर्वात्तु ब्रह्मबीज चतुष्टयात् ।
कदम्बपुष्पसदृशं मरीचिशत संकुलात ॥ ६ ॥
दिक्क्रमेणादितो ध्याये द्विभोर्मूर्तेश्चतुष्टयम् ।
सुव्यक्त लक्षणं मात्रं विभावेनावृतं बहिः ॥ ७ ॥
स्फुलिंगकण तुल्येन समुद्भूतेन वैपरात् ।
वाचकान्त निविष्टेन व्यक्तता मागतेनच ॥ ८ ॥
तत्राद्यं भगवद्रूपं हिमकुन्देन्दुकान्तिमत् ।
चतुर्भुजं सौम्यवक्त्रं पुण्डरीकनिभेक्षणम् ॥ ९ ॥
पीतकौशेयवसनं सुवर्णध्वज शोभितम् ।
मुख्यदक्षिणहस्तेन भीताना मभयप्रदम् ॥ १० ॥
विद्याकोशस्तु वामेन संगृहीतश्च शंखराट् ।
पृष्टगेह्यपरस्मिंश्च प्रोथतो दक्षिणेत्वरी ॥ ११ ॥
तथा विधे गदा वामे निषण्णा वसुधातले ।
सिन्दूरशिखराकार मेकवक्त्रं चतु र्भुजम् ॥ १२ ॥
अतसीपुष्पसंकाश वालोभृत्ताळलांछितम् ।
मुख्येन पाणियुग्मेन तुल्यमाद्यस्य वै विभोः ॥ १३ ॥
सीरं चक्रंच हस्तेस्य मुसलन्तु गदाकरे ।
प्रावृण्णिशासमुदित खद्योतचय दीधितिम् ॥ १४ ॥
रक्तकौशेयवसनं मकरध्वज शोभितम् ।
एकवक्त्रं चतुर्बाहुं तृतीयं परमेश्वरम् ॥ १५ ॥
मुख्य हस्तद्वयं चास्य प्राग्वद्ध्येयं महामते ।
वामे परस्मिन् शार्ङ्गञ्च दक्षिणे बाणपंचकम् ॥ १६ ॥
अञ्जनाद्रि प्रतीकाशं सुसितम्बर वेष्टितम् ।
चतुर्भुजं विशालाक्षं मृगलांछन भूषितम् ॥ १७ ॥

आदिवत्पाणि युगळ माद्यमस्यापि कीर्तितम् ।
दक्षिणादि क्रमेणाथ द्वाभ्यां वै खड्गखेटकौ ॥ १८ ॥

वनमाला धरास्सर्वे श्रीवत्सकृतलक्षणाः ।
शोभिताः कौस्तुभेनैव रत्नराजेन वक्षसि ॥ १९ ॥

किरीट मकुटैरम्यै र्हार केयूर नूपुरैः ।
ललाट तिलकै श्चित्रै स्स्फुरन्मकर कुण्डलैः ॥ २० ॥

स्रग्वरै र्विविधै र्माल्यैः कर्पूराद्यै र्विलेपनैः ।
रम्यैरलंकृताश्चैव भावनीया स्सदैवहि ॥ २१ ॥

पुनरप्ययथोगेन प्रागुदङ्मध्यमेदळे ।
सितकृष्णेन वपुषा चानिरुद्धं स्मरे त्प्रभुम् ॥ २२ ॥

उदक्पश्चिममध्यस्थे प्रद्युम्नं भावयेच्छदे ।
रूपेण कृष्णपीतेन ह्यप्ययावसरेतुवै ॥ २३ ॥

प्रत्यग्दक्षिणमध्यस्थे पीतरक्त वपुर्धरम् ।
स्मरे त्संकर्षणं देवं प्रतिस्रोतः क्रियाविधौ ॥ २४ ॥

मध्ये प्राग्दक्षिणस्यां च सितरक्तेन तेजसा ।
वासुदेवो जगन्नाथो भावनीयो महामते ॥ २५ ॥

अतिशुद्धा शयत्वेन स्फटिकोपलवद्विभुः ।
स्थानभेदं समासाद्य सचकान्ति द्वयात्तुवै ॥ २६ ॥

गृह्णातिशबळं रूप मुपसंहार लक्षणम् ।
क्रमशोथ चतुर्णांवै वक्ष्ये मन्त्रगणं शृणु ॥ २७ ॥

अक्षान्तर्गत मादाय नाभेः पूर्व मतः परम् ।
भिन्नेनाभि द्वितीयेन नेमिपूर्वमतः परम् ॥ २८ ॥

नाभिपंचमसंयुक्तं दशमा त्प्रथमन्ततः ।
तृतीयंच द्वितीयंच नेमेरादाय चांकयेत् ॥ २९ ॥

नाभिद्वितीयबीजेन नवमा दपरं ततः ।
तदधोविनियोक्तव्यं द्वितीयं द्वादशात्तु वै ॥ ३० ॥

पंचमेनाथ वै नाभे र्युक्तं कुर्या दनन्तरम् ।

अष्टमादपरं शुद्धं नेमिपूर्वं तथाविधम् ॥ ३१ ॥

युक्तंनाभि द्वितीयेन द्वितीयं नेमिमण्डलात् ।
भूय स्तत्केवलं दद्या त्पदं योगेश्वराय वै ॥ ३२ ॥
तदन्ते चक्रिणे शठद्र मथ नेमे यदष्टकम् ।
पश्चिमेनान्वितं नाभे स्तदन्ते विनिवेश्यच ॥ ३३ ॥
शुद्ध मेकादशा त्पूर्वं माद्यं तदनु चाष्टमात् ।
नेमे स्तृतीयेना क्रान्त ध्वजायाथ पदं न्यसेत् ॥ ३४ ॥
भिन्न मेकादशा त्पूर्वं नाभितुर्येण वै ततः ।
अष्टमा दपरं शुद्धं पंचमं नेमिमण्डलात् ॥ ३५ ॥
द्वितीय स्वरसंयुक्तं ससेथ व्यक्षरं (?) पदम् ।
वासुदेवाय तदनु सनमस्कं पदं भवेत् ॥ ३६ ॥
षट्त्रिंशदक्षरो मन्त्रो भेद स्तस्याधुनो च्यते ।
पद मेकादशार्णन्तु प्रथमं परिकीर्तितम् ॥ ३७ ॥
पंचाक्षरं द्वितीयन्तु तृतीयं त्र्यक्षरं स्मृतम् ।
षडक्षरं चतुर्थन्तु पंचार्णं पचमंतु वै ॥ ३८ ॥
षष्ठं सप्ताक्षरं विद्धि पदं पदविदां वर ।
प्रणवान्ते त्वथाद्याय द्वितीयं नाभिमण्डलात् ॥ ३९ ॥
चतुर्दशेन वै नाभे र्युक्तं नेम्यष्टकं ततः ।
द्वितीयं दशमा च्छुद्ध मथ भूय स्समा हरेत् ॥ ४० ॥
तदधो नवमा दन्तं नाभे स्तुर्यादिनान्वितम् ।
एकादशस्वराक्रान्तं द्वितीयं दशमा त्ततः ॥ ४१ ॥

बाह्या दथाष्टमं नाभे युक्तं पंचदशेनतु ।
केवलं पंचमं नेमे द्वितीयं चाष्टमा त्ततः ॥ ४२ ॥
नेमे स्तृतीयेनाक्रान्तं वर्ण मेत त्समाहरेत् ।
युक्तं नाभे स्तृतीयेन प्रागरा त्प्रथमन्तु वै ॥ ४३ ॥
द्वितीयं दशमा द्वर्णं नाभे रेकादशांकितम् ।
पंचाक्षरं पदं दद्या त्तदन्ते तालकेतवे ॥ ४४ ॥
भूय स्तदवसानेतु पंचार्णं नीलवाससे ।
प्रथमा त्प्रथमं चाथ द्वितीय स्वरसंयुतम् ॥ ४५ ॥
केवलं नेमिपूर्वन्तु चाद्य मेकादशा त्ततः ।
बहिष्टेभ्य श्चतुर्थन्तु द्वाभ्यां नाभेः परं न्यसेत् ॥ ४६ ॥
द्वितीयं केवलं बाह्या त्संकर्षणाय वै पदम् ।
तृतीयं प्रथमं नेमे रादायाकारसंयुतम् ॥ ४७ ॥
द्वितीय मपि वै बाह्या च्चतुर्द्धं तदनु वै नमः ।
षट्त्रिंशाक्षरसंयुक्त स्त्वयं मन्त्रो महामते ॥ ४८ ॥
षड्वर्णं पद मस्याद्यं पंचार्णं तदनन्तरम् ।
दशा क्षरं तृतीयन्तु त्रीणि पंचाक्षरा ण्यतः ॥ ४९ ॥
अथा दायाक्षरं बीजं नाभेः पंचदशा त्ततः ।
शार्ङ्गधृते पदं दद्या च्चतुर्वर्ण मतःपरम् ॥ ५० ॥
नेमिपूर्व मथादाय प्रागरा त्प्रथमं ततः ।
तृतीयंच बहिष्टेभ्यः पदं त्र्यर्णं ध्वजाय वै ॥ ५१ ॥
तत स्तृतीयं बाह्यात्तु प्रथमा त्प्रथमं ततः ।
तदधो विनियोक्तव्यं द्वितीयं वर्ण मष्टमात् ॥ ५२ ॥
द्वितीय स्वरसंयुक्त मथ बाह्यात्तु पंचमम् ।
अष्टमन्तु तदुद्देशा त्केवलं पुनरेव तत् ॥ ५३ ॥

नाभे रेकादशा क्रान्तं षडक्षर मतःपरम् ।
पदं सनत्कुमाराय पंचाक्षर मनन्तरम् ॥ ५४ ॥

पदं जगत्प्रियायेति प्रद्युम्नाय नम स्ततः ।
चतुस्त्रिंशाक्षर स्सोयं मन्त्र श्शृणु पदान्यपि ॥ ५५ ॥

आद्यं षडक्षरं ज्ञेयं द्वितीयं तद्वदेव हि ।
पंचाक्षरं तृतीयन्तु चतुर्थंतु षडक्षरम् ॥ ५६ ॥

पंचार्णं पंचमं विद्धि षड्वर्णं षष्ठमेव हि ।
अक्षस्थं षोडशं नाभे द्वितीयं दशमात्तु वै ॥ ५७ ॥

केवलं ह्यथ तेनैव चाक्रान्तं नवमा त्परम् ।
अथादायच तस्यान्ते प्रथमा त्प्रथमं परात् ॥ ५८ ॥

युक्तं नाभिद्वितीयेन वर्ण मेकं महामते ।
वर्णद्वयं पदस्यादौ तदेवान्ते ऽस्य वै पुनः ॥ ५९ ॥

अथ द्वितीयं नवमा त्प्रथमा त्प्रथमं ततः ।
तृतीय मथ वै नेमे द्वितीय स्वरसंयुतम् ॥ ६० ॥

द्वितीयं केवलं बाह्या त्सप्तमं नाभिमण्डलात ।
अथ षष्ठेन वै नेमे राक्रान्तं द्वितीयं न्यसेत ॥ ६१ ॥

प्राग्वर्णं दशमा न्नेमेः पंचमस्योर्ध्वगंत्वथ ।
चतुर्था दपरं वर्णं द्वितीयं नेमिमण्डलात् ॥ ६२ ॥

द्वाभ्यां नाभिद्वितीयन्तु योजये त्तदनन्तरम् ।
दशमा दपरं वर्णं तृतीय स्वरसंयुतम् ॥ ६३ ॥

तृतीयमथवैनेमे र्नाभि पंचम संयुतम् ।
द्वितीय स्वर संयुक्तं द्वितीयं नवमादरात् ॥ ६४ ॥

अस्यैवा थो नियोक्तव्यं दशमा त्प्रथमं हि यत ।
शुद्धंनेमि द्वितीयन्तु पदं त्वसित वाससे ॥ ६५ ॥

विष्वक्सेनायतदनु नमस्कार समन्वितम् ।
द्वात्रिंशार्णो ह्ययंमन्त्रः पदभेदेन वैपुनः ॥ ६६ ॥
एकाधिकस्तु भवति पदान्यथ निबोधमे ।
द्व्यक्षरन्तु पदं पूर्वं द्वितीयन्तु नवाक्षरम् ॥ ६७ ॥

त्रीणिपंचाक्षराण्यन्यत् षष्ठं सप्ताक्षरं स्मृतम् ।
अप्ययावसरे प्राप्ते स्मरणेचार्चने विभोः ॥ ६८ ॥

शृणुमन्त्र चतुष्कन्तु पुनरन्य त्समासतः ।
आद्य मेकादशाद्वर्णं पञ्चम स्वर संयुतम् ॥ ६९ ॥
युक्तं स्वरेण तेनैव तृतीयं नेमि मण्डलात् ।
द्वितीय स्वर संयुक्त मथवाह्यास्तु सप्तमम् ॥ ७० ॥

द्वितीयं केवलं नेमे राद्यन्ते प्रणवोनमः ।
शुद्धन्तथा ष्टमंवाह्यात् द्वितीयमथ चाष्टमात् ॥ ७१ ॥
अथोनेमि द्वितीयेन युक्तं नाभ्यपरेणतु ।
केवल द्वितीयं बाह्या न्नमस्कार मतः परम् ॥ ७२ ॥

अथाक्षरं नाभिपूर्वं द्वितीयं तृतीयादरात ।
तदधो द्वितीयं बाह्या न्नाभिपञ्चम संयुतम् ॥ ७३ ॥
अथनाभि द्वितीयेन युक्तं यत्परमाष्टमात् ।
द्वितीयं केवलं बाह्या न्नमस्कारं ततः परम् ॥ ७४ ॥

अक्षरस्थ बीजं तदनु द्वितीयं द्वादशादरात ।
द्वितीयात्प्रथमं चाथ पञ्चमं नेमिमण्डलात ॥ ७५ ॥

केवलं त्रितयं ह्येतत द्वितीयं च तथाष्टमात् ।
एकादश स्वराक्रान्तं वासुदेवाय वै नमः ॥ ७६ ॥

सप्ताक्षरस्तु प्राङ्मन्त्रो द्वितीयस्तु षडक्षरः ।
पूर्वतुल्य स्तृतीयस्तु चतुर्थो द्वादशाक्षरः ॥ ७७ ॥

पदभेद विनिर्मुक्त मेतन्मन्त्र चतुष्टयम् ।
गोपनीयं प्रयत्नेन विधिज्ञैः सिद्धिमीप्सुभिः ॥ ७८ ॥

एवं ज्ञात्वा ऽमृतमयै र्भोगैस्तोष्यश्च पूर्ववत् ।
वैभवीयै र्वृतोदेवै श्चतुर्मूर्ति रधोक्षजः ॥ ७९ ॥

चतुरंगा दयं चक्रा च्चातुरात्म्यस्यवै विभोः ।
इति मन्त्रगणः प्रोक्त स्सरहस्य स्समासतः ॥ ८० ॥
अभेदेनादिमूर्तेर्वै संस्थितं वटबीजवत् ।
सर्वक्रियाविनिर्मुक्त मुत्तमं परमार्थतः ॥ ८१ ॥

चातुरात्म्यं तदाद्यं वै शुद्ध संविन्मयं महत् ।
वह्न्यर्केन्दु सहस्राभ मानन्दास्पद लक्षणम् ॥ ८२ ॥

बीजं सर्वक्रियाणां य द्विकल्पानां यदास्पदम् ।
चातुरात्म्यन्तु तद्विद्धि द्वितीय ममलेक्षण ॥ ८३ ॥

नित्यं नित्याकृतिधरं तेजसा सूर्यवर्चसम् ।
भिन्नं सितादिभेदेन चोर्ध्वाय स्संस्थितेनच ॥ ८४ ॥

कैवल्य भोगफलदं भवबीज क्षयंकरम् ।
चातुरात्म्यं तृतीयन्तु सुधा सन्दोह सुन्दरम् ॥ ८५ ॥

स्थित्युत्पत्ति प्रळयकृ त्सर्वोपकरणान्वितम् ।
प्रकृतिं स्वामधिष्ठाय समुदे त्यस्तमेतिच ॥ ८६ ॥

चतुर्थं विद्धि तद्यस्य विश्वं तिष्ठति शासनात् ।
धत्ते सितादिकं रूपं चतुर्धा य स्कृते युगे ॥ ८७ ॥

रक्ताद्यं सितनिष्ठश्च त्रेतायांहि महामते ।
पीतं कृष्णं सितं रक्तं सम्प्राप्ते द्वापरे युगे ॥ ८८ ॥

कलौ कृष्णं सितं रक्तं पीतश्चानुक्रमेण तु ।
युगसन्ध्या चतुष्केतु बिभर्ति परमेश्वरः ॥ ८९ ॥

विभिन्नमूर्तिसामान्यं रूपं यत्त त्रिबोधमे ।
सितरक्तं कृतान्तेतु रक्तपीत मतः परम् ॥ ९० ॥
पीतकृष्णंच तदनु कृष्णशुक्लमनन्तरम् ।
भेदः माशुदितै ज्ञेय आयुधाम्बर लांछनैः ॥ ९१ ॥
समत्या दन्यथांकेन विभागो ऽत्रावधार्यते ।
युगाब्ददिनरात्रयर्ध प्रहराणां क्रमेणतु ॥ ९२ ॥
विभागकल्पनं कृत्वा नित्य मालक्ष्य वै प्रभुम् ।
देहेऽस्मि न्मूर्ध्नि हृदये नाभौतु तदधः पुनः ॥ ९३ ॥
तस्मा दामूर्धपादान्तं भूतये मुक्तये ऽन्यथा ।
ग्रीवांस जानुगुल्फेषु स्मरे त्सन्ध्युक्तलक्षणम् ॥ ९४ ॥
सृष्टिसंहारयोगेन य स्स याति परां गतिम् ।
इत्येकमूर्तं र्व्यूहानां विभवस्या खिलस्यच ॥ ९५ ॥
अवतार स्तथाध्यान मर्चनं मन्त्रपूर्वकम् ।
स्वपद स्थान भेदेन प्रोक्त मेक समाधिना ॥ ९६ ॥
विशेषोप्यथ भेदाख्य स्त्ववतार पुरस्सरः ।
भाव स्स्थितिविधौचैव सर्वेषामधुनोच्यते ॥ ९७ ॥
षाड्गुण्यमादिदेवाद्यं चातुरात्म्य मलाञ्छनम् ।
सृष्टयेत्रितयंह्येत त्सामर्थ्यं पारमेश्वरम् ॥ ९८ ॥
लोलीभूत मभेदेन स्मरेत्तुर्यात्मना पुरा ।
नित्योदितंच सुपदे स्थित मस्पन्दलक्षणम् ॥ ९९ ॥
अथार्चितुं यमिच्छेत्तु विशेष व्यक्तिलक्षणम् ।
संकल्प्यतं स्वबुद्ध्यातु तत्कालसमनन्तरम् ॥ १०० ॥
ध्रुवा सामर्थ्य शक्तिर्वै स्पन्दतामेति च स्वयम् ।
सूतेऽग्निकणवन्मन्त्रं यत्रमन्त्री कृतास्पदः ॥ १०१ ॥

तमागत मिवाकाशा त्तारकं कर्णिकान्तरे ।
आवर्थेदथ तन्मध्या दाराध्य मुदितं स्मरेत् ॥ १०२ ॥
आदिमूर्ति स्वरूपेण चतुर्मूर्ति मयेनवा ।
पृथक्त्वेन चतुमूर्ते रेकैका कृतिनाप्यथ ॥ १०३ ॥
अथवावैभवीयेन नानाकृत्या त्समतातुवै ।
अंगसंघं तदीयंच न्यसे त्पद्म दळाश्रितम् ॥ १०४ ॥
परिवारं वहिः पद्म त्स्वकं यो यस्य विद्यते ।
सशक्तिकस्य मन्त्रस्य दिक्क्रमेण हृदादि यत् ॥ १०५ ॥
न्यसेत्केसरजालस्थं पत्रमध्येतु शक्तयः ।
निश्शक्तिको निरंगोयो मन्त्रनाथस्तु केवलः ॥ १०६ ॥
शब्दमात्रेण तद्भूयो दळजात गतं यजेत् ।
इत्येव मन्तर्यागस्तु देवस्य परमात्मनः ॥ १०७ ॥
समासेनोदित स्सम्य गथ मूर्तेयजेद्बहिः ।
वेद्यां पुराहृतै र्भोगै र्बिम्बेवाचक्रपंकजे ॥ १०८ ॥
हेमादिद्रव्य जनिते चक्रेवा केवलाम्बुजे ।
भद्रपीठ भुवोमध्ये सुश्लक्ष्णे केवलेतुवा ॥ १०९ ॥
ध्यात्वाध्यात्वा स्वमन्त्रेण ह्यपवर्ग फलाप्तये ।
समर्चनीयं विधिव च्छ्रद्धा भक्ति पुरस्सरम् ॥ ११० ॥

इति श्रीपांचरात्रे श्रीसात्वतसंहितायां

## पंचमः परिच्छेदः ॥ ५ ॥

## षष्ठः परिच्छेदः ।

नारदः ।

वक्ष्ये विप्रवरा स्सम्य ग्य उक्त श्चक्रपाणिना ।
प्रसंगा द्बलदेवाय द्रव्ययागोप्यनन्तरम् ॥ १ ॥

श्रीभगवा नुवाच ।

यत्किंचि त्पत्रपुष्पाद्यं परिहृश्येत पीठगम् ।
पाणिना तत्समाहृत्य शुचिस्थाने निधाय वै २ ॥
गव्यै र्वा चामरै र्वालै श्शिखिपुच्छैः कुशै रथ ।
सम्मार्ज्य भद्रपीठन्तु वाससा सुसितेनवा ॥ ३ ॥

बहुना वस्त्रपूतेन वारिणा तदनन्तरम् ।
प्रक्षाळ्य द्वादशार्णेन प्रणवाद्यन्तकेनतु ॥ ४ ॥

सर्वलोकमयं तत्र सर्वदेवसमाश्रयम् ।
सर्वाधारमयं ध्याये दन्तलीनन्तु चक्रराट् ॥ ५ ॥

प्रणवेन स्वनाम्नाथ नमोन्तेनार्चयेच्च तम् ।
अर्घ्यालभनधूपैस्तु माल्यै र्नानास्त्रगुद्भवैः ॥ ६ ॥

ततः कुम्भचतुष्कन्तु हेमादिद्रव्यनिर्मितम् ।
गाळितेना म्भसा पूर्ण स्रगाद्यैर प्यलङ्कृतम् ॥ ७ ॥

गन्धसर्वौषधीरत्न फलबीजकुशोदकम् ।
बहिःकोणचतुष्केतु न्यसे दाधारपृष्ठगम् ॥ ८ ॥

ओं मर्घ्यं कल्पयामीति ह्युक्त्वा वायुपदे न्यसेत ।
कलशं तद्वदैशान्यां न्यसे दाचमनार्थतः ॥ ९ ॥

स्नानार्थ मग्निकोणेतु पाद्यार्थं नैर्ऋते तथा ।
अथ मंगळकुम्भाना मुपकुम्भसमन्वितम् ॥ १० ॥

चतुष्कं विन्यसे द्बाह्ये दिक्क्रमेण सुपूजितम् ।
भगवद्बिम्बपूर्वन्तु यागांगं प्रागुदीरितम् ॥ ११ ॥
एकं सुलक्षणं तत्र ततो मध्ये ऽवतार्यच ।
भुक्तमर्घ्यादिकं तस्मा दपनीयाभिवन्द्यच ॥ १२ ॥

उशीरवंशकूर्चेन क्षाळये दम्भसा ततः ।
पुरांकितन्तु चक्राद्यै र्यथावद्धन्तु वा शुभम् ॥ १३ ॥
सलिलेना र्घ्यपात्रन्तु सम्पूर्याग्रे निधायवै ।
तिलान् सुमनस स्तस्मिन् दूर्वा स्सिद्धार्थकान् क्षिपेत ॥ १४ ॥
चतुरावर्तयेन्मन्त्रं कृत्वापाणितलेस्थितं ।
तत स्सर्वगतंदेवं मन्त्रमूर्तित्व मागतम् ॥ १५ ॥
समाहूय स्वमन्त्रेण ह्यागच्छेति पदेनवै ।
यथासर्वगतोवायु र्व्यजनेन महामते ॥ १६ ॥
व्यक्तिमभ्येति भगवा नाहूतस्तद्वदेवहि ।
भावदर्पण संक्रान्तं कृत्वाहृत्कमलात्तुवै ॥ १७ ॥
सन्निरोध्य बहिर्वेद्यां मन्त्रोच्चारा वसानतः ।
मन्त्र मागच्छ मानन्तु निर्गतन्तु स्वकात्पदात ॥ १८ ॥
कालं पाद्यार्घ्यदानान्त मुत्थितं भावये त्सदा ।
अथोपचर्यमाणन्तं भोगैः कालानुकूलतः ॥ १९ ॥
स्नानालभनवस्त्रस्र ग्दानालंकरणेतथा ।
अन्यत्र भोग पूजायां स्मरे त्पद्मासनादिना ॥ २० ॥
पुनस्तमेवोपविष्टं सानुकम्पंच सम्मुखम् ।
बिम्बंविनान्यत्राधारे भवत्येवं महामते ॥ २१ ॥
बिम्बाकृत्यात्मना बिम्बे समागत्यावतिष्ठते ।
करो त्यमूर्ता मखिलां भोगशक्तिन्तुचात्मसात् ॥ २२ ॥
विनिवेद्या सनवरं समाहूतस्य वै प्रभोः ।
पादपीठन्तु सामान्यं मृद्वास्तरणभूषितम् ॥ २३ ॥
पाद्यार्घ्यं मधुपर्कंच तोय माचमनीयकम् ।
सपुत्रदार मात्मान मष्टांगपतनेनतु ॥ २४ ॥

चेतसा भक्तियुक्तेन निवेद्य तदनन्तरम् ।
भगवानपि विज्ञाप्यः कृत्वा तत्पादगौ करौ ॥ २५ ॥
स्फुटीकृतं मया देव त्विदं स्नानपरे त्वयि ।
सपादपीठं परमं शुभं स्नानासनं महत ॥ २६ ॥
आसादयाशु स्नानार्थं मदनुग्रहकाम्यया ।
स्नानासनं निवेद्याथ देवस्य द्वितयन्तुवै ॥ २७ ॥
भक्तिनम्रेण शिरसा दत्वा दर्व्यन्तु मूर्धनि ।
विनिवेद्यततोहैमं सरत्नंच प्रतिग्रहम् ॥ १८ ॥
दद्यात्तैपाद्य कळशा त्पाद्यं पादाम्बुजद्वये ।
सुशुभेपादुकेचाथ तदन्तेस्नानशाटिकां ॥ २९ ॥
सुगन्धशालिसम्पूर्ण मात्रार्थपात्रमुत्तमम् ।
दर्पणं पूर्णचन्द्राभं गन्धतोय मनन्तरम्॥ ३० ॥
पाणिभ्यां क्षाळनार्थन्तु पादपीठं ततश्शुभम् ।
दन्तकाष्ठंच तदनु मुखशुद्धि प्रतिग्रहम् ॥ ३१ ॥
जिह्वानिर्लेखनंचैव मुखप्रक्षाळनंतुवै ।
पुनराचमनं देव स्याभ्यंगार्थ मनन्तरम् ॥ ३२ ॥
तैलं बहुसुगन्धंच चूर्णं गोधूमशालिजम् ।
रजनीचूर्णसम्मिश्र मीष त्पद्मकभावितम् ॥ ३३ ॥
देय मुद्वर्तनार्थन्तु मर्षीच तदनन्तरम् ।
स्नानार्थं खळिसम्पूर्ण (?) तोयमुष्णमनन्तरम् ॥ ३४ ॥
चन्दनं मुखलेपार्थं घृष्टं कर्पूरभावितम् ।
गव्यं प्रभूतं स्नानार्थं क्षीरं दधिघृतं मधु ॥ ३५ ॥
ऐक्षवन्तु रसं ह्यत्र मभावे शार्करोदकम् ।
धात्रीफलोदकं चैव लोध्रतोय मनन्तरम् ॥ ३६ ॥

रक्तचन्दन तोयंच रजनीनीरमुत्तमम् ।
ग्रन्थिपल्लव वार्येव ततस्तु तगरोदकम् ॥ ३७ ॥
प्रियंगुवारि तदनु मांसीजल मतःपरम् ।
सिद्धार्थकोदकं चैव सर्वौषधिजलं ततः ॥ ३८ ॥
पत्रपुष्पोदकंचैव फलबीजोदके तथा ।
गन्धोदकंच तदनु हेमरत्नजले ततः ॥ ३९ ॥
पुण्यतीर्थ सरित्तोयं केवलं तदनन्तरम् ।
स्नानार्थं कल्पितेनैव चोदकेन विमिश्रितम् ॥ ४० ॥
योक्तव्यं क्रमशोह्यत दर्घ्यपुष्प समन्वितम् ।
अन्तरान्तरयोगेन स्नानानांच महामते ॥ ४१ ॥
क्षालनं चार्घ्य कलशा दर्घ्यदानं समाचरेत् ।
सम्पूर्णमम्भसांकुम्भं हरिद्राशालितण्डुलैः ॥ ४२ ॥
गन्धादिभिश्च संलित मथ युक्तं स्रगादिना ।
पाणौ कृत्वा त मेकस्मि न्नपरस्मिंस्तु मल्लकम् ॥ ४३ ॥
धूमायमानं सिद्धार्थै श्चाम्यमूर्ध्नि बहिः क्षिपेत ।
सुधौतमहतंचाथ शाटकं विनिवेद्यच ॥ ४४ ॥
कचोदकापकर्षार्थ मपरं देहवारिहृत् ।
अधरोत्तरवस्त्रंच गन्ध धूपाधिवासिते ॥ ४५ ॥
प्रणाळभागा दपरं स्थानं भद्रासनेतु वै ।
भूरिनीरघटैः शुद्धं कृत्वा तत्रावतार्यच ॥ ४६ ॥
सपीठं भगवद्बिम्बं तद्विना वार्चितं यदि ।
स्वप्लुतं भावये द्देवं निःशेषं क्षाळये त्पुनः ॥ ४७ ॥
भूयो गन्धोदकेनैव पूर्वं कुम्भचतुष्टयम् ।
स्नानकुम्भं विनान्येषां प्राग्व त्कार्याच कल्पना ॥ ४८ ॥

मध्ये ऽवतार्यों भगवा न्विनिवेद्यासनं ततः ।
तृतीयं रत्नखचितं तत्रस्थं परमेश्वरम् ॥ ४९ ॥

विभाव्या लंकृतं भक्त्या भोगै स्स्रक्चन्दनादिभिः ।
समभ्यर्च्यार्घ्यपाद्येन पादुकाभ्या मनन्तरम् ॥ ५० ॥

देय माचमनं भूयः पादपीठं तथैवच ।
समालभ्य सुगन्धेन भक्तित श्चन्दनादिना ॥ ५१ ॥

संवीज्य व्यजनेनैव मायूरेण ततेनच ।
केशप्रसारक त्कूर्च पुष्पताम्बूलकर्तरीम् ॥ ५२ ॥

निवेद्य देवदेवाय दुकूलवसने सिते ।
उपवीतं सोत्तरीयं मकुटाद्य मनन्तरम् ॥ ५३ ॥

पादनूपुरपर्यन्त मलंकरण मुत्तमम् ।
विचित्रंहि शिरोमाल्यं मुक्तपुष्पसमन्वितम् ॥ ५४ ॥

स्रग्दामसूत्रसम्बद्ध माकर्णाच्चरणावधि ।
रुचिरं कंकणं चाथ दद्या त्प्रतिसरं ततः ॥ ५५ ॥

धातुभिः कुंकुमाद्यै र्वा विचित्रं सितसूत्रजम् ।
पूजितं मृदुतूलेन ग्रथितंचान्तरान्तरा ॥ ५६ ॥

अंजनं सशलाकंच ताम्बूलं गन्धभावितम् ।
ललाटतिलकं हैमं मुखवासनरोचनाम् ॥ ५७ ॥

कर्णावतंसकुसुमे मण्डलं दर्पणं महत् ।
प्राकारं चित्रकुसुमै र्दीपं रत्नप्रभोज्वलम् ॥ ५८ ॥

मृष्टधूपसमायुक्तं गुग्गुलुं धूपये च्छुभम् ।
सह घण्टारवै रम्यै श्चालयमानेन बाहुना ॥ ५९ ॥

उपानहौ सितं छत्रं शिबिकांच रथादियत ।
वाहनं गजपर्यन्तं सपताकं खगध्वजम् ॥ ६० ॥

सितासितौ चामरौ तु मात्राविंत्त मनन्तरम् ।
औपचारिकभोगाना मेतेषां पूरणायच ॥ ६१ ॥

भेरी मृदंग शंखाद्यै जयशब्द समन्वितैः ।
गीतकैं विविधैर्नृत्यै स्तन्त्रीवाद्य समन्वितैः ॥ ६२ ॥
स्तोत्रमन्त्रै नमस्कारैः प्रणामै स्सप्रदक्षिणैः ।
पूज्यस्सपाद पीठंवै दद्याद्भोज्यासनं विभोः ॥ ६३ ॥
छत्रंदुकूल तूलोत्थ मधूक प्रवरेणतु ।
अथार्हणं जलं स्वच्छं सुगन्धं पत्रतः कृतम् ॥ ६४ ॥
मधुपर्कं दधिमधु घृतयुक्त मनन्तरम् ।
शीतलं तर्पणजलं माधिचूर्णं पुरोदितम् ॥ ६५ ॥

देयं निपुंसनार्थन्तु पुनराचमनंविभोः ।
स्वलंकृतां सुरूपांच स्रग्युक्तां विनिवेद्यगां ॥ ६६ ॥

प्रभूत मथनैवेद्यं भक्ष्य भोज्यान्यनेकशः ।
मधुराद्यारसास्सर्वें शाका स्सफल मूलकाः ॥ ६७ ॥

पानकानि पवित्राणि स्वादूनि मधुपर्कवत ।
सर्वमाचमनार्थन्तु प्रदद्यादर्हणोदकं ॥ ६८ ॥

तिलान्यथ सुरत्नानि ताम्बूलं पुनरेवहि ।
गन्धदिग्धौ करौकृत्वा मुद्राबन्धमथाचरेत् ॥ ६९ ॥

मध्यमानामिकाभ्यान्तु द्वन्द्वयुक्तं करद्वयात् ।
पराङ्मुखं च सुस्पष्टं कृत्वायोज्यं परस्परम् ॥ ७० ॥
आमूला न्नखपर्यन्तं नैरन्तर्येण यत्नतः ।
समुत्तानेकर तले शेषा श्वांगुळय स्तथा ॥ ७१ ॥
अधरोत्तरयोगेन वामदक्षिणत स्तथा ।

तर्जन्या मूध्वतों गुष्टे सम्मुखे सम्प्रसार्यच ॥ ७२ ॥
निविष्टा हृदयोद्देशे कार्याथ जपमाचरेत् ।
स्फाटिके नाक्ष सूत्रेण स्वकैर्वा करपर्वभिः ॥ ७३ ॥

यथाभिमत संख्यांच जपान्ते स्त्रग्वरैस्सह ।
सम्पूज्यगन्धधूपैश्च ततस्तु भगवन्मयः ॥ ७४ ॥
यथाक्रमं समभ्यर्च्य नैवेद्यंप्रतिपाद्यच ।
तेषां मात्रावसानंचा प्यग्नौसन्तर्पयेत्ततः ॥ ७५ ॥
प्रमाण परिशुद्धंच विभवानुगुणं शुभम् ।
चतुरावरणं कुण्डं कृत्वांगुष्ठ विभूषितम् ॥ ७६ ॥
त्र्यंशेनार्धांशतोवापि खाताद्ध्रासोविधीयते ।
चक्रशंखा म्बुजाकारं वृत्तंवा चतुरश्रकम् ॥ ७७ ॥
गदाद्यै श्चक्रपर्यन्त लांछनै र्लांछितंतुवा ।
अग्निकार्योपयोगानि तानि यानि महामते ॥ ७८ ॥
स्रुक्स्रुवादीनि भाण्डानि त्वंकितव्यानि तै रपि ।
सुधाद्यै र्वर्णकै श्शुद्धै र्भूषयित्वोपलिप्यच ॥ ७९ ॥
सुगन्धचन्दनाद्यैश्च पंचगव्य पुरस्सरैः ।
तन्मध्येच कुशाग्रेण प्राग्भाग मवलम्ब्यच ॥ ८० ॥
आरभ्य दक्षिणाशाया लिखे ल्लेखा मुदग्गताम् ।
तस्यानुपरि संलिख्य लेखानां त्रितयं स्फुटम् ॥ ८१ ॥
प्रागग्रं दक्षिणाशादि त्वुदीच्यन्तंच सान्तरम् ।
चतुर्धा प्रणवेनाथ प्रोक्षयेदर्घ्यवारिणा ॥ ८२ ॥
तदभ्यर्च्यार्घ्यपुष्पाद्यै र्ध्यायेत्तद्भद्रपीठवत् ।
प्रणवैस्तु प्रतिष्ठानं प्राग्वदस्य समाचरेत् ॥ ८३ ॥
चतरश्रे स्थले कौण्डे दिग्विदिशाष्टके बहिः ।
सम्पूर्णपात्रं कुम्भानां मष्टकं विनिवेश्यच ॥ ८४ ॥
ऊर्ध्वाधो मेखलानांच चतुर्णां दिक्चतुष्टये ।
कौशेयविष्टरस्थांश्च वासुदेवादिका न्यजेत् ॥ ८५ ॥

विदिक्ष्वप्यथ योगेन ह्यूर्ध्वान्त मधरान्तुवै ।
तद्वद्देवार्घ्यपुष्पाद्यैः पूजनीयाः क्रमेणतु ॥ ८६ ॥
मृदुदर्भसमुद्दंच नीरसं चाश्मकुट्टिमम् ।
शुष्कगोमयचूर्णेन युक्तं गन्ध म्मनासह्वा (?) ॥ ८७ ॥
कुण्डे द्रोणांशमात्रन्तु समारोप्य प्रसार्यच ।
ताम्रपात्रेथवान्यस्मिन् समादाय हुताशनम् ॥ ८८ ॥
आरण्यं लौकिकं वाथ मणिजं दर्पणोद्भवम् ।
कालवैश्वानराख्यस्य हृदयेशस्य वै प्रभोः ॥ ८९ ॥
मारुतानुगताभास्सा योज्या बाह्याग्निना सह ।
भ्रामयित्वा चतुर्धा वै ततः कुण्डान्तरे क्षिपेत् ॥ ९० ॥
पूतं समिद्धतुष्कंतु प्रणवै रभिमन्त्रितम् ।
दत्वा तदूर्ध्वे तदनु कुर्या त्परिसमूहनम् ॥ ९१ ॥
प्रदक्षिणक्रमेणैव ह्यार्द्रपाणितलेनतु ।
तिर्य क्चाधोमुख स्तेन नखप्रष्ठ मदर्शयन् ॥ ९२ ॥
तत स्त्वभग्नमूलाग्रै स्समै र्दद्या त्कुशै स्स्तरम् ।
दिशि दिश्युत्तराशांतं याम्याशादौतु सान्तरम् ॥ ९३ ॥
चतुर्गुणै श्चतुर्धातु मग्नच्छन्नैः परस्परम् ।
प्राक्प्रान्तैः पूर्वभागाच्च याव दुत्तरगोचरम् ॥ ९४ ॥
होमोपकरणं सर्वं होमभाण्डपुरस्सरम् ।
अवतार्य तदूर्ध्वेतु दक्षिणस्यां तथात्मनः ॥ ९५ ॥
द्वन्द्वद्वयप्रयोगेण द्रव्यस्थापन माचरेत ।
द्विरष्टसंख्य मिध्मन्तु संयुक्तंच महामते ॥ ९६ ॥
द्वितीयेनाष्टसंख्येन मुक्तदर्भै स्तरण्डिकाम् ।
स्रुक्स्रुवौच चतुष्कंय देकत्र विनिवेश्य तत् ॥ ९७ ॥

सुगन्धूमं मधुपर्कंच बीजान्येकत्रवैततः ।
कौशेयं धौतकेशन्तु विष्टरंच घृतं चरुम् ॥ ९८ ॥
आज्य स्थालीं चतुष्कंच निधाय तदनन्तरम् ।
प्रणीता पात्रयुगळं करकं चार्घ्यभाजनम् ॥ ९९ ॥
चतुष्कमेतदपर मग्रतो विनिवेश्यच ।
प्रादेशमात्रास्समिधः प्रभूतं शुष्कमिन्धनम् ॥ १०० ॥
पक्ष्मकं स्वेदहृद्वस्त्रं वामभागे निधायच ।
अर्घ्य पात्रोदकेनप्रा क्कृत्स्नं पावनतां नयेत ॥ १०१ ॥
आदाय सोदकं चाथ प्रणीताख्यंच भाजनम् ।
पवित्रन्कतु तन्मध्ये चतुर्दर्भ कृतं न्यसेत् ॥ १०२ ॥
उद्धृत्योद्धृत्य हस्तेन जलं तत्रैवचक्षिपेत् ।
चातुरात्मीय मन्त्रंच जपमानोहिसाधकः ॥ १०३ ॥
भूय स्तदम्भसा सर्वं प्रोक्षयेद्विष्टरेणतु ।
शेषस्याप्लावणं कुर्या त्सर्वदिक्षुस्तरोपरि ॥ १०४ ॥
पुनरेवाम्भसा पूर्य तन्मध्ये परमेश्वरम् ।
ध्यात्वाऽ र्चयित्वा संस्थाप्य त्वग्रत स्तदनन्तरम् ॥ १०५ ॥
सम्प्रोक्ष्या र्घ्याम्भसाचेध्मां श्चतुर्धा संविभज्यच ।
पूजये दर्घ्यपुष्पाभ्यां द्वादशाक्षरविद्यया ॥ १०६ ॥
प्रणीतेचापरस्मिन्वै पात्रेचाग्रे कृते सति ।
सपवित्रन्तु तत्रार्घ्यं दत्वा चक्रन्तु विन्यसेत ॥ १०७ ॥
चतुर्मूर्तिं तदूर्ध्वेतु ध्यात्वाभ्यर्च्य यथा क्रमम् ।
तत्पात्रमुत्तरस्यांच कृत्वा सम्पूज्यवैपुनः ॥ १०८ ॥
आज्यस्थाली मथादाय त्वाज्यं यत्प्राग्द्रवीकृतम् ।
विनिक्षिप्याज्य भाण्डान्त मुच्चस्थेन करेणतु ॥ १०९ ॥

पुनराधाय कृत्वाग्र आधारोपरि यत्नतः ।
दार्भं काण्डचतुष्कन्तु द्वादशांगुळसंमितम् ॥ ११० ॥
तिर्य गुत्तानपाणिभ्या ववष्टभ्यच सान्तरम् ।
अनामांगुष्ठयुग्मेन यथा मध्यं नतं भवेत् ॥ १११ ॥
तै राज्यं चतुरोवारा नानये च्चतुरुन्नयेत् ।
अन्तरान्तरयोगेन ह्यात्मनोग्नेस्तु सम्मुखम् ॥ ११२ ॥
प्रणवोक्तेन संख्येन (?) कुण्डमध्येथ निक्षिपेत् ।
सुक्स्रुवावथ चादाच दर्भपुंजीलकेनतु ॥ ११३ ॥
रजोपनयनं कुर्या त्प्रक्षाल्योष्णेन वारिणा ।
निर्मलीकृत्य कूर्चेन ज्वालाभि स्सम्प्रताप्यच ॥ ११४ ॥
प्रोक्षयित्वा र्घ्यतोयेन पूजयित्वा निधायच ।
षडुशाखै रभग्नाग्रै स्समूलैस्सुसमैः कुशैः ॥ ११५ ॥
चतुर्भि र्वामहस्तेन त्वादायाथ पवित्रकं ।
दक्षिण नामकर्यितु चतुष्काण्ड विनिर्मितं ॥ ११६ ॥
अंगुळीयक रूपंच कृत्वावैतदनंतरं ।
संस्कृत्याज्यस्य विपुड्भि स्संस्पृशेदिन्धनादिकम् ॥ ११७ ॥
निश्शेषदोष शान्त्यर्थ मथाग्ने राहुतस्यच ।
शतं शतार्थं पादं वा त्वाहुतीनां स्वशक्तितः ॥ ११८ ॥
तिलानां घृतसिक्तानां शुद्धेनहविषासह ।
होतव्यं कर्मसिद्ध्यर्थं यथा त दवधारय ॥ ११९ ॥
आहुत्या मुद्धृतायांच मूलमन्त्रावसानतः ।
प्रणवान्तं पदं ब्रूया दग्निं शोधय शोधय ॥ १२० ॥
यथावस्थितरूपेण तत स्तेनैव बुद्धिमान् ।
दद्या त्पूर्णाहुतिं पश्चात घृतेनतु चतुष्पलीम् ॥ १२१ ॥

तस्य संशुद्धदेहस्य पुनरेव समाचरेत् ।
सम्बोधजनकं होमं जडभावप्रशान्तिदम् ॥ १२२ ॥
उच्चार्य मूलमन्त्रन्तु प्रणव द्वितयान्वितम् ।
जुहुया दाहुतीनां च सहस्रं शतमेववा ॥ १२३ ॥
तद्वदाज्येन सन्तर्प्य दद्या त्पूर्णाहुतिं तथा ।
तदा सलब्धसत्तस्य पश्य त्यन्तर्गतं विभुम् ॥ १२४ ॥
प्राणभूत मजं विष्णुं तन्मयत्व मथाश्रयेत् ।
अथ सद्यज्ञनिष्ठस्य कर्मिणोस्यापवर्गिणः ॥ १२५ ॥
याति यागाग्नभावित्वं स्वयमेव यदृच्छया ।
विभजत्यात्मना त्मानं चतुर्धा कुण्ड मध्यतः ॥ १२६ ॥
अधिभूतस्वरूपेण समाश्रित्यच्च दिक्क्रमम् ।
पूर्वं माहवनीयाख्य स्वरूपेणाथ दक्षिणे ॥ १२७ ॥
समास्ते सभ्यवपुषा पश्चिमस्या मनन्तरम् ।
गार्हपत्याख्यभेदेन तत स्तिष्ठति चोत्तरे ॥ १२८ ॥
ओदन मपचनात्मातु सर्वात्मत्वेन मध्यतः ।
आधाराधेयभावेन त्वास्ते संवलिताकृतिः ॥ १२९ ॥
अंगारा ण्यर्चिषश्चैव शक्ति र्या दहनात्मिका ।
त्रिलक्षणोय माधार आधेयो हुतभु ग्विभुः ॥ १३० ॥
आत्मनोऽ ग्नेस्तु विश्वेशो वासुदेव स्सनातनः ।
एवं ज्ञात्वा पुरा सम्य क्सत्तां वैश्वानरीं पराम् ॥ १३१ ॥
ततः कर्मणि वर्तेत नैष्ठिकः कृतनिश्चयः ।
कुर्या दुदकपूर्वन्तु प्राग्व दावाहनं ततः ॥ १३२ ॥
व्यक्तेर्विगळितेनैव तत्वेनाप्यव्ययात्मना ।
सर्वेश्वरस्यवैयस्मा द्ध्यान्मात्र म्महद्वपुः ॥ १३३ ॥

वाच्यवाचक रूपंत द्विज्ञेय ममलक्षण ।
तत्पुनश्शुद्ध सामान्य मुपचारविधौ स्थितम् ॥ १३४ ॥

यद्भोगदानमंत्रैस्तु रहितं मात्रमैश्वरम् ।
प्राक्चतुर्था विभक्ताय स्तमादायेध्मसंचयं ॥ १३५ ॥

आज्येनाभयत स्सिक्तं ब्रह्मक्षीर द्रुमोद्भवं ।
कुण्डस्य ब्रह्मभित्तिभ्यां मध्येभाग चतुष्टये ॥ १३६ ॥

निदध्यादुत्तराशांतं प्राग्भागा दादितःक्रमात् ।
ईशानाग्नेयपादाभ्यां पतितं प्राक्चतुष्टयम् ॥ १३७ ॥

आग्नेयनैर्ऋताशाभ्यां विश्रान्तमपरं न्यसेत ।
नैर्ऋतानिल संस्पर्शि तृतीयं विनिवेशयच ॥ १३८ ॥

वाय्वीशपद संरुद्धं चतुर्थन्तु चतुष्टयम् ।
एवं चतु विभक्तेन समिद्धेन समासतः ॥ १३९ ॥

कुण्डमेकं चतुर्थावै चतुर्णा संविभज्यच ।
अग्नीना मेकदेहानां चातुरात्म्य व्यपेक्षया ॥ १४० ॥

यदाय उपयोग्यस्स्यात् यस्मिन्यस्मिन्हि वस्तुनि ।
स्वमूर्ते स्तर्पणार्थंच कर्मणि स्थापनादिके ॥ १४१ ॥

तदा तदा स आदेय स्स्वकात्स्थानाच्च यत्नतः ।
द्वितीय मिध्ममादाय त्वष्टकाष्टमयो हि यः ॥ १४२ ॥

द्विधाकृत्वा पुराज्येन पूर्ववत्सेचयेच्चलम् ।
निधाय दक्षिणस्यांच मध्य आग्नेय दिग्गतं ॥ १४३ ॥

विश्रान्तं नैर्ऋतपदे चोत्तरस्यां तथापरम् ।
वारीशपदसंरुद्ध माज्यमादायवैततः ॥ १४४ ॥

चतुस्संख्येन मन्त्रेण प्रणवालंकृतेनच ।
दक्षिणे स्रुवन्तुष्कंतु जुहुयादुत्तरे तथा ॥ १४५ ॥

सूर्य सोमात्मकं चाग्ने र्विद्धितं लोचन द्वयम् ।
एतयो रन्तरं यद्वै तदग्ने र्वदनं स्मृतम् ॥ १४६ ॥
तत्रवै जुहुया त्पूर्व समिधां सप्तकं क्रमात ।
घृतसिक्तां चतुस्संख्या मेकैकांहि सुपुष्कलाम् ॥ १४७ ॥
प्राक्कुंकुमादिना लिप्तां काष्ठ संख्यान्तु होमयेत् ।
स्रुग्धूरमधुपर्कंच बीजान्याज्यं यथाक्रमात् ॥ १४८ ॥
तत्राग्नि समिधोदाने विशेषोयं विधीयते ।
साधितंसंस्कृतेग्नौ स्थाल्याम्निधायाभ्तश्चरुम् ॥ १४९ ॥
समुद्घाट्यावलोक्यादौ सम्प्रोक्ष्या र्घ्याम्भसाततः ।
दर्भकाण्ड चतुष्केण साग्निना तदनुस्पृशेत ॥ १५० ॥
तन्मध्ये स्रुक्चतुष्कन्तु मन्त्रैराज्यस्य निक्षिपेत ।
अथादाय स्रुचन्तत्र तद्वद्द्या च्चतुष्टयम् ॥ १५१ ॥
चतुरंगुळ मानेना प्यन्नग्रास मथाहरेत ।
तन्निधाय स्रुचादर्भे तदूर्ध्वे पूर्ववद्घृतम् ॥ १५२ ॥
दद्यादग्नौ चतुष्कंतु क्षिपेदन्नाहुतिं ततः ।
भूयोग्नौ स्रुक्चतुष्कंतु चाज्यस्यापाद्यत्नतः ॥ १५३ ॥
ततोन्यमाज्यसंसिक्तं प्राग्व क्कृत्वाहुतिं पुनः ।
दद्यात्पूर्व प्रयोगेण त्वेवमेव चतुष्टयम् ॥ १५४ ॥
हुत्वाप्यन्नाहुतीनांच ह्याज्याभ्यां जुहुयात्ततः ।
तदन्ते तांय निर्मुक्तैः कुसुमै रर्घ्यमिश्रितैः ॥ १५५ ॥
पूजयेच्चतुरो वारा न्मन्त्रैर्वा प्रणवैः प्रभुम् ।
ततो मोक्षाप्तये होमं यथाशक्ति समाचरेत ॥ १५६ ॥
शतपूर्व सहस्रान्तं दद्या त्पूर्णाहुतिं ततः ।
एकस्मन्त्र चतुष्केण चतुर्भिश्चतुरोथवा ॥ १५७ ॥
प्राग्वत्पूजां पुनः कुर्या द्दर्भे स्सम्मार्ज्यच स्रुक्स्रुम् ।
यथा भवति निस्स्नेह मथ प्राक्स्थापितेनतु ॥ १५८ ॥

पुरतश्चाम्भसा पूर्यं तांच पात्रेणं तेन वा ।
प्रागादा कुण्डबाह्येतु प्रादक्षिण्येन सेचयेत् ॥ १५९ ॥
पवित्रकेणाथ ऊर्ध्वे विनिक्षिप्यकरेणवा ।
शेषं स्वशिरसो दद्या त्स्वस्थानेथ त्वधोमुखे ॥ १६० ॥
निदध्या द्धोम भाण्डेते भस्मना तदनन्तरम् ।
जलनिर्मथितेनैव ह्यूर्ध्वपुण्ड्रं चतुष्टयम् ॥ १६१ ॥
हृदंसयोर्ललाटेच कुर्या द्दीप शिखाकृति ।
एवं परिसमाप्तेतु अग्निकार्ये पिते सति ॥ १६२ ॥
संविभागः पितॄणांच यथा कार्य स्तथोच्यते ।
कुण्डस्य योनि निकटे दक्षिणाग्रां स्तरेत्कुशान् ॥ १६३ ॥
भद्रपीठ समीपेतु क्ष्मातलेवा तदूर्ध्वतः ।
स्तरोपरि विकार्यार्थं तिलान् सरजतोदकान् ॥ १६४ ॥
क्रमेण भावये त्तत्र पितॄनथ पितामहान् ।
तृप्तयेह्यथ सर्वेषां देवाय विनिवेद्यचं ॥ १६५ ॥
प्रोक्षितान्यन्नपात्राणि चत्वारि कवळानिच ।
स्तरोर्ध्वेतु निधायाथ सम्पूज्यार्घ्यादिना ततः ॥ १६६ ॥
क्रमेण चातुरात्मीयै र्मन्त्रै रप्यययोगतः ।
ततस्तु नाम्ना गोत्रेण मन्त्रपूर्वं तिलोदकम् ॥ १६७ ॥
सर्वेषा मर्घ्यकलशा त्प्रदद्याच्च यथाक्रमम् ।
तादर्थ्येनाथ चतुरो विनिवेश्या सनेषुच ॥ १६८ ॥
लब्धलक्षा न्परे तत्वे ब्राह्मणा न्पाञ्चरात्रिकान् ।
प्राङ्मुखं द्वितयं चैव द्वितयं चाप्युदङ्मुखम् ॥ १६९ ॥
सम्पत्यभावे प्येकंवा विनिवेश्योत्तराननम् ।
अथ तेषां क्रमा त्कुर्या दर्चनं चातुरात्म्यवत् ॥ १७० ॥

अर्घ्यानुलेपनाद्यैस्तु भोगै र्मन्त्रावसानिकैः ।
तत्तत्कालोचितै स्सर्वै रनुपादेयवर्जितैः ॥ १७१ ॥
तै श्चापि मौननिष्ठैस्तु भावितव्यं सुयन्त्रितैः ।
वाग्यता श्शुद्धलक्षाश्च प्यर्चे मूर्तौ जनार्दने ॥ १७२ ॥
येश्नन्ति पितर स्तेन तृप्ति मायान्ति शाश्वतीम् ।
अत स्त्वव्यभिचारन्तु मौनं वर्ज्यं क्रियापरैः ॥ १७३ ॥
शुभ मव्यभिचारं य त्तत्कार्यं सर्ववस्तुषु ।
यदंगसंकेतमय मव्यक्तै र्नासिकाक्षरैः ॥ १७४ ॥
कृतमोष्ठपुटै र्बद्धै मौनं तत्सिद्धिहानिकृत् ।
स्वयमेव सुबुद्ध्याय त्सर्ववस्तुषु वर्तते ॥ १७५ ॥
शब्दै रनुपदिष्टैस्तु तन्मौनं सर्वसिद्धिदम् ।
तस्मा द्वै श्राद्धभोक्तॄणां दिव्येवा पितृकर्मणि ॥ १७६ ॥
दद्या न्नैवेद्यवत्सर्वं मर्यादाभ्यन्तरे ऽग्रतः ।
येनाचमनपर्यन्तं कालं तिष्ठन्ति वाग्यताः ॥ १७७ ॥
विधिना नेन वै नित्यं यागयज्ञेतु वैष्णवे ।
संविभागः पितॄणांच कार्य स्सद्रविणै र्नरैः ॥ १७८ ॥
कृत्वातिलोदकान्तंवा फलमूलै स्स्वशक्तितः ।
तदर्थं ग्रासमात्रन्तु दद्या द्गोष्वथ भैक्षुके ॥ १७९ ॥
यस्मा द्दिव्यै र्महामन्त्रै र्दत्तं यत्पूजितेऽच्युते ।
पित्रर्थ मल्पंवा भूरि तत्तेषा मक्षयं भवेत् ॥ १८० ॥
पश्चा च्छरीरयात्रार्थ मभ्यर्थ्य परमेश्वरम् ।
लब्धानुज्ञस्तुवैकुर्या दात्मयागं यथाविधि ॥ १८१ ॥
भोज्यं नैवेद्यपूर्वन्तु सर्वमादाय पात्रगम् ।
विनिवेद्यच्च देवाय पवित्रीकृत्यचाम्भसा ॥ १८२ ॥
सत्यरूपाह्वलक्ष्याचा प्यन्नदोष क्षयंकरी ।
चेतसा ष्वानुगन्तव्या भावनीयाच्च भावना ॥ १८३ ॥

रसात्माध्यक्षसंज्ञो वै साधुभावे व्यवस्थितः ।
प्रद्युम्नो भगवा न्रूपे चैतद्वीर्येतु लांगलिन् ॥ १८४ ॥
भोक्ता महात्मा भगवान् वासुदेव स्स्वयं ह्यजः।
चतुःप्रणवसम्भक्तं ततोऽभ श्चुळकं पिबेत् ॥ १८५ ॥
वह्निकुण्डेथ तेनैवा प्यन्नाहुतिचतुष्टयम् ।
हुत्वाचाभिमतै ग्रांसै स्ततोऽश्नीया यथारुचि ॥ १८६ ॥
समाचम्य पुनर्यायात्प्रयतो भगवद्गृहम् ।
मनोबुद्ध्यभिमानेन स्त्वहन्यस्य धरातले ॥ १८७ ॥
कूर्मव च्चतुरः पादान् शिरस्तत्रैव पञ्चमम् ।
प्रदक्षिणसमेतेन स्वेवंरूपेण सर्वदा ॥ १८८ ॥
अष्टांगेन नमस्कृत्य ह्युपविश्याग्रतः प्रभोः ।
आगमाध्ययनं कुर्या त्तद्वाक्यार्थविचारणम् ॥ १८९ ॥
प्राप्ततु संध्यासमये स्नात्वावा जवनावधि ।
क्षाळयित्वा ततःकुर्या द्वासस्संम्परिवर्तनम् ॥ १९० ॥
अर्चयित्वार्घ्य पुष्पाद्यै देवमग्निं यजेत्ततः।
यथाशक्ति जपं कुर्या दासाद्य शयनं ततः॥ १९१ ॥
समाधाय बहिर्देवं निरालम्बपदेस्थितम् ।
अप्रयत्नेनवैतावदनिरुद्धेन तेजसा ॥ १९२ ॥
सह तेनैव वै निद्रा यावदभ्येति साम्प्रतम्।
समुत्थायार्धरात्रेथ जितनिद्रो जितश्रमः ॥ १९३ ॥
कमण्डलुस्थितेनैव समाचम्यतु वारिणा।
गुरुं देवं नमस्कृत्य ह्युपविश्याजिना सने ॥ १९४ ॥
न्यासं मन्त्रचतुष्केण कुर्यात्संहार लक्षणम् ।
आपादाज्जानुपर्यन्त मनिरुद्धंच विन्यसेत् ॥ १९५ ॥
प्रद्युम्नाख्यं न्यसेन्मन्त्रं नाभ्यन्तं जानुमण्डलात् ।
नाभेराकर्णदेशंतु मन्त्रं सांकर्षणं न्यसेत् ॥ १९६ ॥

आकर्णात् ब्रह्मरन्ध्रान्तं चतुर्थं विनिवेद्य च ।
ततस्त्वभिमतेनैव त्वास्ते पद्मासनादिना ॥ १९७ ॥

स्वात्मना चातुरात्मीय मभिधानं समाश्रयेत् ।
समं कायशिरोग्रीवं सन्धाय सह वक्षसा ॥ १९८ ॥

दृड् नासाग्रगताकार्या विनिमीलित लक्षणा ।
जिह्वा तालुतलस्थाच सान्तरे दशनावळी ॥ १९९ ॥

ईषदोष्ठपुटौ लग्नौ धार्ये द्वे बाहुकूर्परे ।
ऊरुमध्यप्रदेशेतु हस्तौ नाभावधोन्यसेत ॥ २०० ॥

अधरोत्तर योगेन वामदक्षिणतः क्रमात् ।
अचलं योगपट्टेन त्वेवं सन्धार्य विग्रहम् ॥ २०१ ॥

संकोच्यापानदेशन्त्व प्युपरिष्टात्तमेवहि ।
विकास्यावर्णहीनेन हार्णेना (?) लक्ष्यमूर्तिना ॥ २०२ ॥

विषयान्तर्निविष्टन्तु क्रमाच्चित्तं समाहरेत् ।
कुर्याद्वैबुद्धिलीनन्तु तच्च कुर्या त्स्वगोचरे ॥ २०३ ॥

समाधायात्मनात्मानं सहमन्त्रै स्ततः क्रमात् ।
आजाग्रत्पदभूमेर्वै यथावद्वदतः शृणु ॥ २०४ ॥

मध्याह्न भास्कराकारै स्सर्वै स्संशान्तविग्रहैः ।
स्मरेत्पूर्वोदितं पद्मं चातुरात्म्यैरधिष्ठितम् ॥ २०५ ॥

ततो जाग्रत्पदस्थंचा प्यनिरुद्धंच मन्त्रराट् ।
परावर्त्य शतं बुद्ध्या तदभिन्नेन चात्मना ॥ २०६ ॥

तन्मन्त्रजपसामर्थ्या त्तादात्म्य स्थितिबन्धनात् ।
महिमातु सविज्ञान स्तदीय स्तस्य जायते ॥ २०७ ॥

अभ्यासा द्वत्सरान्तेतु तदद्वैतसमन्वितम् ।
अथ प्रद्युम्नमन्त्रन्तु परावृत्य शतद्वयम् ॥ २०८ ॥

योयं सोहमसो नैव ह्यद्वैतेन सदैवहि ।
एवमेव समभ्यासा न्मतिस्तां श्छिन्नसंशयः ॥ २०९ ॥

तत्प्रभावाच्च तेनैव तथा कालेन जायते ।
अनेन क्रमयोगेन जपवृद्ध्यान्वितेनतु ॥ २१० ॥

निखिलंचाप्यधिकुर्यात मन्त्र बृन्दं पुरोदितम् ।
यावदाभाति भगवान् स्थाने पूर्वोक्त लक्षणे ॥ २११ ॥

प्रलीनमूर्तिरममो ह्यनन्तस्तेजसां निधिः ।
चिदानन्दघनश्शान्तो ह्यनौपम्यो ह्यनाकुलः ॥ २१२ ॥

समाधायात्मनात्मानं तत्र त्यक्त्वा जपक्रियाम् ।
ध्यातृध्येयविभागेन यावत्तन्मयतां व्रजेत् ॥ २१३ ॥

यदा संवेद्य निर्मुक्ते समाधौ लभते स्थितिम् ।
अभ्यासाद्भगवद्योगी ब्रह्म सम्पद्यते तदा ॥ २१४ ॥

तत्र श्रमजयं कुर्या त्त्यक्त्वा ध्यानासने क्रमात् ।
समाने शयनस्थश्च कालं रात्रिक्षयावधि ॥ २१५ ॥

ब्राह्मे मुहूर्ते सम्प्राप्ते ह्युत्थाय शयनात्ततः ।
स्नात्वा भ्यर्च्य जगन्नाथं समिद्दानं समाचरेत् ॥ २१६ ॥

जुहुयाच्च यथाशक्ति ततस्तिलघृतादियत् ।
ऊनातिरिक्त शान्त्यर्थं सर्वकर्म समाप्तये ॥ २१७ ॥

दद्या त्पूर्णाहुतिं कृत्वा पूर्ववत्सेचनादिकम् ।
ततो देवन्तु पीठस्थं कुण्डस्थमनलं ततः ॥ २१८ ॥

न्यासद्वयंच संहृत्य मनसाच स्वविग्रहात् ।
निश्शेषस्योपसंहारं कुर्यादर्घ्यादिकस्यच ॥ २१९ ॥

यागादेशात्तथा कुण्डा त्ततराद्यस्या खिलस्यच ।
सहोपलेन केनैव सर्वं म्महसि निक्षिपेत् ॥ २२० ॥

सकृद्यहंच सप्ताहं पक्ष म्मास मथापिवा ।
यो यजे द्विधिनानेन भक्तिश्रद्धा समन्वितः ॥ २२१ ॥
सोपियायात्परं स्थानं किम्पुनर्योत्रसंस्थितः ।
यावज्जीवावधिकाळं बद्धकक्ष्यो महामतिः ॥ २२२ ॥
इत्युक्तं चातुरात्मीयं समासादमलेक्षण ।
सबाह्याभ्यन्तरं सम्य क्ष्यातेयजनंशुभम् ॥ २२३ ॥
यज्ज्ञात्वाक्षय मायाति त्वविद्या बीजमक्षरम् ।
अचिरादेव भावनां भक्तानां भावितात्मनाम् ॥ २२४ ॥

इति श्रीपांचरात्रे श्रीसात्वतसंहितायां चातुरात्म्याराधनंनाम

षष्ठः परिच्छेदः ॥ ६ ॥

श्रीः ।

## अथ सप्तमः परिच्छेदः ।

नारदः ।

प्रसन्नेनाथ विभुना यदुक्तो लांगली पुनः ।
निश्श्रेयसकरं कर्म तदाकर्णयतद्विजाः ॥ १ ॥

श्रीभगवानुवाच ।

शृणु ब्रह्ममयं पुण्य मपुण्यचयदाहकृत ।
तत्त्वतः प्रतिपन्नाना मचिरादेव सिद्धिदम् ॥ २ ॥
परं ब्रह्म परं धाम चातुरात्मक मव्ययम् ।
जाग्रत्संज्ञे स्वयं यत्तु पदे व्यक्तचतुर्भुजम् ॥ ३ ॥

न्यूनं कर्मात्मतत्त्वानां भवदुःखप्रशान्तये ।
भाव माक्रम्य रूपेण तेन मोक्षप्रदेनच ॥ ४ ॥

तत स्वप्ययययोगेन स्वस्वमूर्तिचतुष्टयम् ।
नीत्वा परिणतिं योगा दात्मन्यास्तेच पूर्ववत ॥ ५ ॥

अनुग्रहार्थं भविनां नानाकृत्यात्तु वै पुनः ।
देहकान्ति मनुज्झित्य दिक्क्रमेणतु वै सह ॥ ६ ॥

पौरुषेणतु रूपेण प्रत्येकेन त्रिधा त्रिधा ।
वासुदेवादिकेनैव व्यक्तचक्रादिना युतम् ॥ ७ ॥

उत्कृष्टत्यादिगुणाख्यानां माकृष्टे नान्ययाजिनाम् ।
वर्णानां जनकत्वेन व्यक्ति मभ्येति शाश्वतीम् ॥ ८ ॥

यां समालम्ब्य संसारा दचिरादेव यान्तिच ।
सुप्रबुद्धां परं धाम दानधर्मव्रतादिना ॥ ९ ॥

कर्तव्यमिति वै कर्म त्वैश्वर्यं य स्समाचरेत् ।
भक्त्या व्रत च्छलेनैव तस्यायं विहितः क्रमः ॥ १० ॥

कार्तिकस्य दशम्यांच मासस्यतु निशागमे ।
घृतेन पञ्चगव्येन विम्बपादाम्भसातुवा ॥ ११ ॥

कृत्वा स्वकोष्ठसंशुद्धिं निर्हृत्योदरगं मलम् ।
स्मरन् प्रभुं समाचम्य पाणौ कृत्वा कुशोदकम् ॥ १२ ॥

तत्क्षेप पूर्वं संकल्प आवर्तव्यो व्रतंप्रति ।
ॐ· वृताधिपतये देव नित्यनिर्मल मूर्तये ॥ १३ ॥

वत्सरं परपिण्डैस्तु त्वामहं तोषयाम्यजम् ।
प्रयतो दर्भशय्यायां क्ष्मातले रजनीं नयेत् ॥ १४ ॥

एकादश्यां प्रभातेथ स्नात्वादेव मधोक्षजम् ।
ध्यात्वाभ्यर्च्य यथापूर्वं नाना नामान्तरैः शुभैः ॥ १५ ॥

कराभ्यां लम्बमानाभ्यां संस्थितौ दक्षिणादितः ।
पद्मशंखौ सुशोभाढ्यौ यथातदवधारय ॥ १६ ॥
तर्जनी मध्यमाभ्यान्तु नम्राभ्यां मध्यसंस्थितिम् ।
निषण्णं तलपर्यन्ते शंखमूर्ध्वमुखंशुभम् ॥ १७ ॥
सनालं कमलं तद्वत्स्थितं विकसितंतुवै ।
मणिबन्धादतिक्रान्तं किञ्चिच्छेषं लतागणम् ॥ १८ ॥
लम्बमान मधोवक्त्रं सांगुष्ठं संस्मरेद्विभोः ।
होमान्तमखिलं कृत्वा ध्यायेदनिमिषस्ततः ॥ १९ ॥
दिनमध्येऽर्चनं कुर्या द्दिनान्ते स्नानवर्जितम् ।
महाक्षै र्विविधै स्स्तोत्रै र्गीतवाद्य समन्वितैः ॥ २० ॥
निशांनीत्वा प्रभातेऽथ स्नानपूर्वं मजं यजेत् ।
चतुरात्मान मव्यक्त मनुयागन्तु कर्मणः ॥ २१ ॥
उदितेथ निशानाथे चास्तंयाते दिवाकरे ।
क्षान्त्यर्थ मर्चनं कुर्या त्कुण्डवत्प्रणमेत्क्षितौ ॥ २२ ॥
चतुर्धावै चतुर्दिक्षु ततःकुर्या त्प्रदक्षिणम् ।
एकैकस्याथ उच्चार्य चतुर्धातु पदं पदम् ॥ २३ ॥
तद्वाचका स्स्तोत्र मन्त्रा स्ततः कृत्वा स्वभावगम् ।
तद्व्यक्ति व्यंजकेनैव सद्वाक्यगणेनतु ॥ २४ ॥
जितंते पुण्डरीकाक्ष वासुदेवा मितद्युते ।
रागदोषादिनिर्मुक्त समस्तगुण मूर्तिमन् ॥ २५ ॥
नाथ ज्ञानबलोत्कृष्ट नमस्ते विश्वभावन ।
संकर्षण विशालाक्ष सर्वज्ञपरमेश्वर ॥ २६ ॥
देव - ऐश्वर्यवीर्यात्मन् प्रद्युम्न जगतां पते ।
नमस्तेस्तु हृषीकेश सर्वेश्वर जगन्मय ॥ २७ ॥

स्थित्युत्पत्तिलयत्राण हेतवे शक्तितेजसे ।
जयानिरुद्ध भगवन् महापुरुष पूर्वज ॥ २८ ॥
विधिनानेन वै कार्यं पक्षयो रुभयोरपि ।
अब्जान्त मर्चनं विष्णो र्निष्कामेना ग्रजन्मना ॥ २९ ॥
एवं संकर्षणाद्यन्तु वासुदेवान्त मर्चनम् ।
विहितं क्षत्रजाते वै कर्तव्यत्वेन सर्वदा ॥ ३० ॥
प्रद्युम्नाद्यन्तु वैश्यस्य मुसलान्त मुदाहृतम् ।
सच्छूद्रस्या निरुद्धाद्यं प्रद्युम्नान्तं सदैवहि ॥ ३१ ॥
मूर्तीनां ध्यानकालेतु विशेष मवधारय ।
संकर्षणेऽब्जव द्रम्यां दक्षिणेतु करे गदाम् ॥ ३२ ॥
गृहीतां चिन्तये न्मध्या दधोवक्रेण पाणिना ।
अंगुलिद्वितयेनैव त्वंगुष्ठाद्येन लीलया ॥ ३३ ॥
प्राग्वद्वामकरे पद्मं प्रद्युम्नस्य निबोधच ।
दक्षिणे हेतिराट् तद्व दंगुलिद्वितयोपरि ॥ ३४ ॥
पूर्वव त्कमले वामे चतुर्थस्या धुनोच्यते ।
आदिव द्दक्षिणे पद्मं गदा वामे यथोदिता ॥ ३५ ॥
इति प्रथममूर्तीनां ध्यान मुक्तन्तु सार्चनम् ।
नित्यनैमित्तिकार्थन्तु निश्श्रेयसपदाप्तये ॥ ३६ ॥
भक्तिपूर्वात्तु कैवल्या द्यत्नेना भ्यर्थयन्ति ये ।
वर्णा न्विप्रादय स्तेषां व्रताचरण मुच्यते ॥ ३७ ॥
श्रावणस्य दशम्यान्तु सर्वं पूर्वोक्त माचरेत् ।
स्मृत्वा कुशोदकाभ्यङ्गं स्मरन् देव मिदं पठेत् ॥ ३८ ॥
ॐ - सर्वभूतमयानादे यच्छ ते परमं पदम् ।
छिन्धि सांसारिकान् बन्धा नज्ञानतिमिरं हर ॥ ३९ ॥

ततो ध्यात्वा यज न्देवं चतुर्मूर्तिन्तु पूर्ववत् ।
गौणमुख्यै र्महच्छब्दै र्जितंताद्यैः पदै स्ततः ॥ ४० ॥

व्यस्तै स्तत स्समस्तैश्चा प्येकैकं पुनरेवहि ।
वाच्यभेदोक्ति योगेन समस्तेनान्यथा त्मनः ॥ ४१ ॥

इत्यर्चनं क्रमा त्कुर्या न्मूर्ते मूर्ते महामते ।
प्रणिपातादिकं सर्व मावर्तव्यं यथास्थितम् ॥ ४२ ॥

तुर्यार्थे मैङ्गलार्थैस्तु मोक्षैकफललम्पटैः ।
विन्यासं लांछनानांतु ग्रहणेनान्वितं शृणु ॥ ४३ ॥

अस्मि न्व्रते चतुर्णान्तु देवानां वस्तुसूचनम् ।
विदिक्स्वपक्षदेशाभ्यां स्थानाभ्यां मण्डला द्बहिः ॥ ४४ ॥

दक्षिणेतु गदाद्यस्य स्पष्टमुष्टिगदा भवेत् ।
वामेन कुक्षिकुहरा त्समाक्रान्तश्च शंखराट् ॥ ४५ ॥

परितो बाह्यतोंगुष्ठं निषण्णं सर्वदा स्मरेत् ।
मुख्यहस्ते द्वितीयस्य ध्येयश्शंखवर स्तथा ॥ ४६ ॥

चक्र अंगुष्ठ ऊर्ध्वस्थं वामहस्ते समुष्टिकम् ।
प्रद्युम्नस्य गदा वामे शब्दपूर्णास्तु दक्षिणे ॥ ४७ ॥

दक्षिणे त्वनिरुद्धस्य कमलं सूर्यवर्चसम् ।
वामतर्जनिगं चक्रं त्रिष्वंगुष्ठं स्मरेत् स्थितम् ॥ ४८ ॥

एवं यथा स्थितात् ध्याना त्फलमाप्नोति साधकः ।
सक्षीर मन्नपात्रन्तु विहितं मासि मासिच ॥ ४९ ॥

दानार्थं व्रतपर्यन्ते हेम रत्न तिलान्वितम् ।
निष्काम व्रतिनां नित्यं त्वन्ते गोदानमेवच ॥ ५० ॥

प्रतिमासं सकामानां दधिपात्रंच सोदनम् ।
फलानि हेमयुक्तानि त्वन्ते भूदानमेव च ॥ ५१ ॥

तिलान्युदक कुम्भंच पत्रपुष्पादिनार्चनम् ।
यथाशक्ति दरिद्राणां हिरण्यं गोसमं स्मृतम् ॥ ५२ ॥
दाने ऽर्चनेतु शूद्राणां व्रतकर्मणि सर्वदा ।
असिद्धान्नन्तु विहितं सिद्धंवा ब्राह्मणेच्छया ॥ ५३ ॥
स्वकर्मणा यथोत्कर्ष मभ्येति न तथार्चनात् ।
तस्मा त्स्वेनाधिकारेण कुर्यादाराधनं सदा ॥ ५४ ॥
सर्वत्राधिकृतो विप्रो वासुदेवादिपूजने ।
यथा तथा न क्षत्राद्या स्तस्माच्छास्त्रोक्त माचरेत ॥ ५५ ॥
नये न्नक्ताशनै र्भक्त्या दिनान्येतानि मौद्गलः ।
व्रताद्यन्तेतु विहितं परिपीडं हितस्य वै ॥ ५६ ॥
यथाभिमत मासाद्वै समारभ्य क्रमेणतु ।
इति कर्तव्यता सक्तै र्मोक्षकामैस्तु चाग्रजैः ॥ ५७ ॥
दशम्यां चैव संकल्पः कार्यो द्वादश वार्षिकः ।
प्रागवद्ब्दन्तु सम्पूर्य दानै र्मासानुमासकैः ॥ ५८ ॥
व्रतेश्वरं जगन्नाथं प्रीणये द्वत्सरे गते ।
पुनरारम्भ मासाच्च त्वग्रचमासस्य तद्दिनात् ॥ ५९ ॥
आरभ्य वत्सरं प्राग्व त्पूजये त्प्रीणये त्प्रभुम् ।
क्रमेणानेन सम्पाद्य द्वादशाब्दं व्रतं महत् ॥ ६० ॥
तदन्तेतु यथा शक्त्या दानै र्वस्त्रानुलेपनैः ।
द्विषट्कं ब्राह्मणानान्तु यष्टव्य मधिकारिणा ॥ ६१ ॥
स्वमूर्त्या राधनाद्येन कर्मणाद्योतदेवहि ।
कार्य व्रतमिदं भक्त्या ज्येष्ठाद्यं क्षत्रियेणतु ॥ ६२ ॥
वैश्येनाश्वयुजादादा वावर्तव्यं समासतः ।
मौद्गलेनतु माघाद्यं पालनीयं यथाक्रमम् ॥ ६३ ॥

इदं व्रतोत्तमं दिव्य मपवर्ग फलप्रदम्।
विहितं सर्ववर्णाना मनिरुद्धंच सर्वदा॥ ६४॥
चान्द्रायणा युतसम मास्ष्टैः कल्मषापहम्।
वक्ष्ये व्रतवरंचान्य त्कर्तव्यत्वेन कर्मणाम्॥ ६५॥
मोक्षैक फलकामाना मन्येषां भावितात्मनां।
मोक्षदन्देहपाताद्य च्चातुरात्म्यैकयाजिनाम्॥ ६६॥
यथाभिमतमासस्य दशम्यां पातये ज्जलम्।
नत्वाव्रतेश्वरं प्राग्व द्वत्सरद्वितयस्यच॥ ६७॥
विशेषाच्छ्रावणे कुर्या त्संकल्पं कार्तिकेपिच।
आरम्भमासा दारभ्य निष्टाख्यं यावदेवहि॥ ६८॥
द्विषट्क मुपवासाना मेकवृद्ध्यातु वर्धयेत्।
होमान्त मर्चनं कृत्वा पूर्ववत्तन्मयोभ्यसेत॥ ६९॥
ततस्सुपरिपीडानां वत्सरं ग्रास माचरेत।
कार्य मारम्भमासेतु पूर्वद्वादशरात्रिकम्॥ ७०॥
एकैकं लोपयेत्ताव द्यावदब्द स्समाप्यते।
कुर्यात् व्रतसमाप्तितु पूर्वव त्पूजनादिना॥ ७१॥
वृद्धिह्रासक्रमेणैतत व्रतमुक्त म्मयाचते।
अनायासेनवैयेन प्राप्यते शाश्वतं पदम्॥ ७२॥
व्रताना मुत्तमं धन्यं द्वादशाख्य मतश्शृणु।
अकामानां सकामाना मन्ते तुल्यफलंहियत्॥ ७३॥
सितपक्षात्तु चैत्रस्य कार्याचेऽहनिकल्पना।
गतेऽर्धरात्रसमये चाप्रभाता त्ततो ऽच्युतम्॥ ७४॥
उपवासं विना ऽभ्यर्च्य कार्यं वै नक्तभोजनम्।
एकादश्यन्त मेवंहि पौनः पुन्येन लांगलिन्॥ ७५॥

कार्यं मप्यययुक्त्या वै चातुरात्म्यस्य पूजनम् ।
एकादश्यां नभुंजीत विहित स्तत्र जागरः ॥ ७६ ॥
द्वादश्या मादिदेवन्तु समाराध्य यथाविधि ।
मध्याह्नसमये प्राप्ते विधिव त्तन्मयो न्यसेत् ॥७७॥
भक्त्या शक्त्यातु चतुर एकैकं प्रत्यहं त्वपि ।
गवां ग्रास स्स्वसामर्थ्या ह्लोपनीयो नसर्वदा ॥७८॥
सह पूर्वोक्तदानैस्तु व्रतकर्मपरायणैः ।
प्राप्तेतु तद्दिने भूयः कृष्णपक्षस्य लांगलिन् ॥ ७९ ॥
अर्चनं केशवादीनां त्रिसन्ध्यं प्राग्व दाचरेत् ।
द्वादश्यां सोपवासस्तु न्यस्ये द्दामोदरं प्रभुम् ॥ ८० ॥
दानान्त मर्चनाद्यन्तु सितपक्षोक्त माचरेत् ।
आभवेन क्रमेणैव चैवं मूर्त्यन्तरं यजेत् ॥ ८१ ॥
मूर्तिभि श्चाप्ययाख्येन संवत्सर मतन्द्रितः ।
यो यो धिकारी भक्तो वा तस्य तुष्य त्यधोक्षजः ॥ ८२ ॥
षोडशाख्य मतो वक्ष्ये व्रतं धन्यतमं हि यत ।
पूर्वव द्वात्रिसमय आषाढस्याद्य वासरे ॥ ८३ ॥
गृहीत्वा नियमं कुर्या दाप्रभातादिपूजनम् ।
त्रिसन्ध्यं वामनादीनां विधिवत् द्वादशाहकम् ॥ ८४ ॥
त्रयोदश्यां ततोभ्यर्च्य चतुर्वर्गप्रदं प्रभुम् ।
आद्यन्त मनिरुद्धादि तदाद्य मपरेऽहनि ॥ ८५ ॥
तृतीयं पंचदश्यान्तु संशान्तिव्यक्तिलक्षणम् ।
एवं मूर्त्यन्तरै र्युक्तं चातुरात्म्यं त्रिधा स्थितम् ॥ ८६ ॥
आराध्य परया भक्त्या चैकादश्या मनश्नतः ।
पूर्णं तदर्चनं कृत्वा पंचदश्यां यथाविधि ॥ ८७ ॥
चत्वार स्तन्मयाः पूज्याः श्रद्धापूतेन चेतसा ।
आत्मयागं ततः कुर्या द्दिनान्ते चैनपूर्वकम् ॥ ८८ ॥

एव माश्वयुजे भूयः पर्वादौ प्रारभे त्क्रियाम् ।
पद्मनाभादिमूर्तीना मर्चनं विहितं क्रमात् ॥ ८९ ॥
एकादश्या मनश्नंस्तु सर्वं निर्वर्त्य पूर्ववत् ।
सम्प्राप्तेच ततः पौषे यजे न्नारायणादिकम् ॥ ९० ॥
द्वादश्यां तत्द्विषट्कंच तथा व्यूहत्रयं त्वपि ।
चैत्रे तद्दिवसा दादौ विष्ण्वादीनां समर्चनम् ॥ ९१ ॥
विहितं सद्व्रतं ज्ञानां सह व्यूहत्रयेणतु ।
विशेषपूजनं कुर्या त्सम्पन्ने वत्सरे सति ॥ ९२ ॥
विभो रग्रे द्विजेन्द्राणां षोडशानां स्वशक्तितः ।
दत्ताशिष्ट मतृप्तंच दैवीयान्नेन भावितम् ॥ ९३ ॥
हविश्शेषेण संयुक्तं व्रतिनां भोजनं हितम् ।
एवं सितेऽसिते वापि ह्युभयो रपि पक्षयोः ॥ ९४ ॥
यथाभिमतमासा द्वै समारभ्य यजे त्क्रमात् ।
एकादशेच मासेशान् पर्वादौतु सकृत्सकृत् ॥ ९५ ॥
द्वादश्यां सोपवासस्तु तन्मासेशमथार्चयेत् ।
तत्कारणादि भेदोत्थं चातुरात्म्येन वै सह ॥ ९६ ॥
पुण्यं व्रतमिदं विद्धि वृद्धस्त्री बालसिद्धिकृत् ।
नित्यं सद्वैष्णवैः कार्य मविरुद्ध मखेददम् ॥ ९७ ॥
प्राक्प्रर्णाते महाभोगै श्शक्त्या दान समन्वितैः ।
गृहस्थै ब्रह्मचर्यस्थै र्वानप्रस्थैस्तु भिक्षुकैः ॥ ९८ ॥
येन केन प्रकारेण वित्तं सम्भृत्य वैपुरा ।
नित्यं धर्मा विरुद्धेन भैक्षपूर्वेण सर्वदा ॥ ९९ ॥
कुटुम्बभरणाद्यर्थं लाभे भैक्षादिकेतु वै ।
अवज्ञा परमा यत्र बुद्धिमां स्तत्र संवदेत् ॥ १०० ॥
दाता ददाति यत्किंचि त्पूजा पूर्वंहि भक्तितः ।
कृत्स्नं तदीयमशुभं तिष्ठत्यर्थिजनाश्रितम् ॥ १०१ ॥

परिभूतेतु वै लाभे सन्तोषो यस्य जायते ।
प्रतिग्रहोत्थितो दोष स्तस्य दूरतरं व्रजेत् ॥ १०२ ॥
एवं ज्ञात्वाप्यपात्राणां भक्तानां भावितात्मनां ।
जनये दुर्बुद्धिभेदन्तु नेतरेषां कदाचन ॥ १०३ ॥
यत्र दाता गृहीताच्च द्वावेव कलुषात्मकौ ।
दृष्टादृष्ट विनाशार्थं दानं द्वाभ्यां हतं तु तत् ॥ १०४ ॥
प्रागेवं वित्तसंशुद्धिं भावशुद्धि समन्विताम् ।
निश्चयीकृत्य यत्नेन दिव्य मायतनं व्रजेत् ॥ १०५ ॥
वृतसंसिद्धये नूनं सिद्धायतनमेववा ।
अथवायतनं रम्य मासन्न नगरादिकम् ॥ १०६ ॥
निर्विघ्नेन व्रतं यस्मा न्निष्पद्येतात्र कर्मिणाम् ।
कर्मवाङ्मनसै श्शुद्ध स्तपो निष्ठःक्रियापरः ॥ १०७ ॥
यो नान्य देवतायाजी तत्वतो भगवन्मयः ।
कस्मिंश्चिद्वैभवे रूपे व्यूहीये वा सुबुद्धिमान् ॥ १०८ ॥
बद्धलक्ष्यो भवे द्भक्त्या त्वाप्तागमनिदर्शनात् ।
तस्यापि तादृशानांच भविना मनुकम्पया ॥ १०९ ॥
व्यक्तता मगमद्देव स्स्वयमेव धरात्मना ।
यत्र मोक्षप्रदं विद्धि दिव्यमायतनं हि तत् ॥ ११० ॥
मन्त्रसिद्धैश्च विबुधै र्मुनिमुख्यै स्तथामलैः ।
शान्तये देशजानान्त्व प्यात्मनश्चापि कीर्तये ॥ १११ ॥
मन्त्राकृति मयं ध्यात्वा पाषाणं वसुधातले ।
पावनं वा ततं वृक्षं ज्ञात्वावा देवताश्रयं ॥ ११२ ॥
कृत्वा तच्छक्ति संरुद्धं विसृज्यच तदाश्रितम् ।
विद्धि सर्वेश्वरस्यैवं स्थितं निलय लक्षणम् ॥ ११३ ॥
स्वमन्त्र सन्निधिं तत्र कृत्वा तद्विग्रहान्वितं ।
पूजितं यत्र पुष्पाद्यै स्तत्सिद्धा यतनं स्मृतम् ॥ ११४ ॥

फलप्राप्तेतु विप्राद्यै स्स्वकुलो द्धारणायच ।
स्थापितं भगवद्बिम्बं ज्ञेय मायतनं हितत् ॥ ११५ ॥
क्रियांगभागं यातस्य सर्वगस्यचवैविभोः ।
विद्धि सर्वेश्वरस्यैवं स्थितं नियत लक्षणम् ॥ ११६ ॥
स्वमन्त्र सन्निधिं तत्र कृत्वा तद्विग्रहान्वितं ।
प्रासादद्वार देशाच्च यत्रशंखध्वनिक्षयः ॥ ११७ ॥
पूर्वादिसर्वदिक्काव त्क्षेत्रं भवति वैष्णवम् ।
सिद्धावतारिताद्देवा त्तदेतद्द्विगुणं स्मृतम् ॥ ११८ ॥
त्रिगुणं च स्वयंव्यक्ता द्देहान्ते भावितात्मनाम् ।
फलं सालोकयता पूर्वं परिज्ञेयं क्रमाद्यतः ॥ ११९ ॥
दुष्टेन्द्रिय वशा च्चित्तं नृणां यत्कल्मषै र्वृतं ।
तदन्तकाले संशुद्धिं यातिनारायणालये ॥ १२० ॥
व्रता न्येतानियःकुर्या दभिसन्धाय चेतसा ।
अभीष्ट मतितीव्रेण तदाप्नो त्यचिरात्ततः ॥ १२१ ॥
श्रद्धानै रत स्तस्मात दृष्टादृष्टफलाप्तये ।
व्रता न्येतानि कर्तव्या न्यभिसन्धाय चेतसा ॥ १२२ ॥
नावसादस्तु कर्तव्यो व्रतभंगा त्कदाचन ।
संकल्पादेव भगवां स्तत्वतो भावितात्मनाम् ॥ १२३ ॥
व्रतान्त मखिलं कालं सेचय त्यमृतेनतु ।
ज्ञात्वैवं बद्धलक्ष्येण भवितव्यं सदैवहि ॥ १२४ ॥
प्राप्तये सर्वकामानां संसार भयभीरुणा ॥ १२४-॥

इति श्री पाञ्चरात्रे श्रीसात्वत संहितायां व्रतविधिर्नाम

सप्तमः परिच्छेदः ॥ ७ ॥



श्रीः ।

श्रीमते रामानुजाय नमः ।

# अथ अष्टमः परिच्छेदः ।

भगवान् -

व्रतमेतदमन्त्रं च सामान्यं सार्वलौकिकम् ।
सिवेतर विभागेन प्रोक्तं मन्त्र द्वयं श्रृणु ॥ १ ॥
प्रागर्थं प्रार्थयित्वातु दृष्टा दृष्ट प्रदस्सहि ।
ज्ञात्वा स्थिरमतिः कुर्यां तदर्थं चक्रमण्डलम् ॥ २ ॥
तन्मध्ये चतुरात्मातु यष्टव्यः कर्णिकोपरि ।
चतुर्दिक्ष्वी क्षमाणस्तु वासुदेवादितः क्रमात् ॥ ३ ॥
हृदादिनेत्रपर्यन्त मंगषट्कं यजेत्ततः ।
अर्घ्यादिभिः क्रमा द्भोगै र्व्रतज्ञेन पुरोहृतैः ॥ ४ ॥
ततः कुण्डान्तरेचैव संस्कृतेग्नौच विन्यसेत ।
चक्रं मन्त्रगणोपेतं समिद्भिस्तर्पये त्क्रमात् ॥ ५ ॥
पश्चात्तण्डुलसम्मिश्रै स्सघृतैर्बहुभि स्तिलैः ।
अर्घ्योदकेन शिरसा पवित्रीकृत्य साम्प्रतम् ॥ ६ ॥
नतजानुशिराश्शिष्यं कृत्वासौ श्रावयेत्प्रभुम् ।
त्वय्याराधनकामोयं व्रतं चरितु मिच्छति ॥ ७ ॥
संकल्पसिद्ध्यै भगव न्पूरयास्य मनोरथान् ।
इति विज्ञाप्य देवेशं ततः पुष्पाणि दापयेत् ॥ ८ ॥
अष्टांगमथवैकुर्या त्प्रमाणं सप्रदक्षिणम् ।
भूयोभूयो ऽनवच्छिन्नं भक्तिश्रद्धापुरस्सरम् ॥ ९ ॥
तत स्तस्योपदेष्टव्यं विधानं मन्त्रपूर्वकम् ।
सोऽन्तं षष्ठस्वरारूढं अनुस्वारविभूषितम् ॥ १० ॥

बीजमाद्यस्यच्च विभो र्वासुदेवस्य कीर्तितं ।
तदेव जीवबीजस्थं षष्टस्वरविवर्जितम् ॥ ११ ॥
द्वितीयस्वरसंयुक्तं संकर्षणस्य बीजराट् ।
उभयो रन्तरे रेफ माद्यबीजस्य योजयेत् ॥ १२ ॥
बीजं प्रद्युम्ननाथस्य तृतीयं सर्वकामदम् ।
जीवारूढं हकारन्तुं लान्तस्योपरि विन्यसेत ॥ १३ ॥
विसर्गसहितं बीजं मनिरुद्धस्य वाचकम् ।
द्विभुजा स्सर्वएवेते सूर्येन्दुशत सन्निभाः ॥ १४ ॥
तेजसा त्वत्रभेदोस्ति स्वरूपेण सितादिना ।
दक्षिणोत्तरपाणिभ्यां तर्जनी मध्यमान्तरे ॥ १५ ॥
आद्यस्य च्चक्रशंखौ द्वौ ध्येयावंसद्वयोपरि ।
स्कन्धसूत्रसमस्थेन दक्षिणेनतु पाणिना ॥ १६ ॥
गृहीता मुष्टिबन्धेन विश्रान्ता पीठपृष्ठतः ।
ध्येया गदा द्वितीयस्य तथाभूते करे परे ॥ १७ ॥
संस्मरे द्वितिराड्दीप्तं लीलाक्षेप इवोद्यतम् ।
एवं प्रद्युम्ननाथस्य व्यत्ययेनतु ते उभे ॥ १८ ॥
दक्षिणोत्तर हस्ताभ्यां श्रोत्रमण्डल सम्मुखौ ।
शंखपद्मौ च्चतुर्थस्य तथाकृष्टौतु संस्मरेत ॥ १९ ॥
किन्तुवैपंकजं नाळ मस्यवैपाणिपृष्ठगम् ।
हकारंच सकारस्थं कृत्वा षोढानिवेश्यच ॥ २० ॥
द्वितीय तुर्यषष्ठाष्ट द्विषट्कदशकैः क्रमात् ।
स्वरैर्नियोजये द्विद्वि हृदाद्या न्नेत्रपश्चिमान् ॥ २१ ॥
चातुरात्मीय मन्त्राणां साधनत्वेन सर्वदा ।
त्रिधा हकारं कृत्वादौ जीवबीजं तथैवच ॥ २२ ॥
ककारंच क्षकारंच लिखेत्तद्वत्त्रिधा त्रिधा ।
द्विषट्कमेव बीजानां क्रमादादौ निवेश्यच ॥ २३ ॥
ततो वायुधरावारि संज्ञं यच्चाक्षरत्रयम् ।
पौनः पुन्येन सर्वेषा मधोभागे नियोजयेत् ॥ २४ ॥

सर्वे षष्ठस्वरारूढ़ा अनुस्वारविभूषिताः ।
बोद्धव्याः केशवादीनां बीजास्त्वेते पृथक्पृथक् ॥ २५ ॥
क्षहसत्रितयं श्वेत श्चतुर्धाविलिखे त्क्रमात् ।
ततोद्विषट्कं बीजानां तस्याधो विनिवेश्यच ॥ २६ ॥
क्रमेण सप्तमाद्वर्गात द्वितीयंच चतुर्थकम् ।
पुनस्तृतीयंतुर्यंच द्वितीयं च तृतीयकम् ॥ २७ ॥
द्वितीयं च चतुर्थंच चतुर्थं तदनन्तरम् ।
तृतीय मष्टमंचाथ तृतीयं सप्तमात्पुनः ॥ २८ ॥
नवम द्वादशाभ्यांतु विशेषमिम(?) मामच ।
अधोनियोजयेद्रेफं तत्त्रयाणांतु मूर्धनि ॥ २९ ॥
षट्सप्तमाष्टसंज्ञाना मिकारमुपरिन्यसेत ।
सानुस्वारंच सर्वेषा मितिदेवीगणस्यच ॥ ३० ॥
बीजद्वादशकं प्रोक्तं यथाचानुक्रमेणत ।
श्रीश्च वागीश्वरीकान्तिः क्रियाशक्ति विभूतयः ॥ ३१ ॥
इच्छाप्रीती रतिश्चैव मायाधी र्महिमेतिच ।
समुद्रमूर्तये स्वाहा पद्मस्य प्रणवादिकः ॥ ३२ ॥
सर्वान्तश्चारिणेकृत्वा ततोगगन मूर्तये ।
स्वाहान्तः प्रणवान्तश्च मन्त्रश्शंखस्य कीर्तितः ॥ ३३ ॥
ओंकारो वेदमात्रेथ विद्ये स्वाहा पदंतुवै ।
गदामन्त्र स्स्वयंप्रोक्त श्चक्रस्याथ निगद्यते ॥ ३४ ॥
ओंकारान्ते पदं दद्यात्पंचार्णं प्रभविष्णवे ।
श्लिष्टौ विकासितौ हस्तौ योज्यौ चामणि बन्धनात ॥ ३५ ॥
तद्बाहुकौ सरौ (?) द्वौच नाभौ संरोध्य दण्डवत् ।
ईषद्वै डोलये त्पश्चा दध ऊर्ध्वंच तौ करौ ॥ ३६ ॥
गुप्तिः कृत्वातु योज्यैषा मुद्राराधनकर्मणि ।
आसाद्य प्राक्स्थिता मर्चां स्वयं वा समपृष्ठताम् ॥ ३७ ॥

सर्वलक्षणसम्पन्नां यस्यां चेतः प्रसीदति ।
हेमादिनिर्मितं कुर्या त्पीठं वा लक्षणान्वितम् ॥ ३८ ॥
समं त्रिभागन्यूनं वा द्वादशांगुळविस्तृतम् ।
चतुरश्रं चतुष्पादं विस्त [?] रार्धेन चोन्नतम् ॥ ३९ ॥
तृतीयं भाग मादाय विस्तराच्च [विस्तरर्च] स्वरं स्वकम् ।
तेन तन्मध्यगं कुर्या त्कमलं लक्षणान्वितम् ॥ ४० ॥
द्विषट्कारन्तु सद्बाह्ये चक्रं सर्वांगचिह्नितम् ।
सिद्धामरनरादीनां हृदयस्थाक्षराच्युति (?) ॥ ४१ ॥
मृदुमुच्चरणाकान्ति निर्मुक्ताकृतिलक्षणा ।
पादाम्बुरुहमुद्राथ कार्यावै कर्णिकोदरे ॥ ४२ ॥
सम्पाद्य चैव माधारं पीठं वार्चान्वितं स्मरेत् ।
पादाब्जमुद्रारहितं कुण्डं तद्वत्तु कल्पयेत् ॥ ४३ ॥
फुल्लपद्मसमाकार मोष्ठयोनिसमन्वितम् ।
चलमेकदिशिस्थंवा ततो नियम माचरेत ॥ ४४ ॥
संवत्सरस्य पूजार्थं विभो र्वै द्वादशात्मनः ।
मार्गशीर्षा त्समारभ्य मासाद्वै कौमुदान्तिमम् ॥ ४५ ॥
मासेशमन्त्रसंजप्तं युक्तं होमकुशाम्बुना ।
दशम्यां पंचगव्यञ्च पिबे त्सम्पूज्य केशवम् ॥ ४६ ॥
तन्निवेदित मन्नंच प्राग्भुक्त्वातु घृताधिकम् ।
नातीव तृप्तिजनकं दन्तकाष्ठ मथाचरेत् ॥ ४७ ॥
शयनं मंत्रतोयेन प्रोक्षये त्सकुशं ततः ।
शयनस्थो जपे न्मन्त्रं शत मष्टाधिकन्तु वै ॥ ४८ ॥
एकादश्यां प्रभातेथ मध्याह्नेवा दिनक्षये ।
केशवाय नमस्कुर्या द्बहुशः प्रणवादिकम् ॥ ४९ ॥
तस्य वै पूजनं भक्त्या कुर्या त्कालत्रयंतु वै ।
सर्वगं परमं ज्योति रमूर्त ममलंहि यत ॥ ५० ॥

सएव वासुदेवेति मत्वा सम्य ग्यजे ततः ।
चेतसा मृतसंकाशैः पुष्पाद्यै रखिलैः प्रभुम् ॥ ५१ ॥
पश्चात्त ममलं धाम ध्याये न्मुक्त मनश्वरम् ।
श्रोणीतटार्पितकरं सानुकम्प मनूपमम् ॥ ५२ ॥
दक्षिणेनतु हस्तेन भक्ताना मभयप्रदम् ।
पुष्पाभरणवस्त्राढ्यं शंखचक्रद्वयान्वितम् ॥ ५३ ॥
तत स्तस्मात्तु वै धाम्नो युगप न्निस्सृतं स्मरेत् ।
महत्स्फुलिंगसंकाशं महस्तु सततोदितम् ॥ ५४ ॥
तेन चाक्रमराबृन्दं समाक्रान्तंच भावयेत् ।
अथ प्रत्येकदेवांशा दुद्भूतं भावये त्क्रमात् ॥ ५५ ॥
त्रयं त्रयं सिताद्येच केशवाद्यं चतुर्भुजम् ।
दक्षिणोत्तरपाणिभ्यां पृष्ठतः केशवादिषु ॥ ५६ ॥
युग्मं युग्मं परिज्ञेयं क्रमेणोर्ध्वगतंच तम् ।
शंखचक्र कजंविद्या त्साथ शंखो थहेतिराट् ॥ ५७ ॥
विद्या चक्रंच तद्विद्या त्पद्म श्शंखश्च सोम्बुजम् ।
पद्मध्वजिगदाशंख स्वविद्याम्बुरुह स्त्वरी ॥ ५८ ॥
भूयो धामगणा त्तस्मा त्संस्मरे न्निस्सृतं महः ।
केशवादिविभागेन श्रियाद्यंच त्रयं त्रयम् ॥ ५९ ॥
कमलादित्रयेणैव त्वन्योन्यरवेन लांछितम् ।
बद्धपद्मासनस्थंच दिवि दिक्षुच सम्मुखम् ॥ ६० ॥
संवीजयेत्तु विनया च्चामरेण सितेनच ।
देवीद्वादशकंचैव तासां रूप मथोच्यते ॥ ६१ ॥
पूर्णचन्द्रानना स्सर्वा स्सर्वर्तुकुसुमान्विताः ।
सर्वलक्षणसम्पन्ना स्सर्वाभरणभूषिताः ॥ ६२ ॥
विद्रुमाभं त्रयं त्वाद्य मपरं चम्पकप्रभम् ।
प्रियंगुमंजरीश्यामं तृतीयं देवतात्रयम् ॥ ६३ ॥

चतुर्थं त्रितयं ध्याये ज्जातीपुष्पसमप्रभम् ।
आद्यायाः कमलं पाणा वन्यस्याहेतिराट्करे ॥ ६४ ॥
शंखं ध्याये त्तृतीयस्या एवं ध्याये त्त्रिषु त्रिषु ।
चतुस्त्रिदेवतान्ताना मेव माद्यं त्रयं क्रमात् ॥ ६५ ॥
स्मृत्वा सम्पूजनं कुर्या ज्जागरेण समन्वितम् ।
स्तोत्रै स्तथाऽनकै र्वाद्यै र्गीतकैः क्षपये न्निशाम् ॥ ६६ ॥
रात्रिक्षये ततः स्नाया त्सिताम्बरधर श्शुचिः ।
मालेशमन्त्रसन्नद्धं कृत्वा देवं स्मरे त्तथा ॥ ६७ ॥
पूजापनयनं कृत्वा स्नानकर्म समाचरेत् ।
मध्यतः केशव[केवल]स्यादौ [केशव]केवलस्य महात्मनः ॥६८॥
वासुदेव [ स्य ] स्व रूपस्य चक्रस्थस्य त्वनन्तरम् ।
प्रागेरभिनिविष्टस्य सकलस्या व्ययस्यच ॥ ६९ ॥
तदादिद्वादशानांच दद्या त्स्नानादिकं क्रमात् ।
अम्बुना पंचगव्येन क्षीरेण तदनन्तरम् ॥ ७० ॥
दध्ना घृतेन मधुना सर्वौषधिजलेनच ।
बीजाम्बुफलतोयेन गन्धपुष्पाम्बुना ततः ॥ ७१ ॥
हेम रत्नोदकेनाथ कुम्भस्थेन पृथक्पृथक् ।
सितं विलेपनं पुष्पं धूपम्मधुघृतं दधि ॥ ७२ ॥
नैवेद्यं विविधं पूतं व्रीहयोयवसंयुतम् ।
निवेद्य राजते पात्रे यथाशक्तिविनिर्मिते ॥ ७३ ॥
पात्राभावाच्च रजतं स्वल्पमात्रं न लोपयेत् ।
पश्चात्तद्भगवत्पूतं मधुपर्कादिकन्तु वै ॥ ७४ ॥
प्रतिपाद्य गुरो र्भक्त्या प्रसन्नेनान्तरात्मना ।
यवान्नं व्रीहिजं त्वादौ समश्नीया द्घृतान्वितम् ॥ ७५ ॥
ततः प्रभृति कालाच्च प्रत्यहं केशवस्यतु ।
स्थानद्वये निविष्टस्य पूजनंच समाचरेत् ॥ ७६ ॥

प्राग्वन्मध्ये केशवस्य देवीयुक्तस्य बाह्यतः।
ततो नारायणादीनां सदेवीनांच वैक्रमात ॥ ७७ ॥
सर्वेषां पूजनं कुर्या त्प्रादक्षिण्येन यत्नतः।
यथा सम्भवतो भक्त्या पुष्पधूपादिकेनतु ॥ ७८ ॥
यावदभ्येति दशमी सिता पौषस्य वैतिथिः।
ततः प्रभृतिकालाच्च प्रागुक्तविधिनाखिलम् ॥ ७९ ॥
नारायणाख्यमन्त्रेण व्रतकर्मसमापयेत ।
त मर्चये त्तु प्रथमं मध्ये कारुण्यमूर्तिगम् ॥ ८० ॥
बहिर्देवीसमेतंच प्राग्वत्स्नानादिना प्रभुम्।
द्वादश्यां तं विधानेन केशवेन समन्वितम् ॥ ८१ ॥
किं तत्र विहितं पश्चा त्पूजनं केशवस्यच।
दिनावसाने द्वादश्यां धूपं दत्वा क्षमापयेत् ॥ ८२ ॥
कान्तासमन्वितं देवं केशवं क्लेशनाशनम्।
अथ दामोदरान्ताभि र्मूर्तिभिश्च समन्वितम् ॥ ८३ ॥
देवं नारायणं भक्त्या परेहनि समर्चयेत्।
मध्ये केशवव त्पश्चा च्चक्रस्थं केशवारके ॥ ८४ ॥
केशवंच तदीये रे यजे त्कान्तासमन्वितम्।
एवं प्रतिदिनं ताव द्यावन्मासस्य सा तिथिः ॥ ८५ ॥
ततो माधव मूर्तेर्वै प्राग्वदाराधनं भवेत्।
तदर्चनं समाप्तेतु द्वादश्यां फाल्गुनस्यच ॥ ८६ ॥
संकर्षणं परत्वेन भावये द्वासुदेववत ।
तदाश्रितन्तु गोविन्दं मध्ये मूर्तं समाह्वयेत् ॥ ८७ ॥
च्चक्रस्थं सह देव्यावै ततस्तं पूज्यपूर्ववत।
रक्तचन्दन युक्तेन कुंकुमेन तथैव च ॥ ८८ ॥
पुष्पस्र ग्वाससा तद्व द्रक्तशाल्योदनेन च ।
सुगन्धेन फलै रक्तै र्लिप्तै र्वा रक्तपानभिः ॥ ८९ ॥

आरक्तरक्तसंसिद्धै विद्रुमैः पुरुभूषितैः ।
सक्तूंस्तु ताम्रपात्रेतु कृत्वाथ विनिवेद्यतु ॥ ९० ॥
तदर्चनेच होमान्ते सम्पन्ने सति वै प्रति ।
याते वासत्रये चैव प्रसन्ने न्तःस्थिते च्युते ॥ ९१ ॥
गुरुमूर्तिगतो देवः पूजनीयश्च भक्तितः ।
वस्त्रै विलेपनै र्माल्यैः कटकै रंगुळीयकैः ॥ ९२ ॥
यथाशक्ति विना शाठ्यं पारणे पारणे ततः ।
प्रीणयं द्वासुदेवश्च मूर्तित्रयसमन्वितम् ॥ ९३ ॥
ऐहि [कं] कान् धर्मकामा [र्थं] र्था न्मम यच्छन्तु शक्तयः ।
मोक्षविघ्नोपशमनं नित्यं कुर्वन्तु मूर्तयः ॥ ९४ ॥
सर्वदा नित्यशुद्धो यः परमात्मा परः प्रभुः ।
पतितस्य भवाम्बोधौ वासुदेवो स्तु मे गतिः ॥ ९५ ॥
कृत्वैवं प्रीणनं सम्य ग्वासुदेवस्य भक्तितः ।
तन्मूर्तित्रितयस्यापि शक्तित्रययुतस्य च ॥ ९६ ॥
अथ त्रितययुक्तस्य तृतीयस्य महात्मनः ।
सङ्कर्षणाभिधानस्य तत आरभ्य यत्नतः ॥ ९७ ॥
प्राग्व दाराधनं कुर्या त्प्रत्यहं मासभेदतः ।
पश्चा न्मासत्रये याते प्राप्ते ज्येष्ठस्य तद्दिने ॥ ९८ ॥
त्रिविक्रमाख्यमन्त्रेण चान्य त्सर्वं पुरोदितम् ।
मध्यतो भ्बुजगर्भस्थं प्रद्युम्नं सर्वगं स्मरेत ॥ ९९ ॥
त्रिविक्रमं तदाकारं भावयित्वा ततो यजेत् ।
अनन्तरंच संस्थाना दानीय प्रागरान्तरम् ॥ १०० ॥
यष्टव्यस्य विशेषेण त्वनुज्झिततनुः [ पुमान् ] क्रमात् ।
श्रीखण्डंच सकर्पूर मीषत्कुंकुमभावितम् ॥ १०१ ॥
पीतं विलेपनं चात्र तथा पुष्पफलादिकम् ।
पीतानां फलपुष्पाना मभा [वात् ] वे मसृणेनतु ॥ १०२ ॥

पूतेन धातुचूर्णेन रंजये त्कुंकुमेन वा ।
सघृतं हेमपात्रंच पूजान्ते विनिवेद्यच ॥ १०३ ॥
पात्राभावात् [ वै ] यथाशक्ति कांचनंच घृतोपरि ।
तत स्सम्पूजनं कुर्यात् व्रतादेष्टारि पूर्ववत ॥ १०४ ॥
गोहेमवस्त्रपूर्वैस्तु यथा सन्तोष मेति सः ।
तत्पूजान्ते पारणेन द्वितीयंच जगत्पतिम् ॥ १०५ ॥
प्रीणये त्संकर्षणं च गृहीत्वा पाणिना जलम् ।
प्रणवाद्येन तेनैव मन्त्रेणा द्योदितेनच ॥ १०६ ॥
सनमस्केन किन्त्वत्र गति स्संकर्षणोस्तु मे ।
अथ त्रिविक्रमं देवं वामनं श्रीधरं प्रभुम् ॥ १०७ ॥
यजे न्मासत्रयं ताव द्याव त्स्या द्दशमी सिता ।
तदादि वै हृषीकेश मन्त्रेणा खिल माचरेत् ॥ १०८ ॥
परत्व मनिरुद्धस्य प्राप्तेचावसरे स्मरेत् ।
तदाकारं हृषीकेशं पद्मोदर गतं स्मरेत् ॥ १०९ ॥
इष्ट्वासम्य ग्विधानेन चक्रारस्थं यथा पुरा ।
मन्त्रराजोप चारै [ र्लाभै ]स्तु षट्पदा[ है ] भैस्तुचार्चनं ॥११०॥
पुष्पौदनाम्बरैः कुर्या दभावाद [ वेचा ] अनामिना ।
पिंजरी कृत्य यत्नेन देवाय विनिवेद्यच ॥ १११ ॥
कृष्णागरु विमिश्रंच लेपनं चात्र कुंकुमं ।
धौतायसमयं पात्रं मणिभि श्चासितै श्चितम् ॥ ११२ ॥
वस्त्रैश्च चित्रितैः कृष्णैः पूजान्ते विनिवेद्यच ।
सम्य क्तदर्चनं कृत्वा यथा सम्पत्ति भक्तितः ॥ ११३ ॥
तृतीयं प्रीणये त्प्राग्व त्प्रद्युम्नो मेस्तु वैगतिः ।
ततो मासानुमासंच हृषीकेशा दनन्तरम् ॥ ११४ ॥
पद्मनाभं समभ्यर्च्य ततो दामोदरन्तुवै ।
गते मासत्रये ह्येवं सम्प्राप्य पुनरेवहि ॥ ११५ ॥

दशमीं मार्गशीर्षस्य तदा कर्माणि कर्माणि ।
चतुर्षु चातुरात्मीयं मन्त्राणां विनियोज्यच ॥ ११६ ॥
चतुर्मूर्त्यभिधानंच समालभ्यं यजेच्च तत् ।
कर्णिकोपरि पत्रेषु प्रागादि हृदयादिकम् ॥ ११७ ॥
विदिक्ष्वस्त्रं विभोरग्रे नेत्रं वै केसराणिच [श्रितं] ।
अरान्तरे तत स्स्वेस्वे दशद्वौ केशवादिकान् ॥ ११८ ॥
चतुर्वर्णैस्तु कुसुमै स्तथा वस्त्रानुलेपनैः ।
तद्धद्रक्ष्यैश्च नैवेद्यैः पानकैः पावनैः फलैः ॥ ११९ ॥
अथान्यै र्विविधै र्भोगैः ध्वजाद्यैश्चापि वाहनैः ।
मात्राभि स्साहिरण्याभि स्ताम्बूलेनात्मना ततः ॥ १२० ॥
तर्पये द्वह्निमध्यस्थं मन्त्रग्रामं यथोदितम् ।
ततोऽर्चनं गुरोः कुर्या द्विशेषेण पुरोदितम् ॥ १२१ ॥
ब्राह्मणान्भोजये त्पश्चा त्तेभ्यो दद्याच्च दक्षिणाम् ।
प्रीणनंच पठे त्प्राग्व दनिरुद्धोऽस्तु मे गतिः ॥ १२२ ॥
ततः पूर्णाहुतिं दद्या त्पश्चादिद मुदाहरेत् ।
व्रतोत्तमेना नेनाद्य मया भक्त्याकृतेनच ॥ १२३ ॥
चत्वारो वासुदेवाद्या मूर्तय श्शक्तिभि स्सह ।
प्रयान्तु प्रीति मतुलां दिशन्तु भविनो ऽभयम् ॥ १२४ ॥
धन्यं व्रत मिदं पुण्यं संसाराध्व निवर्तनम् ।
अल्पक्लेशमसम्पूर्ण मनन्तफलदं नृणाम् ॥ १२५ ॥
ना वसाद स्त्वतः कार्य एतदाचरणे तु वै ।
यथो पसदनैः कार्य मधमै र्मध्यमै र्जनैः ॥ १२६ ॥
अशाठ्येन यथाशक्ति त्वारण्यैः कुसुमादिकैः ।
अद्भि र्दूर्वाङ्कुरैः पत्रै र्जप जागरणादिना ॥ १२७ ॥
दीपेना भ्युक्षणेनैव मार्जनेनो पलेपनैः ।
व्रीहीन् सक्तू नथाज्यंच तिला न्यन्नान्यथा हरेत् ॥ १२८ ॥

संवत्सरस्य पूजार्थं दानार्थं प्राशनायच ।
पूर्वं मासत्रयं दद्या द्व्रीही न्वै विनिवेद्यच ॥ १२९ ॥
द्वादश्यां भोजना त्पूर्वं हितं तत्प्राशनं सदा ।
अपरं सक्तवश्चैव तृतीयं त्रितयं घृतम् ॥ १३० ॥
तिलानां त्रितयं चान्य त्प्राशनं चैव मेव हि ।
स्या दद्यैकादशीपूर्णा द्वादश्याथ तया सह ॥ १३१ ॥
परे हनि तदा कुर्यात द्वादश्या मर्चनादिकम् ।
संवत्सरस्य वैमध्याद्य स्त्वेकां कर्तु मिच्छति ॥ १३२ ॥
तस्या मपि स्वमन्त्रेण कर्मपूजान्त माचरेत् ।
यथा प्राप्तैस्तु पुष्पाद्यैः प्रागुक्तांगै स्सहार्चनम् ॥ १३३ ॥
पररूपस्य मध्येतु पूजनं स्वे [ नके ] न्वगेव हि ।
केवलस्य तु तस्यैव स्वनाम्ना प्रीणनं हितम् ॥ १३४ ॥
पारणं प्रा ग्विधानेन त्वेकं भूरिफलप्रदम् ।
तस्मा द्वे त्रीणि वा कुर्या त्स्वशक्त्या श्रद्धया न्वितः ॥ १३५ ॥
नारी ह्यनन्यशरणा यद्येवंहि समाचरेत ।
निस्स्वामिका वानुज्ञाता पत्या साथाप्नुयाच्च तत् ॥ १३६ ॥
अथापवर्गदं वक्ष्ये चातुर्मास्यं व्रतोत्तमम् ।
यत्कृत्वा भिमता न्कामा निहैव लभते नरः ॥ १३७ ॥
गृह मासाद्य निर्बाधं देशे वा जननाकुले ।
यथाविभवविस्तीर्णं तुर्याश्रं वा यथायतम् ॥ १३८ ॥
धूमनिर्गमनोपेतं गवाक्षगणभूषितम् ।
इष्टकाद्यै श्चितं कुर्या त्तन्मध्ये पिण्डि [ ला ] कात्रयम् ॥ १३९ ॥
चतुरश्रंच विच्छिन्नं भूमेः किञ्चि त्समुन्नतम् ।
ततो दक्षिणदिग्वेदे रूर्ध्वं कुण्डन्तु पूर्ववत् ॥ १४० ॥
मध्ये चन्दनमिश्रेण रोचना कुंकुमेन च ।
गोक्षीरमर्दितेनैव मासि मासि लिखे च्छुभम् ॥ १४१ ॥

चक्रं षट्पत्रगर्भन्तु स्नानपीठ मुदग्दिशि ।
तत स्त्वाषाढमासस्य दशम्या मुदितेन्दुना ॥ १४२ ॥
वासुदेवाख्यमन्त्रेण तोय मादाय पाणिना ।
भगवन्पुण्डरीकाक्ष सर्वभूतपते ऽच्युत ॥ १४३ ॥
व्रतं मे त्वत्प्रसादेन निष्पद्य तु तवाप्तये ।
ततो र्चये द्वासुदेवं द्वादश्यां कमलोदरे ॥ १४४ ॥
प्रागादावथ पत्राणां त्रयं संकर्षणादिकम् ।
प्रादक्षिण्येन विन्यस्य यावद्रक्षः पदच्छदम् ॥ १४५ ॥
ईशानपद पत्राच्चा प्यनिरुद्धादिकत्रयम् ।
अप्ययेन तु सम्पूज्य याव त्पश्चिम दिग्दळम् ॥ १४६ ॥
भूतावासं पुनर्मध्ये तत श्चक्रारकेषु च ।
क्रमेण पूर्वा दारभ्य न्यासं पूजनमाचरेत् ॥ १४७ ॥
वामनं चाथ तद्देवीं भूमन्त्वंच तत शिरः ।
श्रीधर स्त्वथ तत्कान्ता शिखाकवचमेवच ॥ १४८ ॥
हृषीकेशश्च तत्पत्नी ह्यस्त्रं तदनु लोचनम् ।
ध्यानं स्नानं तथा पूजां होमं जपसमन्वितम् ॥ १४९ ॥
क्रमेणानेन सर्वेषां सर्वदैव समाचरेत् ।
द्वादश्यां श्रवणस्याथ मध्ये संकर्षणं यजेत् ॥ १५० ॥
तत्पत्राभ्यां वासुदेवं चक्रारेष्वथपूर्ववत् ।
तृतीयं पद्मनाभाद्यं तथा देवीं हृदादियत् ॥ १५१ ॥
ततो नभस्य द्वादश्यां प्रद्युम्नः कर्णिकागतः ।
आद्यस्तत्पत्रगो ऽराणां त्रयं नारायणादिकं ॥ १५२ ॥
देव्यश्चैवांगषट्कंतु पूर्ववच्चारकान्तरे ।
ततस्तदग्र द्वादश्या मनिरुद्धं यथापुरं ॥ १५३ ॥
पत्रयुग्मे तदीयेतु चादिदेवं यजेत्क्रमात् ।
त्रिविक्रमान्तं विष्णवाद्यं शक्तिरंगान्यथादिवत् ॥ १५४ ॥

तथा सिद्धे मन्त्रवरैः कर्म निःशेष माचरेत् ।
द्वादश्यां पूर्ववन्मध्ये षडङ्गन्तुलयरूपधृक् ॥ १५५ ॥
मूर्तयोऽरान्तरस्थाश्च नेमिस्था देवतागणाः ।
पूजाहोमो विशेषेण पूर्णान्तं पूर्ववोदितम् ॥१५६॥
इत्येतत्सविशेषंच व्रतमुक्तं समासतः ।
यत्कृत्वा पुनरप्यत्र जायते न पुनर्भवे ॥१५७॥

इति श्रीपाञ्चरात्रे श्री सात्वतसंहितायाम्
संवत्सरविधि र्नाम

अष्टमः परिच्छेदः ॥८॥

---

## अथ नवमः परिच्छेदः ।

---

श्रीनारदः ।

अथवाङ्गिनात्रैव अङ्गभृ त्परिचोदितः ।
यतच्छृणुत विप्रेन्द्राः कथ्यमानं मयाधुना ॥ १ ॥

संकर्षणः ।

सूक्ष्मव्यूह विभागेन समाद्यावन्तसंस्थितम् ।
परस्य ब्रह्मण स्त्वन्य ज्ञातमाराधनंमया ॥ २ ॥
इदानीं श्रोतुमिच्छामि विभोस्सिद्धिमवाप्तमः ।
आराधनं यथातच्च भविनामीप्सितप्रदम् ॥ ३ ॥

भगवान् ।

वैभवीयो महाबुद्धे देवतानिचयोमहान् ।
यदुक्तस्ते मयापूर्व मेकैकं विद्धि तत्त्रिधा ॥ ४ ॥

चतुर्णां युगसन्धीनां युगानाञ्च तथैवहि ।
छिन्नविच्छिन्न दोषाणां विनाशाय समुद्यतं ॥ ५ ॥
सितरक्तादिरूपेण ध्वजदण्ड करांकितं ।
कार्यारम्भे तथाऽध्ये ह्यवसानेतु सर्वदा ॥ ६ ॥
सन्धत्ते रूपमात्मीय मेकमेव त्वनेकधा ।
अयतेसर्वलोकानां स्वधर्मकामरूपवत् ॥ ७ ॥
अद्भुतेनवपुषा कुन्देन्दुधवलेनच ।
वीरासनादिनाचैव स्थितमनुद्विग्नमानसं ॥ ८ ॥
लीलाविधूतसर्वाङ्गं सौम्यपद्मासनाकुलं ।
धियादोषगणंसर्वं भ्रंशयन्तंच मोक्षिणां ॥ ९ ॥
तद्व्यक्तं शान्तसंज्ञंच रूपंरूपवतांवरं ।
प्रकाशयतिसन्मार्गं समाधिनिरतात्मनां ॥ १० ॥
तेजोमयं यत्तद्रूपं वैभवं शान्तसंज्ञकं ।
उपासकानां भक्तानां सर्वसम्पत्फलप्रदाः ॥ ११ ॥
आलोकालिनिचारेण त्वेकैकस्य महामते ।
आराधनार्थंविहितो वाचकोहि चतुर्विधः ॥ १२ ॥
संज्ञानानापदमयः पिण्डाख्यो बीजलक्षणः ।
एभ्योमध्यात्त्वथैकेन वाच्यमानन्तयभक्तितः १३॥
यत्रैकपिण्डवाक्योऽथ मन्त्रेणाथो भयात्मना ।
अभिन्नलक्षणोवाच्य स्वरूपेणोपचर्यते ॥१४॥
तत्रवैदिविधिनानेन कुर्वाणाभ्यां द्विकल्पनां ।
कृतादीनाममन्त्रस्य बीजं पिण्डाक्षरन्तुवा ॥१५॥
नयेत्तेनाभिमुख्यञ्च वाच्यमाद्यन्तगेनवा ।
ततन्त्वयपदमन्त्रन्तु विधिनानेनवैततः ॥ १६ ॥
कुर्यात्प्रणवपीठार्थं नमस्कारध्वजान्वितम् ।
आभ्यां शान्तस्वरूपत्वा देकत्व मत एव हि ॥ १७ ॥

तथाकाराक्षवर्णस्य क्षेत्रज्ञत्वं विधीयते ।
क्षेत्रस्य मयशिष्टानां वर्णानां पिण्डरूपिणाम् ॥ ३० ॥
केवलस्य हि बीजस्य स्वस्थिति र्ब्रह्म वर्ण [र्णि] ना ।
स्वासाधनकुशि बीजं बीजीत्याग स्तथाकृतिः ॥ ३१ ॥
बीजस्य पिण्डरूपाणां परिस्त्रैव स्वसदोदयः ।
य बीजरूपं मन्त्रं स्वासार्थ्यं [ सामर्थ्यं ] वैष्णवं महत् ॥३२॥
असंकलेन मन्त्रंरूपाणां आकलानां भिन्नरूपिणाम् ।
सर्वथापरिज्ञाना व्यापकानां त्वमर्नुनात् ॥ ३३ ॥
भुवना मन्त्रवर्णानां निर्बीजं पद मुच्यते ।
सर्वाभिमतसिद्धिं स्त्या त्साधकस्य सदैव हि ॥ ३४ ॥
पिण्डादि भ [ मं ] गवन्मन्त्र मूर्तीनामेव मेवहि ।
परिज्ञाना द्रूपे किन्तु पिण्डा त्तास्थैर्यं मुत्तमम् ॥ ३५ ॥
नानात्वं साममन्त्राश्च नानालोकान्तरो स्थितम् ।
भये त्सर्वपद प्राप्तिः परिज्ञाना स्पदाभिधात् ॥ ३६ ॥
सबीजंदा सपिण्डं वा मन्त्राणां यत्परं द्वयम् ।
विदधानिपदं स्वं स्वं किन्त्वाद्यं भावयेत्परम् [ रं ] ॥ ३७ ॥
मन्त्रक्षेत्रज्ञ रूपत्वा यस्मा त्सर्वेश्वरो ऽच्युतः ।
व्याप्य व्यापकरूपेण वर्तते ऽनुग्रहेच्छया ॥ ३८ ॥
व्याप्यरूपेण भूलोका द्योगा दारभ्य चाखिलात् ।
षाड्गुण्यमहिमान्त [ मिमान ] श्च ददाति फलमुत्तमम् ॥ ३९ ॥
स्वपदं भोगखिन्नस्य दिव्यदेहस्य कर्मिणः ।
क्षेत्रज्ञ बीजपिण्डात्मा निरावरण लक्षणः ॥ ४० ॥
ज्ञानं यदमलं शु [ चि ] द्धं संयच्छत्यात्म लाभदम् ।
शक्तिव्यक्ति मयत्वं च जाग्रद्वृत्तेः परात्मनः ॥ ४१ ॥
एवं संज्ञात्मन स्स्वप्न वृत्ते रेकत्व मस्ति च ।
सुषुप्तिवृत्तेः पिण्डाख्य मन्त्रस्यैव महामते ॥ ४२ ॥

बीजात्मन स्तस्यवृत्ते श्शक्तिव्यक्तित्व मस्तिवे ।
व्यक्तिज्ञान वक्तोवेता नियता यद्यपि स्मृता ॥ ४३ ॥
भगत न्मन्त्रमूर्तीनां तथापि परमात्मनः ।
आद्यस्य चातुरात्म्यस्य केवलस्या प्रा विभोः ॥ ४४ ॥
चतुष्प्रकारं यन्मन्त्रं विद्धि तन्मोक्ष भूतिदम् ।
अतो न्यथा यदुद्दिष्ट ममिश्रं मिश्रमेवहि ॥ ४५ ॥
फलं भागवशा च्चैव त तथा विद्धि नान्यथा ।
ज्ञात्वैव मर्चयेत् त्पश्चा न्नानामन्त्रै र्महामते ॥ ४६ ॥
गोणलुत्कादि [ शि ] गुणैस्तु प्रादुर्भावगणं विभोः ।
महाज्योति स्स्वरूपस्य सहैव चतुरात्मना ॥ ४७ ॥
प्रागजाग्र त्पदसंस्थस्य लेशेनोक्तं तदर्चनम् ।
इदानीं ह विशेषेण मन्त्रध्यान क्रियान्वितम् ॥ ४८ ॥
प्रवक्ष्यामि समासेन श्रुणुष्वायत लोचन ।
विशाखयूपो भगवान् स्वयं विश्वसिसृक्षया ॥ ४९ ॥
अध्यक्षेण स्वरूपेण समुदेत्यकृपतहि ।
महिमानन्तु निश्शेषं शुद्धसंवि त्पुरस्सरम् ॥ ५० ॥
आदायाद्यप [ दार्थ ] दस्थस्य चातुरात्म्यस्य वै विभोः ।
यथाचाधारभूयि[तथाचासारभूमि]ष्ठ देवानां चेष्टितं हि तत् ॥५१॥
स्थितादयः कान्तयोपत् अर्चादिकश्च महामते ।
स लाञ्छनं वैभवीयं सायुधं बीजमेवतु ॥ ५२ ॥
ज्ञानाद्यं गुण षट्कश्च तदुक्ता श्शक्तयो खिलाः ।
अणिमा घष्टकं चैव स्थित्युत्पत्ति लयो दयाः ॥ ५३ ॥
शक्ति स्सा चातुरात्मीया तथै श्वरी त्यभिधीयते ।
यथार्क किरण व्रात न्यत्तथा तेजः कणो महान् ॥ ५४ ॥
स्व कारणं विना सर्वं मा पूरयति गोचरम् ।
स्वातन्त्र्या त्परिपूर्णाशा त्तद्वत्स परमेश्वरः ॥ ५५ ॥

विहाय वासुदेवाद्यं मूर्तिशाखाचतुष्टयम् ।
वैभवीयस्य पूर्वस्य पतित्वेना वतिष्ठते ॥ ५६ ॥
सम्भूति स्थिति संहार भोग कैवल्य लक्षणम् ।
प्रेरयन्वै धिया चक्रं पंचार मिद मुत्तमम् ॥ ५७ ॥
स्मर्तव्य स्स्वपदस्थ स्स्व बीजेन स्वामकात्मना ।
आमूर्द्धतो धिरर्यन्तं तदीयं गात्र मण्डलम् ॥ ५८ ॥
रक्षत द्वैभवीयैस्तु बीजै भोव्य मलंकृतम् ।
क्रमा दुच्चार्यमाणै स्तै रमृतौघेन पूर्ववत् ॥ ५९ ॥
पूजना त्परमेशस्य मचिरा देव गच्छति ।
शृणुतद्बीज निचयं सावधानेन चेतसा ॥ ६० ॥
यत्प्रसादा त्परां सिद्धिं प्रयान्ति भगवन्मयाः ।
शुचौ देशे मनोज्ञेच सुलिप्ते पुष्प भूषिते ॥ ६१ ॥
चन्दनक्षोद संयुक्ते धूपेना धिवासिते ।
विलिख्यमातृका चक्रं भेदे नानेन वै पुनः ॥ ६२ ॥
येन सन्दृष्ट मात्रेण शतधायाति कल्मषम् ।
आगादौ पंचवर्गान्तं मध्यान्तं मध्यतो लिखेत् ॥ ६३ ॥
याद्यो नव नाभिस्था आद्य ष्षोडशारगाः ।
कादयो नेमिगा स्सर्वे पूर्वचक्रे यदक्षरम् ॥ ६४ ॥
तदस्मि न्नाधि भूतन्तु पूजयेद्विधिना ततः ।
शब्दब्रह्म मयं चक्र मर्घ्यं पुष्पादिकैः क्रमात् ॥ ६५ ॥
तन्मध्या दुद्धरेदादौ सर्वेषां कारणं हि यत् ।
उदकस्थ मक्षरं चाक्षा दरान्ताख्येन भूषितम् ॥ ६६ ॥
विद्धि सर्वेश्वरस्येदं बीजं निर्बीज कारणम् ।
एतदेवाब्ज माभस्य विसर्ग सहितं स्मृतम् ॥ ६७ ॥

नेमिवर्गां द्वितीयं वै ततोरा स्षष्ठ मक्षरम् ।
अष्टमं नाभि देशाञ्च तत्संख्यं नेमि मण्डलात् ॥ ६८ ॥
नेमिपूर्व मतोनाभे स्सप्तमं पंचमारगम् ।
अरा श्चतुर्दशं त्वशा त्पश्चिमाशा गतं हि यत् ॥ ६९ ॥
नेमे रेकादशं चाथ षोडशंच त्रयोदशं ।
पंचमं नाभिदेशाञ्च नेमे रेकोन विंशकम् ॥ ७० ॥
तदन्तं सप्तमं चैव नवमं हि महामते ।
नाभे द्वितीयं तदनु नेमे स्तत्संख्य मेवच ॥ ७१ ॥
द्वादशंच बहिष्ठेभ्यो दशमं षोडशा त्परम् ।
नाभिपूर्वं ततो वर्णं नेमेः पंचदशं हियत ॥ ७२ ॥
तुर्यसंख्य मराद्बीजं ततो नाभि चतुर्थकम् ।
षष्ठं नेमे श्चतुर्थश्च मध्यम [मा] क्षा स्तथा हरेत ॥ ७३ ॥
तत्रैव पूर्वदिक्स्थंय द्वाद्वा द्वै पंचमं ततः ।
अक्षा द्दक्षिणदिक्संस्थं नेमेरष्टादश ततः ॥ ७४ ॥
द्वितीयंनाभि देशाञ्च तदन्ते सप्तमारगम् ।
चतुर्दश मथोनेमे ष्षष्ठंनाभे रथा हरेत ॥ ७५ ॥
सर्वं कारणव न्मूर्ध्ना योजनीया स्वमाखतः ।
प्रणवाद्यानमोन्ताश्च तेजसार्तीव निर्भराः ॥ ७६ ॥
पद्मनाभादयो देवा वाच्या स्तेषां क्रमेणतु ।
पद्मनाभो ध्रुवोनन्त श्शक्त्यात्मा मधुसूदनः ॥ ७७ ॥
विद्याधिदेवः कपिलो विश्वरूपो विहंगमः ।
क्रोडात्मा बडबावक्रो धर्मो वागीश्वर स्तथा ॥ ७८ ॥
देव एकार्णवशयः कूर्मःपाताळधारकः ।
वराहो नरसिंहश्चा प्यमृता हरणस्तुवै ॥ ७९ ॥
श्रीपति र्दिव्यदेहोथ कान्तात्मा मृतधारकः ।
राहुजित्कालनेमिघ्नः पारिजातहरोमहान् ॥ ८० ॥

लोकनाथस्तु शान्तात्मा दत्तात्रेयो महाप्रभुः ।
न्यग्रोध शायी भगवा नेकश्रृंगतनुस्ततः ॥ ८१ ॥

देवोवामनदेहस्तु सर्वव्यापीत्रिविक्रमः ।
नरोनारायण [ नारायणोनर ] श्चैव हरिः कृष्णस्तथैवच ॥८२॥

ज्वलत्परशु धृग्रामो रामश्चान्यो धनुर्धरः ।
वेदविद्भगवान् कल्की पाताळ शयनःप्रभुः ॥ ८३ ॥

प्रादुर्भाव गणोमुख्य इत्युक्तस्ते समासतः ।
शक्तिसङ्घ प्रधानोय श्शक्तिसङ्घ स्सउच्यते ॥ ८४ ॥

लक्ष्मीः पुष्टिर्दयानिद्रा क्षमाकान्ति स्सरस्वती ।
धृतिर्मैत्री रतिस्तुष्टि र्मतिर्द्वादशमीस्मृता ॥ ८५ ॥

प्रधानभूतां श्शारीरा नलंकारान्नि बोधमे ।
किरीटः कौस्तुभोभाग्यः ? श्रीवत्सो मृतलक्षणः ॥ ८६ ॥

वनमालेतिगरुडः प्रधानात् हेतिकान् शृणु ।
चक्रं शङ्खो गदापद्मं लाङ्गलं मुसलंशरः ॥ ८७ ॥

शार्ङ्गश्च खड्गखेटौतु दण्डः परशुरी रितः [ तिहा ] ।
पाशाङ्कुशौ कुठारश्च वज्रश्शक्ति समन्वितः ॥ ८८ ॥

इत्येत द्देवताचक्र मङ्गमन्त्रगणान्वितं ।
विग्रहेदेवदेवस्य संलीनमवतिष्ठते ॥ ८९ ॥

वक्ष्येभावोपकरणं गीर्वाणगणमुत्तमं ।
नानाविभव मूर्तीनां योवातिष्ठेत शासने ॥९०॥

कालोवियन्नियन्ताच शास्त्रं नानाङ्ग लक्षणं ।
विद्या[illegible]तयश्चैव समुद्रास्सगणा शिवाः ॥ ९१ ॥

प्रजापति समूहश्च इन्द्र स्सपरिवारकः ।
मुनय स्सप्तपूर्वेन्ये ग्रहास्तारादिकैर्वृताः ॥ ९२ ॥

[illegible]लाश्च सिद्धानागा स्तवप्सरोगण उत्तमः ।
ओषध्यश्चैव पशवो यज्ञास्साङ्गा सिलाश्चये ॥९३॥

विद्याचैवा परा विद्या पावकश्चैवनाहतः ।
चन्द्रार्कौ वारिविद्युधे इत्युक्तनमलेक्षण ॥९४॥
चतुर्विंशतिसंख्यश्च भवोपकरणं महत् ।
भवस्त्वाश्रमप्रधानन्तु स्वापकोजडलक्षणः ॥९५॥
मन्त्रमन्त्रेश्वरन्यासा स्त्वोपिपूज्यस्य येतिच ।
इत्येवमादि सर्वेषां भविनां परमेश्वरः ॥९६॥
स्थितोन्तर्यामिभावेन रूपमास्त्राय निष्कळं ।
आप्तकामस्सभगवान् स्वव्यापारवशेनतु ॥९७॥
स्वांशक्तिमवलंब्यास्ते पद्मनाभात्मना पुनः ।
धराम्बुहुतभुग्वात मूलनाळदळोदरे ॥९८॥
चतुस्तत्वमयेपद्मे गगनैकार्णवोदरे ।
मानसे ऽनन्तशयने दिव्यबोधतनुर्विभुः ॥९९॥
सहस्रांशु सहस्राभ उत्तानस्थोहिलीलया ।
ततो विविधरत्नाभे तदीये नाभि पुष्करे ॥१००॥
मोद्वहंस्तु स्ववीर्येण विद्यासामर्थ्य विग्रहाम् ।
मूर्तैर्ध्वजादिकैस्सर्वै रावृतस्सत्पराग्रणैः ॥१०१॥
अनन्तचेष्टस्यविभो रित्येवं त्वीश्वरात्मनः ।
भोगापवर्गदं रूपं शान्तव्यक्तंच वैभवम् ॥१०२॥
प्राग्वत्तुर्यपदावस्थं स्मरेद्धृत्कमलाम्बरे ।
तदधःकर्णिकामध्ये त्वभिजातो [ शान्तो ] पलद्युतिम् ॥१०३॥
दिशोदश द्योतयन्तं नानागात्रस्हैश्चितम् ।
सौम्याद्धिरष्टवर्षंच राजीवदळलोचनम् ॥१०४॥
भ [ आ ] चक्र चक्रपुग्दे [ हृद्दे ] वं गदा देहं [ हारं ] तथैवच ।
शक्ति माधार संज्ञांच मोद्वहन्तं स्मरेद्धवम् ॥१०५॥

स्थितोयस्तम्भभूतस्तु अस्मिन्वै विश्वमन्दिरे ।
नभोनिळात्मनाचैव भूमिका भिन्नलक्षणे ॥१०६॥
प्रागादावीशकोणान्तं संस्मरे त्कर्णिकोपरि ।
द्विषट्कं यदनन्ताद्यं सरश्चाद्यन्त मग्निगम् ॥१०७॥
तत्संख्यं केसरोर्ध्वस्थं तद्व त्कूर्मादिकं न्यसेत ।
न्यग्रोधशायिपर्यन्त ममृताधारमण्डले ॥ १०८ ॥
सूर्यचन्द्र [क्र] समारूढं दळभूमिगमं [तं] ततः ।
पाताळशायिपर्यन्त मेकशृंगादिकं हि यत् ॥ १०९ ॥
न्यस्यैव ममृतोत्थैस्तु भोगै रभ्यर्च्य मानसैः ।
यथावद्ध्यानयोगेन प्राग्व त्सृष्टिक्रमेण तु ॥ ११० ॥
पुन स्संहृतियोगेन पाताळशयना त्तु वै ।
यावद्गगनशाद्यंत मर्चनीयं फलाप्तये ॥ १११ ॥
य उक्त स्समुदाये स्मिन् हृद्यागे देवतागणः ।
यजे द्विन्नक्रमेणैव विधिना नेन तं पुनः ॥ ११२ ॥
त्रिकं [ त्रयं ] यद्वै द्विषट्कानां त्रिस्थानस्थं प्रकाशितम् ।
पृथ क्पृथ क्तदेकैकं न्यस्य न्यस्य यजे त्क्रमात् ॥ ११३ ॥
प्रतिद्वादशकस्याद्यः प्रागुक्तेन क्रमेण यः ।
तं निष्कळात्मना पूर्व मिष्ट्वा वै कर्णिकोदरे ॥ ११४ ॥
समुत्थाप्य ततो मध्या त्तमेव सकळात्मना ।
न्यस्ये दाधारभूतश्च सर्वत्र कमला दधः ॥ ११५ ॥
तमेवार्घ्यादिना ऽभ्यर्च्य कमलच्छदकोटिगम् ।
द्वितीयं कर्णिकामध्ये तदग्रे केसरोर्ध्वगम् ॥ ११६ ॥
ध्यात्वा न्यस्य तृतीयन्तु ततः पत्राष्टकेष्टकम् ।
द्वादशाख्याहि सर्वत्र गगने पद्मनाभवत् ॥ ११७ ॥
भक्तोपकरणीयाभि र्देवताभि स्समावृतः ।
य स्त्वङ्गदेवतासंघ स्सर्व स्स [त्र] कमला द्बहिः ॥ ११८ ॥

न्यस्यैव मर्चनं कुर्या दिव्यै भोगै स्तु पूर्ववत् ।
मूर्तौ मण्डलमध्येच बहि रग्नौ जलाशये ॥ ११९ ॥
स्वमन्त्रेणाम्बरस्थस्य मूर्तं स्रक्चन्दनादिकम् ।
दातव्यं कर्णिकामध्ये न्यस्तमन्त्रस्य मूर्धनि ॥ १२० ॥
प्रतिबिम्बति तद्यस्मा त्तद्वत्तद्वारदर्पणे ।
यस्य यस्य यदा यस्मि न्नाकारे रमते मनः ॥ १२१ ॥
भोगाप्तये वा मोक्षार्थं तं तं मध्ये ऽर्चयें त्तदा ।
तदुद्देशेर्चनं कुर्या त्तत्स्थानमच्युतस्य वा ॥ १२२ ॥
नानासिद्धिप्रदानाच्च सह संहारमूर्तिना ।
एव मेवांगमन्त्राणा मर्चना दीप्सितं लभेत् ॥ १२३ ॥
तन्नायं हि विशेष स्स्या द्भिन्याले तन्निबोध मे ।
भूलोकाखिलसिद्धीना माप्तये ताव दुच्यते ॥ १२४ ॥
प्राग्वद्वादशकाद न्त्या [ न्त्या ] देकश्रृंग मथो यजेत् ।
आव्यं यदंगमन्त्रन्तु कर्णिकायां न्यसे त्ततः ॥ १२५ ॥
अथ केसरकोटिस्थं स्मरे त्तत्पुरतो परम् ।
पश्चा द्दळा त्क्रमांतस्थं दळाग्रस्थं द्विरष्टकम् ॥ १२६ ॥
पाताळ शायिनं [ शयनं ] मध्ये मन्त्रस्योपरि पूर्ववत् ।
ध्याये न्निश्शेषपाताळसिद्धीना माळयं परम् ॥ १२७ ॥
तच्छक्त्यनुगृहीतस्तु मन्त्रेशः कर्णिकागतः ।
समस्तसिद्धिदाने स्या दाश्रितस्यांगसंज्ञकः ॥ १२८ ॥
एव मेव भुव र्लोकसिद्धीनां प्राप्तये सदा ।
स्मरे दूर्ध्वं सरश्शायी त्वनन्तः कमला दधः ॥ १२९ ॥
यजे द्गगनसिद्धीना मशेषाणा मथाप्तये ।
तस्यान्यग्रोधशयनं कूर्मं कमलमूलगम् ॥ १३० ॥

श्रीभगवानुवाच ।

एते षाम पि संचारो नानासिद्ध्यपेक्षया ।
प्रधानमन्त्रव त्कुर्या त्माग्य त्सवैन सर्वदा ॥ १३१ ॥
एव माद्यैस्तु विधिव द्भोगै र्नानाविधोत्थितैः ।
यः स्थित स्त्रिविधे सर्गे विभवः पारमेश्वरः ॥ १३२ ॥
पौष्कराख्ये च वाराहे प्राजापत्ये महामते ।
सूक्ष्मत्वेन च निश्शेषं मत्येकस्मि न्हि वर्तते ॥ १३३ ॥
समाश्रित्य बृहत्त्वं च तृतीयांशेन तिष्ठति ।
यथोक्तक्रमयोगेन युक्त स्स्वर्गं न्नयेतु वै ॥ १३४ ॥
परिवारं समादाय भवोपकरणान्वितम् ।
दिक्पालकगणोपेतं समाक्रम्य तमेव हि ॥ १३५ ॥
अभिधानाक्षरं पूर्व मरान्ताद्येन भूषितम् ।
योक्तव्य मभिधानेन पूर्वोद्दिष्टेन वर्त्मना ॥ १३६ ॥
पूजार्थं चैव सर्वेषां क्रमे स्मिन् सम्प्रकाशितम् ॥ १३६–॥

इति श्रीपाञ्चरात्रे श्रीसात्वतसंहितायाम्

विभवदेवतान्तर्यागो नाम

नवमः परिच्छेदः ॥ ९ ॥

---

## अथ दशमः परिच्छेदः ।

---

नारदः ।

अथ तद्भक्तिनाविष्टो श्रीदिव्यःपरमेश्वरः ।
दत्तात्मकर्पितात्मेव चेतसा संयतेन तु ॥१॥

सङ्कर्षणः ।

मण्डलेऽग्नौ बहिर्वाथ जलमध्ये त्वयार्चनं ।
नोक्तं विभवदेवानां व्यक्तं कृत्वा तदादिश ॥ २ ॥

भगवान् ।

सुलक्षणेतु भूभागे समेपूर्वं कृतलक्षणे [ समुद्धे ] ।
तत्रमण्डल [ प ] मालेख्यं सर्वेषामेकमर्चने ॥३॥
चतुरश्रं चतुर्द्वारं पीठावयवसंयुतं ।
षट्त्रिंश हृत्पद्मेन मध्यतश्चाप्यलंकृतं ॥ ४ ॥
वितानध्वजसंवीतं किंकिणीदर्पणान्वितं ।
तोरणव्यजनच्छत्र चामर स्रग्विमण्डितं ॥५॥
उक्तानुक्तमशेषन्तु कृत्वापूर्वोक्तलक्षणं ।
ततस्तु करयोर्न्यस्य विग्रहे बीजमैश्वरं ॥ ६॥
समालम्ब्यच तादात्म्य महिमानंतु निश्चलं ।
बध्वाचवैभवीं मुद्रां स्पृशेत्सर्वांगकंतया [ था ] ॥ ७ ॥
समुच्चार्यधियासन्नं मन्त्रग्रामं क्रमास्थितं ।
सर्वदेवमयंदेह मेवंस्मृत्वा स्वकम्पुरा ॥८॥
अन्तश्चक्र निविष्टन्तु संस्मरे द्धृद्रपीठवत् ।
मण्डलं देवताधारं चक्रमन्त्रेण तद्यजेत ॥९॥
ततस्तु सर्वमन्त्राणां विन्यासं तत्रचेतसा ।
समाचरे द्यथायोगं पुष्पदान पुरस्सरं ॥१०॥
ध्रुवात्मा भगवान्मध्ये कर्णिकाया मतःक्रमात् ।
दिक्चक्र मभिवीक्षन्तं प्राग्दलादादितोन्यसेत् ॥ ११॥
पाताळशायि पर्यन्त मनन्ताद्यं म्महामते ।
न्यसे न्कमल बाह्येतु ईशा द्बहि पदावधि ॥१२॥

चतुष्टयं किरीटाद्यं मन्त्राणां पूर्वचोदितम् ।
उदग्दक्षिण आप्याद्ये पैठीये दिक्चतुष्टये ॥ १३ ॥
द्वंद्वद्वयन्तुलक्ष्म्याद्यं विनिवेश्यं यथाक्रमम् ।
तत्रैवशेशकोणात्तु यावद्वायुपदावधि ॥ १४ ॥
द्वयंद्वयंक्षामाद्यंच मत्यन्तं सन्निवेश्यच ।
बहिः पीठस्यनिकटे चाग्रतोवैपतत्रिराट् ॥ १५ ॥
चक्रा त्कमळ पर्यन्तं चतुष्कं शाङ्करात्पदात् ।
वायुकोणावधेर्यावत्पीठबाह्येतु योजयेत् ॥ १६ ॥
सौम्ययाम्याप्य पूर्वाशा वस्थितंच द्वयंद्वयम् ।
लांगलाद्यं परश्वन्त मष्टकं तद्वदेवहि ॥ १७ ॥
याम्यसौम्याप्यपूर्वाशा गतं द्वा चतुष्टयम् ।
पाशाद्यं वज्रपर्यन्तं शक्ति कोण चतुष्टये ॥ १८ ॥
आईशकोणनिकटात पदात्तन्निकटेस्थितम् ।
प्रदक्षिण क्रमेणैव पदं याव द्वितीयकम् ॥ १९ ॥
कालादीनाश्चविन्यासः कार्यश्चानुक्रमेणतु ।
यज्ञान्ताना म्महाबुद्धे षोडशानां यथास्थितम् ॥ २० ॥
क्रमात्पूर्वोत्तरेकोणे न्यसेद्दक्षिणपश्चिमे ।
विद्या ऽविद्या द्वयं यद्वै स्वपदस्थे ग्निमारुते ॥ २१ ॥
चन्द्रादित्या वुदग्याम्ये द्वारयो र्विनिवेश्यच ।
प्रत्यग्द्वार गत न्तोयं प्राग्द्वारे विन्यसेद्दराम् ॥ २२ ॥
चतुर्णामथकोणाना मव्यक्त म्मण्डला द्बहिः ।
सम्यजे द्भवनाम्नावै यस्मा न्नान्यो भवःस्मृतः ॥२३ ॥
ततःकामात्मतत्वानां दशकं सिद्धतांगतं ।
भगवत्तुल्यसामर्थ्यं सार्वज्ञ्याद्दि गुणैर्युतम् ॥ २४ ॥
वियुक्तं प्राकृताद्दुःखा न्नियुक्त श्चेश्वरेणतु ।
भवसन्तारकत्वेन मण्डलस्य बहिर्न्यसेत् ॥ २५ ॥

उपेन्द्रः पूर्वदिग्भागे दक्षिणेदुरतिक्रमः ।
महाहृदः पश्चिमेतु वसुरेता स्तथोत्तरे ॥ २६ ॥
न्यस्यस्तेजो धराख्यस्तु पूर्वदक्षिणमध्यगः ।
नैऋतेतु महाकर्मा त्वग्राह्यः पश्चिमोत्तरे ॥ २७ ॥
पूर्वोत्तरे वर्धमान स्साक्षी गगनगोचरे ।
आधारानिलयं नाम्ना सर्वस्याधोगतं स्मरेत् ॥ २८॥
तेषां वहि स्स्वमन्त्रेण दिक्क्रमेणतु हेतिराट् ।
स्वमरीचिगणेनैव भासयन्तं निवेश्यच ॥ २९ ॥
न्यस्यैव मर्चनं कुर्या न्मन्त्रमुद्रान्वितेन च ।
निरीक्षणादिशुद्धेन अर्घ्यस्रक्चन्दनादिना ॥ ३० ॥
यथाक्रमेणोदिताना मादिदेवं यजे त्ततः ।
उपरिष्टात्तु सर्वेषां स्वपदस्थन्तु पूर्ववत् ॥ ३१ ॥
प्रागवत्सुसंस्कृते कुण्डे तत स्संस्कृत्य पावकम् ।
तन्मध्ये सर्वमन्त्राणां न्यासं कुर्याच्च यागवत् ॥ ३२ ॥
प्राक्समित्सप्तकेनैवं तर्पये द्वै यथाक्रमम् ।
मन्त्रपूतं हि निश्शेषं हवनान्तं सकृ त्सकृत् ॥ ३३ ॥
भवन्ति सम्मुखा मन्त्रा स्साधकस्याग्निमध्यगाः ।
सन्तर्प्याथ तथा कुर्या त्सहस्रशतसंख्यया ॥ ३४ ॥
एकैकस्य तु वै होमं तिलै राज्यसमन्वितैः ।
दद्या त्पूर्णाहुतिं पश्चा त्सर्वेषां तर्पणे कृते ॥ ३५ ॥
पुन रप्यर्चनं कुर्या देत्य वै मण्डलान्तरे ।
यथाक्रमेण सर्वेषां पुष्पधूपै स्तु केवलैः ॥ ३६ ॥
सकृ द्ध्यानसमेतन्तु चतुर्थाप्यथवाष्टथा ।
क्रमा त्समस्तमन्त्राणां प [ पु ] रावर्तन माचरेत् ॥ ३७ ॥

कुसुमेनाक्षसूत्रेण स्वकै र्वा करपर्वभिः ।
ततोऽर्घकुसुमै र्गन्धैः पूरयित्वा करांजलिम् ॥ ३८ ॥

सर्वदेवमयं मन्त्रं स्मृत्वोच्चार्य च तं क्षिपेत् ।
सर्वत्र सर्वदानेन क्रमेणेष्ट्वाच भक्तितः ॥ ३९ ॥

प्रदर्श्य सर्वमन्त्राणा मेकां मुद्रां च वैभवीम् ।
प्रणवेन सहस्रांशुसन्निभां सर्वसिद्धिदाम् ॥ ४० ॥

श्लेष्वपाणितले द्वे प्राङ्नम्रं कुर्या त्कृतागणम् ।
विविश्य मन्तरीकृत्य सहांगुष्ठद्वयेन तु ॥ ४१ ॥

मणिबन्धद्वयं कुर्या त्सुलग्न मतिनिश्चलम् ।
करयुग्मं सगर्भन्तु सन्धार्य स्वधियाचलम् ॥ ४२ ॥

ऊरुमध्ये निषण्णेतु कुर्याद्वै बाहुकूर्परे ।
शुभं कृत्वा प्रयत्नेन बन्ध मस्या स्समाचरेत् ॥ ४३ ॥

सर्वथा सर्वसिद्धीना मालये स्वमलेक्षण ।
तीर्थमध्ये स्वहृत्पद्मे लिङ्गे वेद्यां स्थलेतु वा ॥ ४४ ॥

वह्निगर्भेतु निर्धूमे नित्य मर्हिम श्चतुष्टये ।
मन्त्राणा मर्चनं कुर्या त्सिद्ध्यर्थमपि मुक्तये ॥ ४५ ॥

सजलाञ्जलिपूरै स्तु तीर्थेष हृदयाम्बुजे ।
भावनामृतजै र्भोगै र्मूर्तौ रव्यादिकै र्बहिः ॥ ४६ ॥

समित्सप्तकपूर्वै स्तु द्रव्यै र्वह्निगतं तिलैः ।
पूजयित्वा यथान्यायं प्रत्येकस्मि न्पदे क्रमात् ॥ ४७ ॥

संन्यासं संचयं वापि कृत्वा सम्य क्कृतस्य वै ।
मन्त्ररूपानुकारिण्या मुद्रणीयंच मुद्रया ॥ ४८ ॥

फलार्थ मखवं येन नेति संन्यासकारिणाम् ।
फलपर्यवसानं च काल मागमचोदितम् ॥ ४९ ॥

भर्तु र्नो युज्यते येन सिद्धा द्यै[र्थै] स्तु फलार्थिनाम् ।
कालानुकालमुद्राणां यो बन्धः परिचोदितः ॥ ५० ॥
उक्तप्रयोजना दन्य स्सविघ्नविनिवृत्तये ।
मुदं कर्मात्मतत्वानां ददत्यमलयाजिनाम् ॥ ५१ ॥
द्रावयित्री च दोषाणां बाह्याभ्यन्तरचारिणाम् ।
तेन मुद्रा स्समाख्याताः कृतस्यापि च मुद्रणात् ॥ ५२ ॥
तस्मा त्स्वाभाविकं कृत्वा बद्धं वा मानसं पुरा ।
स्वेन स्वेन तु मन्त्रेण स्मरे त्प्राप्तं[द्व्याप्यं] सदैवहि ॥ ५३ ॥
चैतन्येनानुविद्धो य श्शाखासंघश्च यद्यपि ।
तत्रापि मन्त्रो ऽत्राध्यक्ष स्तत्कार्यं सम्प्रयच्छति ॥ ५४ ॥
एवं कृते ततः कुर्या न्मन्त्राणा म्मण्डलान्तरात् ।
पूर्ववच्चोपसंहार मेकस्मिन् गगनास्थिते ॥ ५५ ॥
स्मृत्वा परात्मना तंच स्वसंविद्गगने हृदि ।
विश्रान्तं भावये द्देवं स्वभावेन समन्वितम् ॥ ५६ ॥
द्विजातेर्दत्तशिष्टस्य पुष्पपत्रादिकस्य च ।
विहित श्चाम्भसि त्यागो विष्वक्सेनार्च ने कृ [नाद्द] ते ॥ ५७ ॥
धर्तव्यं न चिरं चाग्रे यत्पुरा विनिवेदितम् ।
नैवेद्यं मन्त्रमूर्तीनां किंचित्पुष्पफलादृते ॥ ५८ ॥

इति श्रीपांचरात्रे श्रीसात्वतसंहितायाम्

विभवदेवतार्चनं नाम

## दशमः परिच्छेदः ॥ १० ॥



# अथ एकादशः परिच्छेदः ।

नारदः ।

श्रुत्वैव मच्युतमुखा द्धनमाली मुनीश्वराः ।
पुन स्तञ्चोदयामास यदाकर्णयता च तत् ॥ १ ॥

संकर्षणः ।

यथावत् ज्ञातु मिच्छामि मण्डलध्यानलक्षणम् ।
भगवन् भवभीताना मुपकाराय तद्वद ॥ २ ॥

श्रीभगवान् ।

संसाध्य यष्टियोगेन सूत्रा [ यां ] त्पूर्वापरे पुरा ।
तद्दिग्द्वयान्तरे दद्या त्प्राग्वै सूत्रचतुष्टयम् ॥ ३ ॥
समांशेन द्विधा कृत्वा स्फुटं [ ट ] मध्या त्तदं [ ततः । ] त्यच? ।
साधितेना र्धमानेन प्रा क्प्रत्यक्स्थेन तन्तुना ॥ ४ ॥
दक्षिणोत्तरभागाभ्यां समुत्पाद्य चतुष्पथौ ।
सूत्रं पूर्वापरसमं कृत्वा तदुपरि क्षिपेत् ॥ ५ ॥
पुन रर्धसमं दिक्षु दत्वा कोणचतुष्टयम् ।
चतुष्पथचतुष्केण नयेद्वय [ द्व ] क्कि प्रसार्य [ ध्य ] वै ॥ ६ ॥
समसूत्रचतुष्कञ्च चतुरश्राश्रसिद्धये ।
तद्विभज्या ष्टदशभि श्चतुर्दिक्षु पदै स्समैः ॥ ७ ॥
क्षिपे त्सूत्रगणं तत्र घटिका रेणु [ कण ] रञ्जितम् ।
मध्ये पद्मावनिं कुर्या द्भागपङ्क्तित्रये क्रमात् ॥ ८ ॥
तद्बाहिः पदपङ्क्त्या तु पीठ मष्टदिगन्वितम् ।
तस्य भागचतुष्कोत्थ दिक्चतुष्कं प्रकल्प्य च ॥ ९ ॥

विदिक्चतुष्कं त्रिपदं दद्यात्तया पीठप्रदक्षिणम् ।
प्रदक्षिणंक्षिते बाह्या चतुष्कं दिक्चतुष्टयात् ॥ १० ॥

चतुर्णान्तु चतुर्णान्तु बाह्या द्वाह्यं द्वयं द्वयम् ।
शोधयित्वा तु तद्बाह्या चतुष्कं द्वारसिद्धये ॥ ११ ॥

चतुष्टयं क्रमेणैव भूयो दिक्षु पदं पदम् ।
सबाह्याभ्यन्तरगतं शोधनीयं प्रयत्नतः ॥ १२ ॥

पुन स्सर्वपदाभ्यां तु षट्कं षट्कं तु चान्तरात् ।
सम्मार्ज्य पूर्णशोभार्थं तत्र रक्तोत्पलाष्टकम् ॥ १३ ॥

यथा दिक्षु स्थितं कुर्या त्पूजनाय दिवौकसाम् ।
बाह्यस्थपद पार्श्वा [ पीठा ] स्तु त्रीणि त्रीणि च लोपयेत् ॥ १४ ॥

त्रयाणा मन्तरस्थं य त्पद मेकात्मतां नयेत ।

उपशोभं तु तं विद्धि कुर्या श्रीलाब्जभूषितम् ॥ १५ ॥

पंचकं पंचकं कोणा द्वीथौ नीत्वा लयं पुरा ।
शेषैः कोणन्तु निर्धार्य सान्तरं च ततो बहिः ॥ १६ ॥

दद्या त्सूत्रत्रयंचैव मध्येष कमलं लिखेत् ।
षट्त्रिंश दळसंयुक्तं तस्य लक्षण मुच्यते ॥ १७ ॥

पीठावनि समीपेतु चतुर्थांश पदात्पुरा ।
समुद्धृत्य भ्रमं कुर्या द्ब्रह्मस्थानाच्चतन्तुना ॥ १८ ॥

दिक्सूत्राणां चतुर्णांतु एकैकं हि यदन्तरम् ।
वृत्तावधे स्समैर्भागैः पत्रसंधै र्विभज्यच ॥ १९ ॥

षड्भिर्हीनं शतं सार्धं सूत्राणां तत्र निक्षिपेत् ।
सूत्रंप्राक्पदसंस्थं य त्तदाश्रित्याब्जपल्लवं ॥ २० ॥

कुर्या द्द्वाग चतुष्केण यथा तदवधारय ।
सव्यापसव्येयेसूत्रे अन्तरस्य निरन्तरे ॥ २१ ॥

तयोरंश समं कुर्या द्दळाग्रादंकमन्तरे ।
तदुद्देशात्तु सूत्रेण तदंकान्तर्गतेनच ॥ २२ ॥
अर्धचन्द्र द्वयंकुर्या त्तेन सूत्रेणवैसमं ।
पुनरभ्यन्तरे सूत्रं तत्सूत्राभ्यां निरोध्यच ॥ २३ ॥
पत्राग्र मानयेत्तस्मा द्वहि स्तं भ्रंगसन्निधेः ।
श्लांछ्यमानं दळाग्रन्तु विधिना नेन सिध्यति ॥ २४ ॥
दळाग्र ब्रह्मदेशाभ्यां तुरीयांशेनचान्तरात् ।
भ्राम्यवैकर्णिकावृत्तं द्वयंशमानेन केसरं ॥ २५ ॥
दळाग्रगांशंवै मध्या द्वयोमार्थं भ्रामयेत्ततः ।
कृत्वैवं वर्णकैःपूतैः पूरणीय म्महोज्ज्वलैः ॥ २६ ॥
वज्राद्यवितता पीतां सबीजां विद्धिकर्णिकां ।
रेखान्वितानि पत्राणि सर्वाणि सुसितानिच ॥ २७ ॥
केसर त्रितयं कुर्या त्पत्रेपत्रे रुणप्रभम् ।
दळान्तराळसमितं वृत्तबाह्यं ज्वलत्प्रभं ॥ २८ ॥
सितानि पीठकोणानि रक्तं तद्दिक्चतुष्टयम् ।
राजोपलप्रभांवीर्थीं पत्रमाला घलंकृतां ॥ २९ ॥
पश्चिमांशा द्विनासर्व द्वाराण्यम्बुजपत्रवत् ।
कृष्णानि सर्वशोभानि द्वारोद्देश स्थितानिच ॥ ३० ॥
तदर्धा कृतितुल्यानि तूपशोभानि गर्भवत ।
कोणानि केसराभानि सितशंखा न्वितानिच ॥ ३१ ॥
शोण हेमादिवर्णंच क्रमाद्रेखागणंबहिः ।
कृत्वैवमनुसन्धाय सर्वात्मत्वेन देहवत् ॥ ३२ ॥
रजांसिविद्धिभूतानि सितपीतादिकानिच ।
तन्मात्रा ण्युपशोभानि शोभानिकरणानितु ॥ ३३ ॥

एवं सर्वाणि कोणानि स द्वाराणीन्द्रियाणिच ।
बहिरावरणं यद्वै सत्वाद्य वितयं हि यत् ॥ ३४ ॥
मन स्सुवितताबीथी गर्भपीठ मुदाहृदं ।
धीःपद्मं तदधिष्ठाता बीजात्मा चिन्मयःपुमान् ॥ ३५ ॥
अमूर्त ईश्वर श्चात्र तिष्ठ त्यानन्दलक्षणः ।
यस्य सन्दर्शनादेव शश्वद्भावः प्रसीदति ॥ ३६ ॥
ससंगाना मसंगानां वपुष्पाते कृते सति ।
प्रायशो मुक्तिभाजां च त्विह जन्मैकशेषिणाम् ॥ ३७ ॥
देव आस्ते ज्ञतां हित्वा बहि रन्तश्च कर्मिणाम् ।
अन्यथा दृष्टमात्रा द्वै कथ माह्लाद मेति वै ॥ ३८ ॥
अत स्संवेदनसम मस्तित्व [ त्वं ] प्रतिपादकम् ।
यद्यत्स्वलक्षणं तत्वं तत्त त्सर्वत्र सिद्धिगम् [ सन्धिगं ] ॥ ३९ ॥
वस्तुत्वेन गृहीत्वैवं मण्डलं पूर्वनिर्मितम् ।
नाम्नाब्जनाभभुवनं सर्वदुःखक्षयंकरम् ॥ ४० ॥
तत स्तस्मिन् क्रमेणैवं ध्यात्वैकैकं निवेशयेत् ।
पूर्वोद्दिष्टेन बीजेन त्वाकारं परमेश्वरम् ॥ ४१ ॥
अथैवं भाजिता त्क्षेत्रा च्चतुरश्रा न्महामते ।
पूर्वोद्दिष्टानि धिष्ण्यानि यथा कार्याणि तच्छृणु ॥ ४२ ॥
पंचमं ब्रह्मकर्माद्या न्मम प्राग्दिश्यवस्थितम् ।
अंशं दीर्घेन तत्स्थेन कुर्या त्सूत्रेण लांछनम् ॥ ४३ ॥
अर्धचन्द्रसमाकारं भागयुग्मस्य चान्तरे ।
दक्षिणोत्तरभागाभ्यां तदध स्तत्समं तथा ॥ ४४ ॥
लांछनद्वितयं कुर्या त्तिर्यक्संस्थानसंस्थितम् ।
भागद्वादशकस्यैक्यं स्या त्पङ्क्तिद्वितया त्तथा ॥ ४५ ॥
ब्रह्मकर्म चतुर्थं य त्संख्यामानं च पूर्ववत् ।
मर्मतस्य च पक्षस्था वेककर्मान्तरीकृतौ ॥ ४६ ॥

ताभ्या मवस्थितेनैव सूत्रेणैतत्प्रजायते ।
पुन र्भध्या द्वितीयं यत मर्म चोर्ध्वं प्रवर्तते ॥ ४७ ॥
तस्माद्वैऽथन्तरीभूतं चतुर्थं पक्षयो र्द्वयोः ।
मर्म तत्स्थेन सूत्रेण वृत्तार्थं पूर्ववल्लिखेत् ॥ ४८ ॥
ब्रह्मकर्मणि षष्ठस्य प्रत्यग्दिक्संस्थितस्य च ।
मर्मणो प्यथ वै सुत्रं कृत्वा तत्सम्प्रसार्यच ॥ ४९ ॥
यावद्वृत्तार्थबुध्नस्थ शृंगकोटि स्तु सन्निधिः ।
एवं सूत्रद्वये दत्ते धिष्ण्य श्शंखाकृति र्भवेत् ॥ ५० ॥
तस्य भागसमा कार्या लांछनै र्मेखला बहिः ।
पूर्वोक्तमर्मगै स्सूत्रै र्यथा तदवधारय ॥ ५० ॥
द्व्यंशर्द्घैण सूत्रेण नवचन्द्र कलासमम् ।
चतुर्णा मन्तरेशानां प्राग्दिक्कुर्याच्चलांछनं ॥ ५२ ॥
इशवह्नि पदाभ्यान्तु वृत्ततुर्यांश सम्मिते ।
द्वेलांछने समेकुर्या देकभागादिके ततम् ॥ ५३ ॥
तत्समे ह्यपरे द्वेवै यदालांछयंचलांछनैः ।
दक्षिणोत्तरभागाभ्यां पक्षात्सूत्रद्वयंक्षिपेत ॥ ५४ ॥
कृत्वाष्टम मर्मस्थं पूर्वोद्दिष्ट क्रमेणतु ।
जीवसूत्रस्य पाश्चात्ये भागे पार्श्वद्वयेस्थितम् ॥ ५५ ॥
भागद्वयं द्वयं लांछयं योन्यर्थचार्धवृत्तवत् ।
तच्छृङ्ग कोटिगेसूत्रे कृत्वा ते सम्प्रसार्यच ॥ ५६ ॥
खातभूभागपर्यन्तं तत्पदा द्वटपत्रवत् ।
जायते सर्वकुण्डानां योनिरेवंविधाशुभा ॥ ५७ ॥
भागार्धमान सूत्रेण योनेराभ्यन्तरेपुनः ।
अर्धवृत्त द्वयं दद्या त्तद्व त्सूत्रद्वयान्वितम् ॥ ५८ ॥
खातस्यान्तर्गतोवर्ज्य श्चतुर्थांशस्तु कोष्ठकात ।
कोष्ठार्ध निखनेच्छेषं तत्समंवापुरोदितं ॥ ५९ ॥

दैर्घ्यात्पादाधिकाकार्या योनिर्वै पृष्ठ उन्नता ।
गजोष्ठ सदृशी चाग्रा त्स्पृशन्ती दशनच्छदम् ॥ ६० ॥
पुरोभाग चतुर्थांशं योने रग्रा द्विसृज्यत ।
दद्यात्भाक्सूत्र सम्बन्धं सूत्राणां द्वितयम्परं ॥ ६१ ॥
अनुपातेनवै ताभ्या मग्रात्संकोचमाचरेत ।
भागपङ्क्ति त्रयेणैव मेखलात्रितयम्बहिः ॥ ६२ ॥
सम्पाद्य चतुरश्रन्तु शंखं तन्नतयो[ तुन्नितयो ] परि ।
आशंखंमेखलानान्तु प्रोन्नतत्वं स्वविस्तृतेः ॥ ६३ ॥
मेखलानान्तु शंखस्य यन्मध्येश्रिचतुष्टयं ।
तच्चक्रचिह्नितंकुर्या त्तल्लक्षण मथोच्यते ॥ ६४ ॥
ब्रह्म मर्म निरुद्धेन चतुर्भाग समेनतु ।
खातार्थं प्राग्भ्रमं दद्या त्क्षेत्रमध्ये महामते ॥ ६५ ॥
बहिर्भाग समानाभि स्तद्बहि द्व्यंशविस्तृतं ।
अरक्षत्रञ्च तस्यापि नेमिभाग समा बहिः ॥ ६६ ॥
भागेनतद्बहिस्त्वेका चतुरश्राच मेखला ।
भ्राममध्यावरक्षेत्रं वृत्तनैकेन वैपुनः ॥ ६७ ॥
ततस्सूत्राष्टकंदद्या द्दिग्विदिक्संस्थितम्पुरा ।
तस्यचान्तर्गतंपश्चा दष्टकं पातयेत्परं ॥ ६८ ॥
ततस्तेषां समापाद्य मरत्व ममलेक्षण ।
अन्तर्वृत्त निरोधेन प्रतिसूत्रस्य पक्षयोः ॥ ६९ ॥
सूत्रेण लांछने कुर्या न्नाभिनेमिभ्रमावधेः ।
एकांशा दर्धमानं च नेमिवृत्तस्य चान्तरे ॥ ७० ॥
द्वाभ्यां द्वाभ्या मराभ्यां तु मध्ये कुर्या त्प्रधि प्रधिम् ।
विस्तारप्रोन्नता नाभिः कूर्मपृष्ठोपमाऽरकः ॥ ७१ ॥
नेमिं दर्पणवत्कुर्या त्त्वीष न्निम्नावसानतः ।
शिष्टं पुरोदितं सर्व मथ पद्माकृतिं शृणु ॥ ७२ ॥

भागार्धं भ्रामये द्भागे बहिः केसरसिद्धये ।
भ्रामये दपरं चार्धं मरक्षेत्रस्य बाह्यगम् ॥ ७३ ॥
नीत्वा लोप मनेनैव विधिना नेमिमण्डलम् ।
अरसूत्राश्रितं कुर्या त्ततः पद्मदळाष्टकम् ॥ ७४ ॥
केसरभ्रमरुद्धेन सूत्रेणार्धेन्दुलक्षणम् ।
तच्छृंगकोटिसंस्थेन परिधे र्बाह्यकेन तु ॥ ७५ ॥
सूत्रद्वयेन पत्राग्रं कुर्या द्बाह्यभ्रमावनेः ।
निरन्तराणा मामूला त्केसराणा न्महामते ॥ ७६ ॥
कर्णिकोच्छ्रयतुल्यानां विभागं जनये त्स्फुटम् ।
शंखं कोणचतुष्केतु शेषं पूर्ववदाचरेत् ॥ ७७ ॥
योनि मेकेन भागेन चतुर्भि र्मेखलागणम् ।
खातं पूर्वसमं किन्तु वृत्ते वृत्तास्तु मेखलाः ॥ ७८ ॥
चतुरश्रे तदाकारा इत्युक्तं कुण्डपंचकम् ।
काल माहुतिसंख्यां च होमद्रव्यप्रभूतताम् ॥ ७९ ॥
ज्ञात्वैव मेकहस्तात्तु कुर्या दष्टकरावधि ॥ ७९॥ ॥

इति श्रीपाञ्चरात्रे श्रीसात्वतसंहितायाम्
यागकुण्डविधि र्नाम

## एकादशः परिच्छेदः ॥ ११ ॥

## अथ द्वादशःपरिच्छेदः ।

नारदः ।

एवमाकर्ण्यसत्वेव मुसली मुनिनायकाः ।
कृताञ्जलिपुटोभूत्वा पप्रच्छ जगताम्पतिं ॥ १ ॥

सङ्कर्षणः ।

यथाक्रम स्थितानाञ्च सर्वेषां [ मन्त्राणां ] लक्ष्मिनन्दन ।
त्वत्तोहं श्रोतुमिच्छामि मन्त्राणां [ सर्वेषां ] ध्यानलक्षणम् ॥२॥

भगवान् ।

त्रयाणां सुख्यपूर्वाणां ध्रुवान्तानां पुरोदितं ।
क्षोषादीनामशेषाणा मिदानी मवधारय ॥ ३ ॥
ध्यानं पाताळ निलय पर्यन्तानां यथास्थितम् ।
एक एव जगन्नाथ स्स्वरूपाद्यैस्तु शक्तिभिः ॥ ४ ॥
नानात्वेना प्यनन्तोयो भक्तानुग्रह काम्यया ।
तस्याभिमानिकं रूपं शृणुसर्वेश्वरस्यतु ॥ ५ ॥
तुहिनाचलसंकाशं पूर्णचन्द्र समाननं ।
स्व [सु] मणि व्यंजितेनैव युक्तं फणगणेनतु ॥ ६ ॥
श्रोद्वहन्तं हलंचक्र मभयाक्य द्वयेनतु ।
वामहस्त द्वयेनैव शंखं मुसलमेवच ॥ ७ ॥
नित्यसन्निहिताशेष शक्तिं सर्वज्ञमच्युतम् ।
मनस्यन्त सुखानांथ त्कर्मणां पूरयेच्छतत ॥ ८ ॥
शक्तीशोप्यथसंचिन्त्यः पुण्डरीकनिभेक्षणः ।
इच्छारूप धरश्चैव सौम्यः प्रहसिताननः ॥ ९ ॥
व्यक्तयेच फलादीनां भक्ताना मनुकम्पया ।
पीडयन् स्वांघ्रियुग्मेन वसुधांच करद्वयं ॥ १० ॥
युगानुसारिकांतिश्च चतुर्वक्त्र श्चतुर्भुजः ।
मूर्तचक्र गदाहस्तः स्वमूर्ता च्छाम्बुजांकितः ॥ ११ ॥
शमं नयतिसन्तापं कमले नेन्दुकान्तिना ।
नानामन्त्र मयींविद्यां भाव [ व्यंज ] यत्यमलात्मनां ॥ १२ ॥
सम्यग्वाक्पतिनाचैव कम्बुनाशब्दमूर्तिना ।
आज्ञा प्रतीक्षकेणैव गदाचक्र द्वयेनतु ॥ १३ ॥

भरितेन हिनस्त्याशु साधुसन्तापकारिणम् ।
नारसिंहेन वक्त्रेण भवभीति विघातकृत् ॥ १४ ॥
पुष्णाति सर्वभूतानि वाराहेणा मृतात्मना ।
कुरुते पश्चिमस्थेन कापिले नोपसंहृतिम् ॥ १५ ॥
भक्तिश्रद्धापराणांच स्मृतमात्रः सनेत्यवै [ दैवहि ] ।
हृन्मध्ये गगनेभूमौ वह्निमध्ये जलान्तरे ॥ १६ ॥
चतुर्णां ब्राह्मणादीनां स्वयमेवानुकम्पया ।
चातुरात्म्येन रूपेण चतुर्धाव्यक्तिमेतिच ॥ १७ ॥
आत्मतुल्येनदेहेन शंखपद्मांकितेनतु ।
मूर्तिमद्भिर्हलाद्यैस्तु युक्तेनवदनैर्विना ॥ १८ ॥
वर्णानुरूपवर्णेन सभेनाप्यसमेनतु ।
अन्योन्यानुगतेनैव पूर्वोद्दिष्टेननान्यथा ॥ १९ ॥
मलयानलसूर्याभः स्मर्तव्योमधुसूदनः ।
अष्टबाहुर्विशालांसो पद्मपीठो मकरांकितः ॥ २० ॥
शंखचक्रधरश्चैव बाणकार्मुक धृक्तथा ।
रजस्तमोभ्या म्मूर्ताभ्यां सम्प्रवृत्ति निवृत्तये ॥ २१ ॥
कर्णपीठ निविष्टंच ध्येयं पाणि युगं विभोः ।
पिद्याधिदेवं भगव च्चतुर्वक्त्रं चतुर्भुजम् ॥ २२ ॥
लम्बकूर्च [ कर्ण ] जटा दण्ड कमण्डलक्ष सूत्रिणम् [त्रकं] ।
फुल्लरक्ताम्बुजाभासं श्वेतपद्म करांकितम् ॥ २३ ॥
श्रुतीर्ऋग्गाद्या वक्त्रेभ्यः प्रोद्गिरंतमनुस्मरेत ।
निर्धूमांगारवर्णाभं शंखपद्माक्षसूत्रिणम् ॥ २४ ॥
फुल्लरक्ताब्जविभवं देवताद्यात्मसूत्रकम् । ]
ध्याये दभयदपाणिं तं कापिलं तेजसां निधिम् ॥ २५ ॥
येनत स्सर्वेश्वरो देव स्साक्षिभूतो व्यवस्थितः ।
स्फटिकोपलसच्छायान् स्वशक्त्युत्था न्बिभर्ति च ॥ २६ ॥

अविद्याविष्कृतानां तु भक्तानां सरूप [म्प] दायिने ।
तमनादिं जगन्नाथं बहिस्स्थूलतरात्मनाम् ॥ २७ ॥
द्यावापृथिव्यो रन्तरस्थं विश्वरूप मनुस्मरेत् ।
अनेकवक्त्रांघ्रिकर मनेकमकरांकितम् ॥ २८ ॥
यद्यप्यनेकवदन मनेकभुजभूषितम् ।
तथापि वै त्रयंस्त्रिंशं द्वदनै र्विविधै र्युतम् ॥ २९ ॥
चतुरभ्यधिकै र्दिव्यै श्चत्वारिंश न्महाभुजैः ।
ब्रह्मरुद्रेन्द्रदक्षार्क चन्द्रसिद्धा स्तथा श्रुतिः ॥ ३० ॥
पौरुषस्य तु वक्त्रस्य चोर्ध्ववक्त्रस्थिता स्त्वमी ।
पिशाचाग्निमरुच्छैल द्विपगन्धर्ववारिभिः ॥ ३१ ॥
वक्त्रैरूर्ध्वं स्थितै र्ध्याये दक्षिणं वदनं विभोः ।
पाताळादि द्रुमहामेघ लोकराशिग्रहास्थितैः ॥ ३२ ॥
वर्णे स्तार [ रास्त ] समेतै स्तु ध्याये द्वक्त्रं तु पश्चिमम् ।
यक्षान्तकाळजनाभावै र्वसुनक्षत्रगोगणैः ॥ ३३ ॥
वक्त्रै र्वराहवक्त्रोर्ध्वं स्थितै र्ध्यायेच्च दक्षिणम् ।
पश्चाद्यं चातुरात्मीयं मन्त्राणां दशकं महत् ॥ ३४ ॥
प्रोच्छ्रितं हि सुवर्णाभं तल्लांछनचतुष्टयम् ।
लोकेशास्त्राष्टकं चैव पुस्तकं चाक्षसूत्रकम् ॥ ३५ ॥
दर्वी कमण्डलु हैम श्चाभयं हि वरान्वितम् ।
दर्भाजिनं दत श्छत्रं सुशुभं चामरं स्थितम् ॥ ३६ ॥
स्रुक्स्रुवौ चापि कलशौ वेदिर्वह्निसमन्विता ।
चन्द्रार्कमण्डले पूर्णे नागेन्द्रो मणिदर्पणम् ॥ ३७ ॥
पुष्पकल्पध्वजं दिव्यं विश्वपत्त्रलतासथा [ पात्रं तथा तथा ] ।
स्मर्तव्यास्तु भुजेष्वस्य विभोस्संस्थानकैस्समैः ॥ ३८ ॥
यथोदितक्रमेणैव व्यत्ययो नभवेद्यथा ।
आभिर्नानाप्रकाराभि र्देहास्थाभि रिदंजगत् ॥ ३९ ॥

भाद्यवन्तं जगन्नाथं स्मरेद्भूवकमलादिषु ।
हंसमूर्ति मथात्मानं ज्ञानयज्ञभुजंस्मरेत् ॥ ४० ॥
कुन्देन्दु स्निग्धकान्तिंच होमकुण्ड महालसुम् ।
रजस्तमोक्षुद्रिं सत्वरत्व विग्रहं परमेश्वरं ॥ ४१ ॥
धर्माधर्मेक्षणंध्याये दर्शीषोमात्मकेनतु ।
दक्षिणोत्तरसंस्थेन पक्षयुग्मेनराजितम् ॥ ४२ ॥
बहिस्तमेवोदकस्थ न्तुहिनाचलसन्निभम् ।
ध्यात्वार्चयेत्तुविधिव हंसविग्रह मच्युतम् ॥ ४३ ॥
बहिर्द्रव्यमयस्त्वेक स्सामान्येनैकलक्षणः ।
सम्यङ्क्रियेतितस्स्वर्गं पूर्वमृच्छति चार्थिनाम् ॥ ४४ ॥
अन्तर्वेद्यां चतुर्धाय सवेकएव महामखः ।
तपोयागजपध्यान स्वरूपश्शश्वदेवहि ॥ ४५ ॥
याजिनामपवर्गन्तु विदधाति समापनात् ।
तंयज्ञ पुरुषं [ वपुषं ] ब्रह्म वासुदेव मजंहरिं ॥ ४६ ॥
ध्याये द्वै सूकरात्मान मञ्जनाद्रि समप्रभं ।
यज्ञाङ्गचिह्निताङ्गिंच महाश्वाहासिदंष्ट्रिणम् ॥ ४७ ॥
भूर्भुवस्स्वश्शरीरंच शब्दब्रह्मैकमानसम् ।
निर्बुदन्तं प्रपन्नाना मविद्यापंकमंजसा ॥४८॥
वैद्येनपोत्र मान्तेन त्वक्षयेनामलेनच ।
वासनावासितानांच जीवानां भवशान्तये ॥४९॥
महाविभूति र्भगवान् पूर्णषाड्गुण्य विग्रहः ।
स्वकराब्जान्तराद्बह्म तस्मादादाय चांजलिं ॥५०॥
करोतिसेचनंदोषं दधानांवस्वतेजसा ।
स्थूलरूपेणतमजं बहिराराधनाविधौ ॥५१॥
आध्मातंवायुनायद्ब निर्धूमांगारपर्वतम् ।
ध्यायेत्तद्वन्महादीप्तं वाजिवक्त्रमलांछनं ॥ ५२ ॥

बद्धब्रह्मांजलिकस्थं द्रवत्कनकलोचनम् ।
घोणाग्रेणाहरन्तंच त्रैलोक्योत्थमलेन्धनम् ॥५३॥
कृत्वातद्भस्मसात्सम्य क्फूत्कुर्वन्त म्मुखेनतु ।
धर्मसामान्य ममल मनादिनिधनंविभुं ॥५४॥
दुर्लभं यत्प्रबुद्धानां यत्प्रसादधियाविना ।
तस्यथूलवरंरूपं शृणुतत्प्रामयेपरं ॥५५॥
तुहिनाचलसंकाशं सौम्यवक्त्रं चतुर्भुजं ।
कामार्थौ वुद्वहन्तंच शंखपद्मच्छलेनतु ॥५६॥
साधुमार्गे स्थितानान्तु प्रयच्छन्तं धिया वतौ ।
सिताक्षमालं धर्मन्तु वरपाणि मतस्मरेत् ॥५७॥
वाङ्मयन्निखिलंयस्य वस्तुजात मनश्वरम् ।
शक्तित्वेन स्वभावस्थं चिद्रूपस्यामलद्युतेः ॥५८॥
वरवाजिमुखंध्याये दथवागीश्वरंविभुम् ।
सूर्यकान्ताग्नि संकाश मनेकभुजभूषितम् ॥५९॥
कमलंचाक्षसूत्रंच वेदिन्त्रेताग्निभूषितौ ।
साज्यधारौ स्रुक्स्रुवौतु विष्टरंसोमसंयुतम् ॥६०॥
दर्भाजिनं मेखलांत्रा प्यपसव्येतु षट्स्वधूः ।
स्मरेद्वामकरेष्वस्य पुस्तकं शंखमेवच ॥६१॥
दण्डंकमण्डलुंदर्वी मेकस्मि न्नितयंकरे ।
पूर्णग्राम्यै स्तथारण्यै श्चरुबीजैस्तु पंचमे ॥६२॥
सुङ्मूलफलपत्रैस्तु यज्ञद्रव्यै स्सदक्षिणैः ।
सर्वाश्रमोपकरणै र्युक्तं चमसभाजनं ॥६३॥
ध्येयमस्य भुजेषष्ठे व्रतमूर्तै र्मृगादिभिः ।
वेदांगैरुपवेदैस्तु संस्कार स्समखैस्तथा ॥६४॥
विकारवसुधाधारे ह्यभावेतु गुणोदधौ ।
स्वशक्ति भावितंकुन्दा मनःपूर्वं चतुष्टयम् ॥६५॥

प्रकुर्वन्तं समास्तेय स्सर्वज्ञैः पुरुषात्मना ।
निषण्णं भोगिशय्यायां तपनीयरुचिस्मरेत् ॥६६॥
देवमर्णवशाय्याख्यं मूर्तैश्चक्रादिकैर्वृतम् ।
लक्ष्म्याखंवाशमानंच समाक्रान्तंच निद्रया ॥६७॥
वीज्यमानंहिचैभीत्या गीयमानंहिविद्यया ।
कूर्मात्मा कूर्मवद्बुध्या ध्यातव्यस्तवथलांगलिन् ॥६८॥
द्रवत्कनकवर्णाभ स्स्वसामर्थ्या ज्जलाश्रयः ।
शक्त्यादिक कलाद्वंद्व द्वितीयांघ्रिस्सनातनः ॥६९॥
शक्त्यादिक कलाद्वयश्च प्रोद्धिरंस्तु श्रुतित्रयम् ।
अतसीपुष्पसंकाश शंखचक्र गदाधरः ॥७०॥
मखोरकरणांगश्च निमग्नोद्धरणक्षमः ।
स्वशक्तिविभवाधार मिच्छाज्ञानक्रियार्चिषम् ॥ ७१ ॥
नानाविशेषविज्ञान स्फुलिंगोर्मिसदोदितम् ।
धारयन्तं स्थितं हार्द मनूनं मोह मूलवणम् ॥ ७२ ॥
नदन्नाद मनाख्येयं त मजं परमेश्वरम् ।
निस्तप्तकनकाभं च ध्याये देवं नृकेसरिम् ॥ ७३ ॥
ज्वलदग्निस्फुलिंगाभि स्स्वदेहोत्थाभि रावृतम् ।
रथांगशंखधातारं बृह न्मूर्ति सुभीषणम् ॥ ७४ ॥
खरखरनकरजश्रेणि दीप्तेनोभयपाणिना ।
सम्यच्छन्तं धिया सम्यक् भविनां साभयं वरम् ॥ ७५ ॥
अमृताध्मातमेघाभ ममृताहरणं विभुम् ।
पीतांबरधरं ध्याये देकवक्त्रं चतुर्भुजम् ॥ ७६ ॥
श्रोणीतटार्पितकरं शंखचक्रविभूषितम् ।
मध्यतो दक्षिणेनैव वहन्तं गिरिरूपभृत् ॥ ७७ ॥
शुद्धज्ञानानुविद्धं च कर्मसम्भवभीतिहम् ।
दिशन्तं स्वधिया सम्यक् भक्तानां भक्तवत्सलम् ॥ ७८ ॥

मंथामथितदुग्धाब्धि क्षोभयित्वा प्रकाशितम् ।
अमृतं क्षुत्तृषादीनां प्रतिपक्ष मनामयम् ॥ ७९ ॥
शुद्धं चानश्वरं भाव्यं मायाख्यार्णवमध्यगम् ।
आत्मामृतमनौपम्य माहारव्धंसकर्मणा ॥ ८० ॥
ध्याये त्कमलगर्भाभं देवदेवं श्रियः पतिम् ।
कमलालयहेतोश्च विभूषितकरद्वयम् ॥ ८१ ॥
द्वयं देवीपरिणये लीलयैव समर्पयन् ।
प्रकाशय न्ननादित्व मात्मनः प्रकृते स्सह ॥ ८२ ॥
मत्करे स्तुविद्धेयं प्रकृतिः प्राकृतै स्हम् ।
यतोह माश्रय श्चास्या मूर्ते र्मद्येतदात्मिका ॥ ८३ ॥
या मालम्ब्य सुखेनेमं दुस्तरं हि गुणोदधिम् ।
निस्तरं त्यचिरेणैव व्यक्तध्यानपरायणाः ॥ ८४ ॥
मदविह्वलनेत्रं च देव मुद्भिन्नयौवनम् ।
फुल्लरक्तांबुजाभास मत्यजन्तं निजां स्मृतिम् ॥ ८५ ॥
त्रैलोक्यविस्मयकरं कान्ताकृतिधरं स्मरेत् ।
आनन्दामृतसंपूर्णवदने नेन्दुकान्तिना ॥ ८६ ॥
कलशाकृतिरूपेण करस्थेन विराजितम् ।
लीलाकटाक्षवाग्बाणै स्सूदयन्तं सुरद्विषः ॥ ८७ ॥
द्विरेफपटलाक्रान्त सहकारलताकरम् ।
कलामूर्त्यभिमानात्म राहुसंज्ञो विभीषणः ॥ ८८ ॥
मूर्तामूर्तेन रूपेण संग्रसत्यनिशंकिल ।
अग्निषोममयीं मूर्तिं कर्मिणा मुपकारिणाम् ॥ ८९ ॥
योन्तःप्राणादि रूपेण चन्द्रादित्यात्मनाबहिः ।
स्थितस्तद्विजयेध्यक्षः सत्यध्यानरतात्मनाम् ॥ ९० ॥
निष्पन्दं बोधभावेन तन्तुव्यक्तं स्मरेद्बहिः ।
नीलनीरदवर्णाभं पद्मपत्रनिभेक्षणम् ॥ ९१ ॥

मध्याह्न भास्कराकारं द्वादशारकरोद्यतम् ।
श्रोणीतटनिविष्टेन वामहस्तेन लीलया ॥ ९२ ॥

ध्रियमाणंगदांगुर्वीं निषण्णां धरणीतले ।
अविद्याख्याच्चयानेमिः कालचक्रस्य दुर्धरा ॥ ९३ ॥

समाधीयं समाश्रित्य विग्रहं विधुनोतिच ।
जयदन्न क्रिशादीनां तामसेन बलेनच ॥ ९४ ॥
ध्यायेत्तत्मसरघ्नंच देवराजोपलब्धुतिम् ।
विज्ञानरश्मिभिर्दीप्तं सत्सत्व गरुडासनम् ॥ ९५ ॥
नानास्त्ररूप भूतात्म सद्विद्याभुजभूषितम् ।
चक्रं पद्मं गदां बाण मंकुशं कुंत मेवच ॥ ९६ ॥
षट्तु दक्षिण हस्तेषु शक्ति पाशौ च कार्मुकम् ।
मुसलं मुद्गरं भीमं खेटकं वाम बाहुषु ॥ ९७ ॥
देवआभृदहाभश्च स्मर्तव्यः पारिजातजित् ।
अक्लिष्ट कर्मा देवेश स्वनेका द्भुतविक्रमः ॥ ९८ ॥
प्रबन्ध प्रतिपन्नानां भक्तानामपिदेहिनाम् ।
योबोध भूमौ संरूढो ह्यनित्यश्चानुरंजकः ॥ ९९ ॥
न्यग्रोधविटपाकारो प्यविद्या बन्धलक्षणः ।
कर्मवृक्षस्सुविततो मोहमाया फलावृतः ॥ १०० ॥
तदुत्पाटन सिध्यर्थं मन्त्रग्राह्यजनंसदा ।
आविश्यास्तेंशमात्रेण कृपयात्र जगत्प्रभुः ॥ १०१ ॥
सविवेकात्मनाभूत्वा ज्ञानबाहु वितानधृक् ।
ऐश्वर्य धर्म वैराग्य शमास्य क्षितिशक्तिभृत ॥ १०२ ॥
आदाय संयमास्त्रौघं नियमास्त्रगणं तथा ।
इन्द्रियादिगणं जित्वा कर्मिणां दोषहोहियः ॥ १०३ ॥
यदस्य सुराजिद्रूपं तद्द्वादशभुजं स्मरेत ।
दिव्यमाल्याम्बरधरं दिव्याभरणभूषितम् ॥ १०४ ॥

चतुर्वक्त्रं सुनयनं वामोत्संगार्पितप्रियम् ।
खड्गं चक्रं गदां बाणं मुसलं च तदुत्तमम् ॥ ५ ॥
षट्सु दक्षिणहस्तेषु शंख मंकुश कार्मुके ।
छत्रं च फणभृत्पाशं विभो वामभुजे ष्वमी ॥ ६ ॥
षष्ठेनालिंगिता देवी सारविन्देन बाहुना ।
तदंसलग्नकरया देव्या सञ्चिन्तया ऽनिशम् ॥ ७ ॥
संवीज्यमानं विनया चामरेण सितेन तम् ।
लोकनाथं विशालाक्षं सर्वदेवनमस्कृतम् ॥ ८ ॥
वरसिंहासनारूढं ध्याये न्मीलितलोचनम् ।
पद्मासने नोपविष्टं पद्मगर्भोपमद्युतिम् ॥ ९॥
करुणाविष्टबुद्धिं च शंखपद्मकरांकितम् ।
ज्ञानवैराग्य सद्धर्मं मार्गत्रयनिदर्शकम् ॥ ११० ॥
संस्मरे दथ दत्ताख्यं ज्ञानमूर्तिमकल्मषम् ।
मनुष्यमुनिदेवानां समाधिनिरतात्मनाम् ॥ ११॥
ईषल्लब्धरसानां च ब्रह्ममार्गानुसारिणाम् ।
स्वप्रभानिकरेणैव भासयन्तं च तत्पथम् ॥ १२ ॥
मनसा सह वायूना माकृतिप्रतिषेधकृत् ।
श्रुतीना म्मानसानां चा प्याचाराणां तथैव च ॥ १३ ॥
वर्णाना माश्रमाणां च परिरक्षक एव हि ।
मानसैकार्णवान्तस्थे निष्कम्पे बुद्धिपादपे ॥ १४ ॥
अभिमानलताढ्येचा प्युपरिस्थ मनुस्मरेत् ।
प्रावृड्गिरि रिव श्यामं तेजसा ज्वलनोपमः ॥ १५ ॥
ध्वंसकृ च्छिन्नजालस्य निद्रालस्य चयस्य यः ।
उत्कृष्टद्विजरूपेण विकसत्पद्मरूपिणा ॥१६॥
स एव द्विभुजो ध्येयो दण्डदर्भाक्षसूत्रभृत् ।
दन्तज्योत्स्नाजिताज्ञानं न्यग्रोधशयनं विभुम् ॥ १७ ॥

निषण्ण मीषदुत्तानं द्विभुजं शिशुरूपिणम् ।
एए एव (?) निरस्ताक्षं शान्तनिद्रारसं स्थितम् ॥ १८ ॥
अनुज्झित स्वभावंच योगमाया बलेनच ।
त्यजन्तमाहृतंच श्वासोच्छ्वास द्वयेनतु ॥ १९ ॥
आब्रह्म भवनं सर्वं कर्मप्राधानिकं हियत् ।
अपौरुषेण रूपेण संवृतावयवात्मना ॥ १२० ॥
स्वमायाजलमध्यस्थ मध्यक्षमधसंस्मरेत ।
ज्ञानादिगुणवृन्देन पक्षभूतेन भूषितम् ॥ २१ ॥
स्वोत्थंसन्निस्सृतं ब्रह्म मेकशृंग विराजितम् ।
कल्पावसान समये वहन्तश्चैव चिन्तयेत् ॥ २२ ॥
नौरूपां विततां क्षोणिं प्रजापति गणान्वितम् ।
मुक्ताफलगणेनैव वपुषा निर्मलेनच ॥ २३ ॥
अनिमीलितनेत्रस्स मीनात्मा भगवा नथ ।
यो नित्यं भवभीतानां बुधानां कृपया स्वयम् ॥ २४ ॥
हृत्स्थो नियतिदण्डेन मार्ताण्डायुतसन्निभः ।
जित्वा ज्ञानबलं भीम मिन्द्रियारिगणान्वितम् ॥ २५ ॥
सयँच्छत्यचिरा द्ब्रह्म नन्दनं स्वसुखाय च ।
ध्याये त्तमेव ह्रस्वांगं श्यामं पद्मदळे क्षणम् ॥ २६ ॥
अन्तर्निविष्टभुवनं जटावल्कलभूषितम् ।
छत्रं तद्वामहस्ते स्य दण्ड मन्यत्र वैष्णवम् ॥ २७ ॥
आक्रम्य जाग्रदादित्य सूर्येन्दुहुतभुक्प्रभाम् ।
तिष्ठत्यनन्तो भगवां स्तुर्याख्य ध्विद्धिभूतिभृत् ॥ २८ ॥
संप्रेरय न्ननिच्छात स्स्वपदा दमृतप्रभाम् ।
आह्लादजननीं शक्तिं कर्मिणां भावितात्मनाम् ॥ २९ ॥
त्रैलोक्यपूरकं ध्याये त्तमेव हरितद्युतिम् ।
नानामुद्राक्षयुक्तेन भुजवृन्देन भूषितम् ॥ १३० ॥

खेटकेनांघ्रिदण्डेन वहंत मरिसूदनम् ।
वहन्तं सद्वैजयन्तीं देवानां च जयार्थिनाम् ॥ ३१ ॥
खड्गचक्र[ अब्जखड्ग ] गदादण्ड बाणांकुशसमुद्गराः ।
शक्तिः परशुशैलेन्द्रौ दशदक्षभुजेष्वमी ॥ ३२ ॥
शंखतोमरशार्ङ्ग च पाशशूलमहीरुहाः ।
कुलिशं क्षुरिका चैव लांगलं मुसलं महत् ॥ ३३ ॥
वामहस्ते ष्वमीध्येया अन्ये ... न्वितादश ।
भयविस्मय मृद्धेणी कण्ठग्रहण लक्षणाः ॥ ३४॥
ध्येया मुद्रा विभोःपंच सव्येतु करपंचके ।
वराख्यां भूतिसंज्ञांच दुःखाख्यां साभयान्तुवै ॥ ३५ ॥
गोपनीन्दक्षहस्तेषु तत्संख्येषु च संस्मरेत् ।
जगत्सूत्रं, सदा [ भा ] क्षैस्तु येनोक्त मनितात्मनां ॥ ३६ ॥
गुणषट्क स्वरूपेण पूर्वोक्ताकृतिभिर्विना ।
स्मर्तव्य स्वचतुर्धावै लाञ्छनाङ्क विवर्जितः ॥ ३७॥
सर्वदापरिरक्षान्तु जरपूर्व चतुष्टयम् ।
योगाक्रिया तपोन्तंच सद्धिभूत्यपवर्गदम् ॥ ३८ ॥
नराद्यः कृष्णनिष्ठश्च पृथगे कत्रचेच्छया ।
नरन्तत्र प्रवालाभ मर्धोन्मीलित लोचनम् ॥ ३९ ॥
अन्तर्निविष्टभावंच शब्दब्रह्मैकमानसं ।
यदोपलक्षणम्मन्त्रं जपमानमलक्षितम् ॥ १४० ॥
स्फाटिकेनाक्ष सूत्रेण करस्थेनचशोभितम् ।
गणयन्नक्षसूत्रीया नावर्तान् वामपाणिना ॥ ४१ ॥
अथनारायणन्देवं ध्यायेत कुमुदपाण्डुरम् ।
बद्धब्रह्मांजलिंशान्तं हृत्पद्मार्पितमानसं ॥ ४२ ॥
युञ्जानश्च स्वमात्मानं परस्मिन्नव्ययेपदे ।
कमण्डलुधरंध्यायेत कांचनाभनतोहरिं ॥ ४३ ॥

विष्टराविष्टपाणिंच क्रियाकाण्डप्रदर्शकम् ।
पठन्त मनिशं शास्त्रं पंचरात्रपुरस्सरम् ॥ ४४॥
कृष्णमिन्दीवरश्याम मूर्ध्वबाहुं जटाधरं ।
पादेनैकेनतिष्ठन्त माहरन्तंच मारुतं ॥ ४५ ॥
एकत्रिषड्द्विषड्रात्रा यतिकृच्छ्रपरायणम् ।
पक्षमासोपवासांश्च दिशन्त मनुचिन्तयेत् ॥ ४६ ॥
कृष्णाजिनोत्तरीयाश्च सर्वेकाषायधारिणः ।
ब्रह्मलिंगधरास्सर्वे सर्वेब्रह्मपरायणाः ॥ ४७॥
मुख्यकर्म परिक्रान्ता स्साधूनां प्रेरणायच ।
कालानुकाल माश्रित्य सर्वेसर्वपरायणाः ॥ ४८॥
असंगशस्त्रयाभगवान् सत्कुठाराभिधानया ।
छिनत्ति बद्धमूलान् यः कर्मवृक्षांस्तु कर्मिणाम् ॥ ४९॥
तमेव द्विभुजंध्याये दुदयादित्यवर्चसं ।
कृष्णैणचर्मवसनं सत्कुठारकरांकितम् ॥१५०॥
दशेन्द्रियाननंघोरं योमनोरजनीचरम् ।
विवेकशरजालेन शमं नयतियोगिनां ॥ ५१॥
ध्येय स्सएव विश्वात्मा सतोय जलदप्रभः ।
रक्तराजीवनयनो धनुश्शरकरांकितः ॥ ५२॥
वाग्देव ममलं योवै स्वरूप मतिलक्षणम् ।
स्वयंस्तवोत्थंविभजति त्रिधापश्यन्ति पूर्वकम् ॥ ५३॥
वांधमारुतहृत्पूर्व स्थानेष्वभ्युदितंक्रमात् ।
स्मर्तव्य स्सोपिभगवा नतसीकुसुमद्युतिः ॥ ५४॥
वहन्वै वामहस्तेन सर्वशास्त्रार्थ पुस्तकं ।
दक्षिणेनतुशास्त्रार्थ मादिशंश्च यथास्थितम् ॥ ५५॥
युगानुसारिबोधाना मखेद जननायच ।
विभजंस्तु चतुर्धावै वेदमेकं त्रिकालवित् ॥ ५६॥

दानधर्मरतानांच यागयज्ञानु याजिनाम् ।
तपस्स्वाध्याय सक्तानां मुक्तानां वै पुनर्भवात् ॥ ५७॥
संरक्षणाययोग्यत्व विज्ञानव्यक्तये ऽपिच ।
समुदेति जगन्नाथ स्तेषां हृदयमलावनेः ॥ ५८॥
मनोवाजिन माक्रम्य त्वादायात्म गुणायुतान् ।
नूनमुत्पादयत्याशु जन्मान्तर शतोत्थितम् ॥ ५९॥
वैषयं वासनाजालं नाशयत्यात्म सिद्धये ।
ध्यायेद्वराश्वगन्तंवै तनुत्राभृत विग्रहम् ॥१६०॥
सितोष्णीषललाटंच नातिदीर्घजटाधरं ।
द्रवत्कनकवर्णाभ मिषुधि द्वयमध्यगन् ॥ ६१॥
शरचापकरव्यग्रं खड्गकुन्त कुठारिणम् ।
यज्ञाध्ययन दानादि परिरक्षन्तमेवाहि ॥ ६२॥
शातयन्त मवर्णांश्चा प्यधर्मनिरतात्मनः ।
सर्वतत्त्वाश्रयन्तत्त्वं सर्वशक्तिमयंविभुम् ॥ ६३॥
सर्वेन्द्रिय गुणाभासं सर्वेन्द्रिय विवर्जितम् ।
आधारं भुवनानांच ध्यातव्य स्तदधस्स्थितः ॥ ६४॥
अनन्तशयनारूढः कल्पान्तहुतभुक्प्रभुः ।
ज्वलज्ज्वालावलीयुक्तः ज्वलनांशुकवेष्टितः ॥६५॥
चक्राद्यायुधबृन्देन मूर्तेन परिवारितः ।
स्थितांत्रिदेशतो लक्ष्मी श्चिन्ता दक्षिणतो विभोः ॥ ६६ ॥
मूर्धदेशगता निद्रा पुष्टि स्तद्वामत स्स्थता ।
प्रधानदेवताध्यान मिद मुक्तं समासतः ॥ ६७ ॥
यज्ज्ञात्वा विनिवर्तन्ते जन्ममृत्युजरारुजः ।
नाम्नै वंस्त्रै र्ध्वजै र्येषां व्यक्ति र्व्यक्ता जगत्त्रये ॥ ६८ ॥
तेपि लांछनबृन्दं तु धारयन्त्यग्निगोचरे ।
ललाटे चांगपट्टे तु पृष्ठे पाणितलद्वये ॥ ६९ ॥

तनूरुहचये मूर्ध्नि कर्मिणां प्रतिपत्तये ।
अपि संसारिणो जन्तो स्स्वभावा द्वैष्णवस्य च ॥ १७०॥
न जहा त्यच्युतं लिंगं किं पुन र्विभवाकृतेः ।
सर्वेषां कामचारित्वं यदुक्तं वै मया पुरा ॥ ७१ ॥
तदंघ्रिभुजवर्णस्य बृहन्मध्याणुलक्षणम् ।
एकाद्यनेकसंख्यं च दृश्यं सर्वत्र सर्वदा ॥ ७२ ॥
नत्वन्यरूपता कार्या कारणं कामरूपताम् ।
यस्मा दस्ति पृथग्भूतो व्यापारो विश्वमन्दिरे ॥ ७३ ॥
देवानां स्थितिसंहार सृष्टिकाले स्वक स्स्वकः ।
सत्येवं नियमे सिद्धे तथापि भगवद्वशात ॥ ७४ ॥
चातुरात्म्यसमूहात्तु यत्पद्मदळभूस्थितम् ।
तथा विभवदेवाना म्मध्या त्पद्मदळेक्षण ॥ ७५ ॥
एक स्त्वनुगृह्यार्थं तु शक्त्यात्मा भावितात्मनाम् ।
बिभर्ति बहुभेदोत्थं रूपं सद्वाहनस्थितम् ॥ ७६ ॥
यदनुस्मरणा द्ध्याना दर्चना दचिरा त्पुमान् ।
प्राप्नोति मनसो ऽभीष्टं तन्मे निगदत श्शृणु ॥ ७७ ॥
सत्य स्सुवर्णो गरुड स्तार्क्ष्य श्च विहगेश्वरः ।
पञ्चात्मकस्य प्राणस्य विकार स्त्वेष पंचधा ॥ ७८ ॥
आचांघ्रिगोचरा स्सर्वो यस्य देह स्तु पौरुषः ।
द्विभुज स्तुहिनाभ श्च स सत्यः प्राणदैवतम् ॥ ७९ ॥
सुपर्णः पद्मरागाभो निर्मल स्स्वर्णलोचनः ।
गरुडः कांचनाभ स्तु कुटिलभ्रु(व)रुणेक्षणः ॥ १८० ॥
केकराक्ष स्तु तार्क्ष्यो वै प्रावृड्जलदसन्निभः ।
द्रवत्कनकनेत्रस्तु शबळाभश्च पंचमः ॥ ८१ ॥
चतुर्भुजा स्सुपर्णाद्या स्सौम्यरूपास्त्वनाकुलाः ।
पतत्रि चरणास्सर्वे पक्षमण्डल मण्डिताः ॥ ८२ ॥

लम्बोदरास्सुपीनांगाः कुण्डलाद्यैस्तु भूषिताः ।
कुटिलभ्रूसुवृत्ताक्ष पन्नतुण्डा स्स्मिताननाः ॥ ८३ ॥
अपानादि समीराणा माधिपत्येन संस्थिताः ।
महावला महाकाया रक्ततुण्डोत्र पंचमः ॥ ८४ ॥
आधेय चरणाधस्स्थ स्सव्य आद्यस्य वैकरः ।
दक्षिणश्चाक्षसूत्रेण सुसितेनच भासितः ॥ ८५ ॥
एवमेवसुपर्णस्य परिज्ञेयम्भुजद्वयं ।
नाभ्युद्देश परोवाम ऊत्तानस्तुसविस्मयः ॥ ८६ ॥
आधेयचरणाधस्थ स्सव्यआद्यस्य वैकरः ।
पुष्पस्तम्बकसम्पूर्ण ऊर्ध्ववक्त्रस्तु दक्षिणः ॥ ८७ ॥
गरुडस्य द्वयंविद्धि हृद्देशेंजलिरूपिणम् ।
तत्रैव सम्पुटाकारं चतुर्थस्य करद्वयं ॥ ८८ ॥
दक्षिणे ऽमृतकुम्भस्तु वामेतु विषमःफणी ।
पंचमस्य द्वयंशेषं त्रयाणांच द्वयोस्समम् ॥८९ ॥
आधेय चरणाक्रान्तो यदिवै दक्षिणःकरः ।
संचारोविहितोवामे त्वक्षसूत्रस्य वैतदा ॥१९०॥
आधेयचरणाधस्थं यस्यपाणितलद्वयं ।
निरस्तसूत्रन्तंविद्धि वाहनंभगवन्मयं ॥ ९१ ॥
अनुग्रहपरस्त्वास्ते पक्षिपक्षाऽज विष्टरे ।
स्वतेजो निजसामर्थ्य संसूचक करा[रवा]न्वितः ॥ ९२ ॥
पद्मासनादिनाचैव केवलंवा श्रियान्वितः ।
सुव्यक्तावयवस्थित्या विद्धि तं गरुडासनं ॥ ९३ ॥
मेढ्रभूस्सोदरास्यैव गोपितांविगगामिना ।
वीर्यपाता स्त्वशिरसा गच्छतश्चाण्डजेनतु ॥ ९४ ॥
लोकान्तराणां कार्यार्थं वात्सल्यात् ध्यायिनामपि ।
प्रत्यक्षदर्शनार्थन्तु स्मृतोगरुडवाहनः ॥ ९५ ॥

तस्माद्भगवतोविष्णो रेवंरूपधरस्यतु ।
समाहूतस्य सिद्ध्यर्थ मासीनं संस्मरेत्स्थितिम् ॥ ९६ ॥
उपसंहृतवामांघ्रिः कञ्जस्थोवा खगस्थितः ।
वाममिच्छाफलानांयो ध्वंसयत्यन्यचिन्तितम् ॥ ९७ ॥
आजानो दक्षिणस्यैव मविक्षिप्त स्स्मृतोच्युतः ।
आमोक्षा त्सर्वसिद्धीनां दक्षिणोध्यायिनां भवेत् ॥ ९८ ॥
सर्वमेव ऋजुस्थित्या संस्थित श्चार्थिनां स्मृतः ।
स्वस्तिकाद्यै र्भवत्येव किन्तु ते वाहनं विना ॥ ९९ ॥
विहिताः पीठ कल्हार सिंहासन गतस्यच ।
विहगाधिपतिश्चात्र योगैश्वर्या द्विभर्तिच ॥ २००॥
सचक्रं भुजबृन्दन्तु नागेंद्रास्त्रवरान्वितम् ।
विभो राज्ञावशेनैव तुष्ट्यर्थं वा स्वयं विभोः ॥ १ ॥
जगज्जयोदयार्थंतु शान्तये शरणैषिणाम् ।
विभिन्नेनच रूपेण नाना लोकान्तरेषुच ॥ २ ॥
अनिरुद्ध गति र्धीरो विचरत्येकएवहि ।
तदारूढ़स्य यद्रूपं शक्तीशस्यच सम्प्रति ॥ ३ ॥
अनेक भेदभिन्नन्तु निबोध गदतो मम ।
संयच्छन्तं सदाशान्ति भाविनां दक्षिणेनतु ॥ ४ ॥
प्रोद्वहन्तं च वामेन शंखं पूर्वोक्तलक्षणम् ।
द्विभुजस्य त्विदं रूपं शक्तीशस्यतु केवलम् ॥ ५ ॥
रूपेणानेन च पुन स्सोल्लासमुपयान्तिच ।
सह कान्तागणै नैव त्वेकाद्येन पृथक्पृथक् ॥ ६ ॥
प्राग्व ल्लक्ष्म्या समेतं य त्तदेकं रूप मैश्वरम् ।
श्रीपुष्ट्यो रथमध्यस्थं द्वितीयं परिकीर्तितम् ॥ ७ ॥
श्रियादि माया निष्ठेन चतुष्केण वृतं परम् ।
शुद्ध्यादिकेन षट्केण चतुर्थं विद्धि साम्प्रतम् ॥ ८ ॥

पुष्टचन्तेन श्रियाद्येन त्वष्टकेनतु पंचमम् ।
लक्ष्म्याद्येन द्विषट्केण षष्ठं विद्धि समन्वितम् ॥ ९ ॥
श्रीदेवी कीर्तिदेवीच जयादेवी ह्लादयुथ ।
चतुर्थी भगवन्माया विश्वस्यास्य निबन्धनी ॥२१० ॥
शुद्धि निरञ्जनां नित्या ज्ञान मुक्ति [ श्वेत्य ] पराजिते,
प्रकृति स्सुन्दरी षट्क मित्युक्तं सर्वसिद्धिदम् ॥ ११ ॥
लक्ष्मीश्शब्दनिधिस्सर्व कामदा प्रीतिवर्धनी ।
यशस्करी शान्तिदाच तुष्टिदा पुष्टिदाष्टकम् ॥ १२ ॥
द्विषट्कं वैभवे योगे देवीनां कीर्तिदंहि यत् ।
लक्ष्म्याद्यं तच्च बोद्धव्यं भेदेऽस्मिन् पारमेश्वरे ॥ १३ ॥
पुनश्चतुर्भुजस्यैवं विज्ञेयं भेदसप्तकम् ।
किन्तु वै शंखचक्रे द्वे वामहस्ते द्वयेन तु ॥ १४ ॥
जग त्यस्मिन् हि यच्छन्तं शान्ति माद्येन शाश्वतीम् ।
प्रोद्वहन्तं द्वितीयेन त्वपसव्येन वै गदाम् ॥१५॥
भूयःकरचतुष्केण पूर्वोक्तेन क्रमेण तु ।
चतुर्णां मब्जपूर्वाना मन्योन्यत्वेन धारणात ॥ १६ ॥
धत्ते द्वादशधा रूपं निश्शक्तिकं च केवलम् ।
पुन र्द्वादशकं तच्च सह शक्तिद्वयेन तु ॥ १७ ॥
स्थित मेकाधिकेनैव षोढ़ा कमललोचन ।
एवं चतुर्भुजेनैव वपुषा बहुधा स्थितः ॥ १८ ॥
सप्तधा षड्भुजाद्येन भुजाधिक्येन वै पुनः ।
स्थित स्त्वनेकधा देवो यथा तदवधारय ॥ १९ ॥
षड्बाहु रष्टबाहु श्च दशद्वादशबाहुधृत् ।
द्विसप्त षोडशकर स्तथाष्टादशभूषितः ॥ २२० ॥
केवलादिश्च सर्वेषां प्राग्वद्भेदस्तु सप्तधा ।
तन्मेश्रृणु यथावस्थ मस्त्रविन्यास चिह्नितम् ॥ २१ ॥

षड्भुजो दक्षिणैर्धत्ते निस्त्रिंशं कमलं गदाम् ।
चक्रं कार्मुकंशङ्खं वामैरब्जोसमन्विभिः ॥ २२ ॥
गदा मुसलचक्राङ्गी नष्टबाहुस्तु दक्षिणैः ।
शंखमंकुश पाशौच वामैस्तु शरंधनुः ॥२३॥
खड्गबाण गदापद्म शक्तिछत्रास्तु दक्षिणाः ।
दृढपाशोधनुश्शंख चक्रखड्गाश्च सामयाः ॥ २४ ॥
दक्षांदिक्षिण हस्तानां द्विपद्मक भुजभूषितः ।
सन्धत्ते कमलं खड्गचक्रबाणगदांकुशान् ॥२५॥
शंखपाशाभयान्शक्तिं तर्ज्यानाम्मुसलंधनुः ।
चतुर्दशभुजोधत्ते वामेतु कमलके ॥२६॥
शंखंगदांकुशौपाशं मुसलंछत्रंहलं ।
दण्डाब्जकुलिशान्चक्रं खड्गशक्तिपरश्वधान् ॥२७॥
बिभ्रत्याषोडशभुजो मुख्यहस्तैस्समुद्गरान् ।
अभयंकमलंखड्गं शक्तिदण्डवरांकुशान् ॥२८॥
शंखचक्रगदावज्र पाशलांगलकार्मुकान् ।
वरंकराग्रकेनैव धत्तेसव्येनविश्वजित् ॥ २९ ॥
पद्मखड्ग गदावज्र चक्रबाण वरांकुशान् ।
दण्डंदक्षिणहस्तैस्तु धत्तेऽष्टादशबाहुभृत् ॥३०॥
शंखाभयौहलंशक्तिं मुद्गरंमुसलं धनुः ।
कुठारमतुलंपाशं बिभुर्वामभुजैरमून् ॥ ३१ ॥
बिभर्तिभुवनान्यर्थं साधूनांपालनायच ।
भूयोविशेषरूपाणि स्वेतान्येवविशेषतः ॥३२॥
स्ववक्रद्वयमात्रेण नयत्यमितविक्रमः ।
सिद्धतेजोसहिष्णूणां पितृपालरतात्मनां ॥३३॥
अंगनादिकसंसार भीतानांवैहितायच ।
अनन्तंवैमहैभांगे स्तैजसेनिःस्वदक्षिणे ॥३४॥

# अथ त्रयोदशः परिच्छेदः ।

भगवान् ।

योगोस्मिन् स्वेनपालिवै सर्वसामान्यलक्षणे ।
ध्येयाविशेषरूपेण किरीटाद्याखिलास्तुवै ॥ १ ॥
चतुर्भुजाश्चतुर्वक्त्रा वस्त्रस्रग्भूषणान्विताः ।
पुनर्विशेषयोगाना मर्चनावसरेपुनः ॥ २ ॥
एकाननंचसर्वेषां द्विभुजं विहितंसदा ।
किरीटस्सौम्यवदनः कांचनाभोमहातनुः ॥३॥
भाभिराकृतियुक्ताभि र्नानारूपाभिरावृतः ।
स्थितोवैद्याधरायेन स्थानाकेनान्तरिक्षगः ॥ ४ ॥
पद्मरागाचलाकारं कौस्तुभं रत्ननायकम् ।
दिशोदशद्योतयन्तं संलग्नांघ्रि स्थितंस्मरेत् ॥ ५ ॥
वहन्तंवक्षसोमध्ये स्वहस्तकृतसम्पुटम् ।
सन्धारयन्तमपरं तथावैशिरसोपरि ॥ ६ ॥
स्फटिकाद्रिप्रतीकाशं श्रीवत्समथभावयेत् ।
बद्धपद्मासनासीनं न्यस्तहस्तंस्वपार्श्वयोः ॥ ७ ॥
वहन्तंकूर्ममुद्रांच मुख्यहस्तद्वयेनतु ।
ध्येयाभगवतीमाला चित्ररूपामनोहरा ॥ ८ ॥
सर्वगन्धान्वितासौम्या ईषद्विकसितानना ।
स्वरश्मिमण्डलान्तस्स्थं वलगन्तं हेतिपंस्मरेत् ॥ ९ ॥
विभोराज्ञांप्रतीक्षन्तं ह्रस्वाङ्गं रक्तलोचनम् ।
कुन्दा [न्ता] वदातं कमलं सौम्यमीष त्स्मिताननम् ॥१०॥
रवं सुवन्तं मधुरं श्रोत्रेन्द्रिय सुखावहम् ।
गदांहेमाद्रिसंकाशां तन्वीं कुवलयेक्षणाम् ॥११॥

स्वोत्थेनरश्मिजालेन भायसन्तीं नभस्स्थलम् ।
तुहिनाचलसंकाशं शंखं कमललोचनम् ॥१२॥
सदागमादिसारन्त मुद्गिरन्तं स्वकैर्मुखैः ।
सन्ध्याजलदसंकाशं लांगलंभीमलोचनम् ॥१३॥
क्षौ [ क्षा ] मांग मुन्नतांसंच वज्रकायं वलोत्कटम् ।
कृशोदरंच मुसलं रश्मिज्वालावलीवृतम् ॥१४॥
अंगारराशिसदृशं प्रलम्बमतिनिष्ठुरम् ।
नीलोत्पल दलश्याम मिष्वस्त्रं बहु [ बाल ] विग्रहम् ॥१५॥
नानारूपंचनिशितं दीर्घहस्वचण्डविक्रमम् ।
कार्मुकंहेमगौरंच किंकिणीजालमण्डितम् ॥१६ ॥
आस्फोटयन्तंस्वकरं महाजलदनिस्वनम् ।
स्वरश्मिखचितंध्याये न्नृत्यमानंच नन्दकम् ॥ १७ ॥
शरदाकाश संकाशं दशन्तंदशनावलिं ।
सूर्यमण्डलसंकाशं खेटकं सौम्यमूर्तिकम् ॥१८॥
ग्रसन्तमस्त्रपूगानि स्ववक्त्रेणा निशम्बलात् ।
बद्धमुष्टिस्मरेद्दण्डं रक्तांगं रक्तलोचनम् ॥१९॥
क्रोधमूर्तिं स्वदशनै र्दशन्तमधरंस्वकम् ।
शक्रकार्मुकवर्णंच परशुंभीमविक्रमम् ॥२०॥
द्रवत्कनकनेत्रंच ज्वलज्ज्वालाजटाधरम् ।
पाशंफणगणाकीर्णं विद्युज्जिह्वं भयानकम् ॥ २१ ॥
हेमालिपाण्डराभंच घोरास्यंरक्तलोचनम् ।
कृशांगंदीर्घबाहुंच पिंगलाक्षन्तुचांकुशं ॥ २२ ॥
विकरालमुखंरौद्रं भिन्नाञ्जनगिरिप्रभम् ।
मुद्गरंशतधामाभं पीनांसं पृथुविग्रहम् ॥ २३ ॥
जटाकलाप धृत्सौम्यं पुण्डरीकनिभेक्षणम् ।
वज्रंवज्रोपलाभन्तु सितदीर्घं नखान्तिकम् ॥ २४ ॥

दंष्ट्राकराळवदनं ज्वलत्कनकलोचनम् ।
सौदामिनीनिभभाशक्तिं शान्ताग्निवदनेक्षणम् ॥ २५ ॥
घनघर्घरनिर्घोषं मुद्गिरन्तीम्मुहुर्मुहुः ।
एते ऽ त्र नायकास्सर्वे विभोराज्ञाप्रतीक्षकाः ॥ २६ ॥
प्रोत्थिताविचलंतश्च कुलुमैस्स्थानकै[सुसंस्थैर्ध्यानकै] स्स्थिताः ।
श्रोणीतटार्पितकराः श्चामरव्यजनोद्यताः ॥ २७ ॥
सपन्नगतुकिरीटाद्यं वर्जयित्वाचतुष्टयत् ।
तर्जयन्तंच दुष्टौघ मन्येषां दक्षिणंकरं ॥ २८ ॥
स्मर्तव्यं ध्यानकालेतु सर्वेषामधमस्तके ।
ध्येयंस्वकंस्वकंचिह्नं सुप्रसिद्धं निराकृति ॥ २९ ॥
किरीटोहुतभुग्वेद्यः कौस्तुभस्तुप्रभाकरः ।
स्वयंशशांकः श्रीवत्सो मालाचैवपतन्निराट् ॥ ३० ॥
कालश्चैवमहाबुद्धे विद्धिचक्रन्तु हेतिपं ।
अपाम्पतिर्वैकमलं गदादेवीसरस्वती ॥ ३१ ॥
स्वंशंखस्सीरमोषध्यो मुसलं ना [ग] गनायकः ।
शब्दादयस्साधकास्तु धनुर्विद्धिसमीरणम् ॥ ३२ ॥
नन्दकं सर्वशास्त्राणि खेटकं वसुधास्मृता ।
ज्ञेयोहि दण्डो नियति वैराग्यं परशुस्स्मृतः ॥ ३३ ॥
पाशोमायांकुशःकामो प्यहंकारस्तु मुद्गरः ।
विज्ञानममलं वज्रं समाधि श्शक्तिरुच्यते ॥ ३४ ॥
भिन्नरूपस्यचविभो र्यउक्त स्सुन्दरीगणः ।
साधारश्चाप्यना [सा] धार स्तासां ध्यानं क्रमाच्छृणु ॥ ३५॥
चिन्तारवण्डलचापाभा लक्ष्मीरक्तांबुजप्रभा ।
पुष्टिः कनकगौराच कीर्तिः कुमुदपाण्डुरा ॥ ३६ ॥
जयार्ककान्तिसदृशी मायाञ्जननिभास्मृता ।
शुद्धिः किंशुकसंकाशा गुञ्जाभातु निरञ्जना ॥ ३७ ॥

बन्धुजीवोज्वलानित्या ज्ञानशक्ति स्सिताऽरुणा ।
फुल्लेंदीवर वर्णाच परिज्ञेया पराजिता ॥ ३८ ॥
रक्तोत्पलाभा प्रकृति स्सितपीता सरस्वती ।
सर्वकामप्रदां विद्धि त्विन्द्रनील समप्रभाम् ॥ ३९ ॥
सिन्दूर पुञ्जवर्णाभा विज्ञेयाप्रीतिवर्धनी ।
यशस्करीच दुग्धाभा शान्तिदा विद्रुमोज्वला ॥ ४० ॥
तुष्टिस्तुहिनसंकाशा दया वैडूर्यसन्निभा ।
निद्रायस्कान्तसदृशी क्षमापीतारुणप्रभा ॥ ४१ ॥
कान्तिर्दर्पणसंकाशा धृतिर्गोरोचनोज्वला ।
मैत्रीबन्धूकपुष्पाभा रतिर्गैरिकसन्निभा ॥ ४२ ॥
मतिर्मरकताभावै सर्वाःप्रमुदिताननाः ।
दिव्यमाल्याम्बरधरा नानालंकारभूषिताः ॥ ४३ ॥
दिव्यस्रग्वेष्टनोपेता वीक्षमाणास्स्वकं पतिम् ।
चतस्रश्शक्तयोयास्तु विभोश्शयनकस्यतु ॥ ४४ ॥
प्रयुक्तास्तत्रपूर्वाशा वस्थिताबीजयत्यजम् ।
त्रयंयद्विक्रयस्थन्तु तत्संवाहनतत्परम् ॥ ४५ ॥
यत्रैकाश्रीर्विभोस्तत्र सन्निवेशपरोदिता ।
यत्रैकाश्रीर्विभोस्तत्र वामेवादक्षिणेपिवा ॥ ४६ ॥
श्रीपुष्ट्याख्यद्वयंयत्र तत्रतद्दक्षिणोत्तरे ।
पद्मासनेनोपविष्टा पक्षिपक्षद्वयेस्थिता ॥ ४७ ॥
नळिनीनाळहस्ताढ्या मृदुकुम्भकरापरा ।
अग्नीषोममयोदेह आद्योयस्सर्वगस्यच ॥ ४८ ॥
तस्यशक्तिद्वयंतादृ गपिश्रं भिन्नलक्षणम् ।
भोक्तृशक्तिस्स्मृतालक्ष्मीः पुष्टिर्वैकर्तृसंज्ञिता ॥ ४९ ॥
भोगार्थमवतीर्णस्य तस्यलोकानुकम्पया ।
उदितंसहतेनैव शक्तिद्वितयमव्ययम् ॥ ५० ॥

नानात्वेनह्विवैयस्य परिणामः प्रकीर्तितः ।
दिक्पत्रचतुरन्तस्थं यद्वैदेविचतुष्टयम् ॥ ५१ ॥
शक्तिः परशु पाशाञ्च मंकुशं तत्करेक्रमात् ।
षट्कंकेसरजालस्थं तत्रप्राक्पश्चिमेद्वयम् ॥ ५२ ॥
द्वयं द्वयं सौम्ययाम्ये तासां वाम करेषु च ।
शंखं चक्रं गदा सीर मिष्वस्त्रं नन्दकं शितम् ॥ ५३ ॥
पत्रमध्येनिविष्टन्तु यत्कान्ताष्टक मुत्तमम् ।
तस्यवामकराणाञ्च विज्ञेयन्त्वादितोऽष्टकम् ॥ ५४ ॥
श्रीफलंचाक्षसूत्रंञ्च ग्दर्पणः पुष्पमंजरी ।
विष्टरं किंकिणीचाञ्च संचयःकमलेक्षण ॥ ५५ ॥
विज्ञेयश्शान्तिदःपाणि र्द्वादशानान्तुसाभयः ।
अन्तरान्तरयोगेन सर्वाश्चामरलांछिताः ॥ ५६ ॥
स्वस्तिकेनोपविष्टाश्चा प्यन्तर्मुदितमानसाः ।
द्व्यादिकस्यास्यसंघस्य द्वादशान्तस्यलाङ्गलिन् ॥ ५७ ॥
सितादिकेनवर्णेन लांछनव्यत्ययेनतु ।
तुल्यलाञ्छनयोगेन तन्निरासेचवैसति ॥ ५८ ॥
वराभयाभ्यामन्योन्य पाणिभ्यामथकेवलात् ।
बहुधाभेदबृन्दन्तु परिज्ञेयन्तुपूर्ववत ॥ ५९ ॥
शेषंभवोपकरणं देवानां निचयोहिसः ।
सुप्रसिद्धोमहाबुद्धे किन्त्वब्जाद्यैस्तु पूर्ववत् ॥ ६० ॥
ध्यातव्यालांछितास्सर्वे पाणिपादतलेषुच ।
भक्तिश्रद्धाव्रतपर स्सर्वेषां यस्सदैवहि ॥ ६१ ॥
ध्यात्वैवमर्चनंकुर्यात भोगैस्संस्पर्शपूर्वकैः ।
सोचिरान्मोक्षनिष्ठन्तु फलंप्राप्नोत्यभीप्सितं ॥ ६२ ॥
किरीटाद्यस्त्रनिष्ठेन परिवारेण चावृतम् ।
भक्त्या ह्यभीप्सितं रूप मर्चनीय मथापि वा ॥ ६३ ॥

निर्मुक्तपरिवारं वा स्वेन ध्यानेन लक्षितम् ।
विद्धात्यर्चना न्नूनं स्वपदं फलसंयुतम् ॥ ६४ ॥
ज्ञात्वैवं साधकः कुर्या द्यथाभिमत मर्चनम् ।
आत्मशक्तिसमै र्भोगै रखिलै श्शुद्धविग्रहैः ॥ ६५ ॥
हृदि वेद्यां बहिर्मूर्तौ प्रासादेस्वगृहेतुवा ।
बहुप्राकारनिर्मुक्ते धूमदाहादिनोज्झिते ॥६६॥
शरणेरमणीयेच्च निस्सम्पर्केतु भाविते ॥६६-॥

इति श्रीपाञ्चरात्रे श्रीसात्वतसंहितायाम्
भूषणाख्य देवताध्यानं नाम
त्रयोदशः परिच्छेदः ॥ १३ ॥

---

## अथ चतुर्दशः परिच्छेदः ।

---

भगवान् ।

अखण्डनायनित्यस्य तथानैमित्तिकस्यच ।
कर्मणश्चोदयामास हर्ताविष्णुं मुनीश्वराः ॥ १ ॥
यैराजीवावधिकालं नित्यमाराधनंप्रति ।
धीःकृतापुण्डरीकाक्ष श्रद्धापूतेनचेतसा ॥२॥
तेषामाकस्मिकाल्लोपा द्भोगानामप्यसंभवात् ।
यत्स्यात्तस्योपशमनं ज्ञातुमिच्छामि साम्प्रतम् ॥ ३ ॥

भगवान् ।

लोभबुद्धिं विनायस्य भोगाना मप्यसम्भवः ।
सामर्थ्येनविनायस्य कृच्छ्रार्त्तानां परिच्युतिः ॥४॥

ज्वरादिव्याधिदोषेण जातोयस्याह्निकक्षयः ।
चातुर्मास्यस्यवाप्राप्ति र्यस्यस्वातन्त्र्यतोविना ॥ ५ ॥
तस्यतस्यमहाबुद्धे शृणुयद्विहितंहितम् ।
सांवत्सरिकाणां भोगानां प्रायश्चित्तंहि पूरणम् ॥ ६ ॥
हृदयंगमसंज्ञाना मर्च्चाद्दविशाप्लुतम् ।
औपचारिकभोगानां बीजानिविहितानिवै ॥ ७ ॥
कृच्छ्रचान्द्रायणादीनां व्रतानाम्परिपूरकः ।
विशेषार्चनसंयुक्त श्चातुर्मास्यस्तु संयमः ॥ ८ ॥
सौवंप्रातिसरंचिह्नं मुक्ताहारोपमंशुभम् ।
शमंनयतिभक्तानां सर्वदालोपमाह्निकम् ॥ ९ ॥
तच्चनाम्नस्सुप्तस्य मध्येकुर्याच्छुभेदिने ।
आषाढस्यदशम्यान्तु यावद्वैकार्तिकस्यच ॥ १० ॥
सम्पूर्णश्चन्द्रदिवस स्सकाल श्चान्द्र उच्यते ।
आकर्कटकसंक्रान्ते स्तुलाभागक्षयावधि ॥ ११ ॥
पवित्रारोपणेचान्द्र स्त्वधमःपरिकीर्तितः ।
कालस्सचाष्टपक्षस्तु सौरोमध्यमसंज्ञितः ॥ १२ ॥
एकादश्यानिशान्तोय श्चातुर्मास्योपलक्षितः ।
कालन्तं वैष्णवंविद्धि नूत्तमंसर्वसिद्धिदम् ॥ १३ ॥
अप्राप्तस्यकालस्य त्वन्तरायेण केनचित् ।
निर्वाहणीयोप्यपरः कालश्चान्द्रायणादिना ॥ १४ ॥
सम्पाद्यंचैवतन्मध्ये विधिवद्यागपूर्वकम् ।
दिनत्रयेतुपूर्वोक्ते पूर्णिमाद्युपलक्षिते ॥ १५ ॥
सोपवासैःक्रियापूर्वं कर्मप्रातिसरीयकम् ।
दशम्यामर्चनंकृत्वा हुत्वाऽग्निंचनिशामुखे ॥ १६ ॥
आनिमन्त्र्य च देवेशं धूपं दत्वा ऽर्घ्यपूर्वकम् ।
नित्यानन्दमयै र्भोगै र्नित्यतृप्त स्त्वमव्ययः ॥ १७ ॥

तथापि भक्त्या तृप्तोऽहं त्वां यजाम्यात्मसिद्धये ।
निवेद्य मुखवासादी नियुक्त्वा दन्तधावनम् ॥ १८ ॥
संपूज्याथ सुगन्धैस्तु सितसूत्रसमूहनम् ।
शुभं प्रतिसरं त्वेकं तत्तुल्यानि बहूनि वा ॥ १९ ॥
कुंकुमाद्यै र्यथा योगं रंजयित्वा स्वशक्तितः ।
जाम्बूनदमयैः पुष्पै र्नानारत्नोपशोभितैः ॥ २० ॥
सनालै र्भूषणैश्च रम्यैर्वा रजतोत्थितैः ।
धूपिते भिनवे भाण्डे कृत्वाच्छाद्यास्तरेण तु ॥ २१ ॥
प्रणवेनार्चयित्वा तु संस्थाप्य पुरतो विभोः ।
देवागारं बहिश्चान्त र्मन्दिरं यागमन्दिरम् ॥ २२ ॥
संवेष्ट्य सितसूत्रेण चतुर्धा तद्गुणेन तु ।
ततोऽभ्यर्च्य समूहन्तु पंचकालपरायणम् ॥ २३ ॥
षट्कर्मनिरतं चापि यतिवृन्दन्तु वैष्णवम् ।
समक्षं भवतां भक्त्या श्वः प्रभुं पूजयाम्यहम् ॥ २४ ॥
सन्निधान मतः कार्यं भवदनुग्रहकाम्यया ।
स्नानाद्य मेकादश्यांवै सविशेषं समाचरेत् ॥ २५ ॥
हवनान्तं क्रियाकाण्डं जपस्तुतिपरस्ततः ।
आराध्यस्था मतः स्थित्वा जागरेण नये न्निशाम् ॥ २६ ॥
पुन रभ्यर्च्य देवेशं प्रभाते विधिपूर्वकम् ।
भूषये द्भूषणैनैव त्वा मूर्ध्नः प्रणवेन तु ॥ २७ ॥
यथा रूपैश्च बहुभि र्मया बद्धाञ्जलिस्त्विदम् ।
नावलेपान्न मोहाद्वा कर्मत्यागो मया कृतः ॥ २८ ॥
त्वमेव सर्वं जानासि सर्वेश[पां] हृदये स्थितः ।
यथा शक्त्या त्वमिच्छात स्तत्रापि परमेश्वर ॥ २९ ॥
तन्निमित्त मिदं कर्म कृतं त्वत्प्रीतये मया ।
एव मुक्त्वा समभ्यर्च्य चतुरः पांचरात्रिकान् ॥ ३० ॥

भगवत्प्रतिपत्त्या तु शक्त्या प्रावरणै र्धनैः ।
तथा प्रतिसरान्तैस्तु ब्रह्मचारियतीन् गुरून् ॥ ३१ ॥
तर्पयित्वाथ चान्नेन पूतेन विविधेन तु ।
क्षान्त्वानुव्रज्य नैवेद्य पूर्वं कुर्याञ्च भोजनम् ॥ ३२ ॥
अपरेऽहनि सन्यास माचरे द्विधिपूर्वकम् ।
अपनीयतु माल्यादीन् प्रदद्या द्वै दिने दिने ॥ ३३ ॥
नो याति म्लानतां याव च्चतुर्थे ऽहनिवा त्यजेत् ।
विशेषयागपूर्वन्तु कारिभ्यो वत्सरे स्वके ॥ ३४ ॥
एवं कृते सति तदा सिद्धि र्भवति शाश्वती ।
सर्वधाराधकानां तु चेतसो भीप्सितं तथा ॥ ३५ ॥

इति श्रीपांचरात्रे श्रीसात्वतसंहितायाम्

पवित्रारोपणविधि र्नाम

## चतुर्दशः परिच्छेदः ॥ १४ ॥

---

## अथ पंचदशः परिच्छेदः ।

---

भगवान् ।

तपोदानव्रतानांच विहितस्याह्निकस्यच ।
निश्शेषयागभोगानां कृत्वासम्पूरणक्रियाम् ॥ १ ॥
अपरेऽहनिवैकुर्यां च्चतुर्थेसप्तमेतुवा ।
स्नपनम्पूज्यमन्त्रस्य तीर्थोद्देशेचसङ्गमे ॥ २ ॥
नद्यां समुद्रगामिन्यां देवखातेह्रदेतथा ।
प्रीतयेपरमेशस्य स्वात्मनोदुःखशान्तये ॥ ३ ॥

आह्लादायामराणांच पितॄणां तृप्तयेतुवै ।
आप्यायानार्थं भूतानां भुवनानांचभूतये ॥ ४ ॥
देशदोषप्रशान्त्यर्थं गोब्राह्मणहितायच ।
बहुशाखमभग्नाग्रं समूलंयदपुष्पितम् ॥ ५ ॥
प्राङ्मुखोदर्भमादाय प्रणवेनपुराक्षितैः ।
ततस्तेनैवतन्मूलं प्राग्वत्कुर्यादधिष्ठितम् ॥ ६ ॥
तस्यमध्यमनाळंय व्रचग्भूतमवतिष्ठते ।
आराध्यमन्त्रनाथेन स्मरेद्ध्यात्मम्महात्मना ॥ ७ ॥
विवर्तपारमात्मीय मध्यक्षंचापिविद्धितम् ।
अनेकगर्भमुख्यंय त्काण्डंकाण्डेषुचोत्तमम् ॥ ८ ॥
अणिमादिगुणैर्युक्तं पुंस्कत्वं तेनकल्प्यते ।
वाचकन्तस्ययोक्तव्यं हंसयुक्तन्द्विलक्षणम् ॥ ९ ॥
बहिःकाण्डचतुष्केण चित्तपूर्वचतुष्टयम् ।
कथ [ ग्रन्ध ] नीयमधोवक्त्र मव्यक्तान्तंस्वकैः पदैः ॥ १० ॥
प्रणवादिनमोऽ तैस्तु व्यापकंसूक्ष्मलक्षणम् ।
एवंश्रोत्रादिकान्पंच स्वनाम्नाग्रथ [ न्ध ] येत्तथा ॥ ११ ॥
कर्मेन्द्रियाणि तदनु ततस्तन्मात्रपंचकम् ।
पंचकन्त्वथभूतानां बध्वावैक्ष्मावलानिकम् ॥ १२ ॥
अवशिष्टैस्तु तत्काण्डै र्बध्नीयात्त तद [ त्कर] ण्डवत् ।
विनाशिखासमूहेन समुत्तानावधेरथ ॥ १३ ॥
किंचित्तदूर्ध्वदेशाच्च यथानोयातिवैपुनः ।
बहुधाकाण्डसंघस्तु कल्पितस्तत्वसंख्यया ॥ १४ ॥
विभिन्नानां च काण्डानां भंगादेकतमस्यच ।
उत्पद्यते ऽन्यथात्वंच तस्मात्तद्ग्रथयेद्दृढम् ॥ १५ ॥
दर्भमञ्जरिजन्त्वेदं सर्वाद्यादोषवित्रकम् ।
अनुसन्धीयतेतत्र मन्त्रध्यानं यथास्थितम् ॥ १६ ॥

पूजयित्वार्घ्यपुष्पाद्यै रलंकृत्यपठेदिदम् ।
त्वमेवतीर्थभगवं स्त्वमेवायतनंपरम् ॥ १७ ॥
त्वय्येवाधिष्ठितंसर्व मितिजानामितत्वतः ।
तत्रापिचत्वयादिष्टं क्रियाकाण्डं शुभप्रदम् ॥ १८ ॥
यत्तन्निर्वाहया म्यद्य त्वदनुग्रहकाम्यया ।
विज्ञाप्य एवं भगवान् मन्त्रमूर्तिः परावरः ॥ १९ ॥
तं पत्रपात्रगं कृत्वा ब्रह्मयानगतन्तु वा ।
वेदगेयध्वनीशंख शब्दमङ्गळपूर्वकम् ॥ २० ॥
नीत्वा तीर्थान्तिकं तत्र तीरदेशे निधाय च ।
पूर्वामुखं च तं यान मथादाय पवित्रकम् ॥ २१ ॥
वामहस्ते तले कुर्या त्क्ष्मामण्डलगतन्त्विव ।
विधृया न्मध्यभागाच्च पाणिना दक्षिणेन तु ॥ २२ ॥
अवतार्याम्भसो मध्ये निमज्जे त्सह तेन वै ।
सन्निधिं तत्र तत्कालं प्रकुर्वन्त्यचिरात्तु वै ॥ २३ ॥
निश्शेषाणि च तीर्थानि लोकत्रयगतानि च ।
मन्त्रात्मा यत्र रक्षार्थं क्षण मास्ते जलाशये ॥ २४ ॥
तत्रायतनतीर्थानां सर्वेषां स्या त्समागमः ।
किं पुन र्यत्र भगवान् मन्त्रमूर्ति रधोक्षजः ॥ २५ ॥
साधकाभ्यर्थित स्स्नाया त्सर्वानुग्रहया धिया ।
विद्वान्योनेन विधिना तीर्थ मासाद्य तत्ववित् ॥ २६ ॥
स्नापये द्वन्धुमित्रादीन् प्राप्नुवन्त्यचिरा च्च ते ।
तैर्थं फलमानाधासा न्मन्त्रमूर्तेः प्रसादतः ॥ २७ ॥
किन्तु तद्यानवादित्र वर्जितस्तु भवे द्विधिः ।
इमं विद्धि महाबुद्धे विशेषं चात्र कर्मणि ॥ २८ ॥
सामान्य मविभासं य च्चिन्मयं रूप मैश्वरम् ।
विशेषसंज्ञासम्बन्धं जीवहंसं विभाव्यताम् ॥ २९ ॥

पवित्रकं तथाकारं स्मृत्वा स्नाप्य ततोम्भसा ।
एवं स्वेनैव चान्येषां बहूनां बहुभि स्तु वा ॥ ३० ॥
सम्पाद्यं विष्टरैः स्नानं दूरस्थानां सदैव हि ।
सम्पन्ने स्नपने त्वेवं द्वितीये ऽ ह्नि महामते ॥ ३१ ॥
रथे कृत्वा चिते तं वै प्रपूज्य च यथाविधि ।
यात्राख्य मुत्सवं कुर्या दन्नदानपुरस्सरम् ॥ ३२ ॥
सनृत्तगेयवादित्रं जागरेण समन्वितम् ।
एकरात्रं द्विरात्रं वा त्रिरात्रं भक्तिपूर्वकम् ॥ ३३ ॥
सकृ त्संवत्सरस्यान्ते षूत्सवस्नपनादिकम् ।
कुर्या द्योमन्त्रनाथस्य स सिद्धिं लभते पराम् ॥ ३४ ॥

इति श्रीपाञ्चरात्रे श्रीसात्वतसंहितायाम्
पवित्रस्नानविधि र्नाम

पंचदशः परिच्छेदः ॥ १५ ॥

## अथ षोडशः परिच्छेदः ।

नारदः ।

प्रभुर्मुनीश्वराभूय श्रोदितोवनमालिना ।
सर्वलोकहितार्थन्तु यत्तद्वक्ष्याम्यतःपरम् ॥ १ ॥

सङ्कर्षणः ।

देवसम्प्रतिपन्नाये क्रमेस्मिन्ब्राह्मणादयः ।
दीक्षणीयाःकथन्तेवा एतदिच्छामिवेदितुम् ॥ २ ॥

भगवान् ।

यथाक्रमेणोदितानां वर्णानांशृणुकांगळिन् ।
त्रिविधंदीक्षणोपायं संक्षेपात्सर्वसिद्धितम् ॥ ३ ॥
पूर्वोक्तलक्षणोज्ञात्वा कश्चिद्दृढतरम्पुमान् ।
संसारभयभीतस्तु निर्वाणमभिवांछति ॥ ४ ॥
वैराग्यधी रच्यपत्त श्चिरकालंगुरोर्गृहे ।
संस्थितोदासभावेन खेदोद्वेग विवर्जितः ॥ ५ ॥
ज्ञात्वातस्यार्थितांनून माहूयाग्रेनिवेश्यच ।
कृताकृतंच पृष्टव्य आस्मृतेस्तत्क्षणावधि ॥ ६ ॥
ज्ञात्वादोषफलंतस्य कषायश्चित्तैर्यथोदितैः ।
कृच्छ्रातिकृच्छ्रपूर्वैस्तु शोधनीयं प्रयत्नतः ॥ ७ ॥
बहूनांपरिपीडाना मसामर्थ्यात्तुळांगळिन् ।
मनःप्रसादपर्यन्तं कालंवा द्वादशाह्निकम् ॥ ८ ॥
नियोक्तव्योमिरोपूरे ऽयाचितेनक्तभोजने ।
स्तुतिसम्मार्जनस्नान पुष्पाद्याहरणोद्यमैः ॥ ९ ॥
आश्रमेधैष्णवानान्तु दिव्योचायतनेविभोः ।
अनिशम्भगवद्बिम्ब स्वापीठादवलोकने ॥ १० ॥
अभिजातस्तुर्यःभा ग्युण्कृतैर्मलिनीकृतः ।
साम्प्रतंभगवद्भक्त्या पवित्रीकृतमानसः ॥ ११ ॥
अहोरात्रोपितोधृत्वा नखकेशादि लुण्ठि [ ञ्छि] तः ।
पंचगव्यमथापाद्यं दूर्वाद्यैस्तकुशोदकम् ॥ १२ ॥
मन्त्रैस्तहाभुद्धेधाष्यैः स्समावर्त्यचतुश्शतम् ।
पर्वादिमचतुष्कन्तु क्षापयेत्तेन तंसुधीः ॥ १३ ॥
प्रत्यहंचतुरोवारा नाप्रभातनिशागमम् ।
ब्रह्मतीर्थं चतुष्कंस त्वापूर्यापूर्यसम्पिबेत् ॥ १४ ॥
क्रमात्संप्रोदितैर्मन्त्रै स्समाचम्यान्तरान्तरा ।
अत्रमशनंकुर्या दन्तेक्षीराज्यभावितम् ॥ १५ ॥

क्षपयेत्फलमूलैर्वा अहोरात्रचतुष्टयम् ।
इतिभक्त्याप्रपन्नाना मार्जावमापि दुष्कृतात [ निष्कृतिः ] ॥ १६ ॥
कथितांविरतानांच देहशुद्धिकरम्परम् ।
ब्रह्मकूर्चसमेतन्तु प्रायश्चितं मयाद्यते ॥१७॥
ज्ञात्वामहत्वं दोषाणां त्रिविधानान्तुवैपुरा ।
सम्भवेसतिहेमादि दानंसततमाचरेत् ॥ १८ ॥
पूर्वोक्ताद्विहितात्काला लघुदुष्कृतिनाक्रमाद् ।
चतुर्थांशेन ह्रासस्तु ब्रह्मकूर्चं पिबेत्ततः ॥१९॥
कालेनवर्णोत्कर्षेण सहसामान्यमुच्यते ।
प्रायश्चित्तंहिसर्वेषां सर्वकल्मषनाशनम् ॥२०॥
उत्तरोत्तरताम्बुध्वा प्रथमंदुष्कृतस्यच ।
क्षपयेत्तद्विजेन्द्रस्तु मासैर्द्वित्रिचतुर्गुणैः ॥ २१ ॥
नृपविट्छूद्रजातीय एकैकंवर्धयेत्क्रमात ।
मासमेकादिकात्काला त्समारभ्ययथाक्रमम् ॥ २२ ॥
दुराचारोपिसर्वाशी कृतघ्नोनास्तिकः पुरा ।
समाश्रये दादिदेवं श्रद्धया शरणंयदि ॥ २३ ॥
निर्दोषं विद्धितंजन्तुं प्रभावात्परमात्मनः ।
किम्पुनुर्योनुतापार्त श्शासनेऽस्मिन्हिसंस्थितः ॥ १४ ॥
विरतो दुष्कृताच्चैव भक्तिच्छायां समाश्रितः ।
एवंसंशुद्धदोषाणां बहुजन्मार्जितस्यच ॥२५॥
कल्मषस्यविघातार्थं नारासिंहीं महामते ।
कृत्वावैसांप्रतं दीक्षां दद्याद्वैमंत्रपूर्वकम् ॥ २६ ॥
आराधनंहि तस्यैव वैभवीयस्यवैविभोः ।
सबाह्याभ्यन्तरंचैव सम्यङ्मासचतुष्टयम् ॥२७॥
मासाष्टकं वत्सरंवा बुध्वा भावबलम्पुरा ।
ज्ञात्वाभव्याशयानांच प्रसादम्पारमेश्वरम् ॥ २८ ॥

विभवव्यूहसूक्ष्माख्यां दीक्षांकुर्यादनन्तरम् ।

संकर्षणः ।

परिज्ञेयोहिकैर्लिंगै स्साधकानामयक्षयात् ॥ २९ ॥

सम्यगाराधनान्मन्त्र प्रसादःकमलापते ।

भगवान् ।

चित्तप्रसादस्त्वतुल स्तेजोवृद्धिरतीवहि ॥ ३० ॥

धैर्यमुत्साहसन्तोषा वकार्पण्यादयोगुणाः ।
येषां तेषां हि बोद्धव्यं मन्त्रात्माभिमुख स्स्थितः ॥ ३१ ॥
प्रयुक्ति श्शान्तिकादीनां कर्मणा मचिरादपि ।
प्रयाति यदि साफल्यं विज्ञेयं तेन हेतुना ॥ ३२ ॥
सम्पन्नः पापदाहश्च प्रसन्नश्चापि मन्त्रराट् ।
ददाति धर्मकामार्था नाचिरा द्यदि योजितः ॥ ३३ ॥
अणिमाद्यष्टकं चापि विविधा योगसिद्धयः ।
आत्मसिद्धिसमेताश्च परितुष्टा स्तदा स्मृताः ॥ ३४ ॥
यस्मि न्वै वैभवे रूपे यस्याभिरमते मनः ।
तस्य कल्मषशान्त्यर्थं दीक्षां कुर्या च्च तेन वै ॥ ३५ ॥
तमाराध्यहिपूर्वोक्त कालं तमनुयोज्य च ।
योग्यतायाः परीक्षार्थ माशान्ते स्सर्ववस्तुषु ॥ ३६ ॥
नारसिह्मेन वान्येन मन्त्रेणा भिमतेन च ।
दीक्षया ऽऽ राधनेनैव होमजापव्रतादिना ॥ ३७ ॥
कर्मणा केवलेनैव शान्तिकाद्युच्छ्रितेन च ।
विनाणिमादिसिद्धिभ्यो बुध्वा पापं क्षयं गतम् ॥ ३८ ॥
भावये त्तेन कालेन ततः पद्मदळेक्षण ।
सिद्धानां वैभवीयानां षाड्गुण्यमहिमात्मये ॥ ३९ ॥

निश्श्रेयस विभूत्यर्थं ग्राह्यं दीक्षात्रयं वरम् ।
अभ्यर्थिता त्सुप्रसन्ना त्प्रतिपन्नाच्च देशिकात् ॥ ४० ॥
सानुकम्पेन वा तेन नि [ स्व ] यमप्रार्थितेन च ।
कार्यं संशुद्धपापानां भीतानां शरणैषिणाम् ॥ ४१ ॥
संस्कृतानां हि युक्ताना मघक्षाळनकर्मणि ॥ ४१½ ॥

इति श्रीपांचरात्रे श्रीसात्वतसंहितायाम्
अघशान्तिकल्पो नाम

षोडशः परिच्छेदः ॥१६ ॥

## अथ सप्तदशः परिच्छेदः ।

नारदः ।

अथ संचोदितो भूय श्श्रीपति र्मुनिसत्तमाः ।
हितार्थं भवभीतानां विभुनासीरपाणिना ॥ १ ॥

संकर्षणः ।

भगवन् विधिना केन प्रसाद मधिगच्छति ।
नृणा माराधकानां तु विश्वत्राता नृकेसरी ॥ २ ॥
श्रुत्वैव माह भगवा न्शृणुष्व गदतो मम ।
सिद्धिमोक्षप्रदं मन्त्रं वैभवं मूर्तिमोहजित् ॥ ३ ॥
कामरूपधरं नित्यं नृसिंहस्य महात्मनः ।
वर्णचक्रन्तुपूर्वोक्त संयुतं [ क्त लक्षण ] वसुधातळे ॥ ४
उपलिप्ते तु संलिख्य पूजयित्वा यथाविधि ।
समुद्धरे त्ततो मन्त्र मनेकाद्भुतविग्रह [ क्रम ]म् ॥ ५ ॥

प्रणवं पूर्व मादाय तदन्ते विनियोज्य च ।
नवमं नाभिवर्णेभ्य स्तदूर्ध्वे ऽराच्चतुर्दशम् ॥ ६ ॥
तस्योपरि तदन्तस्थं वर्णं गोळकवन्न्यसेत् ।
नमोन्तं वर्णमेतद्धि वाचकं परमात्मनः ॥ ७ ॥
ज्ञानादयो गुणा ष्षड्वै प्रागुक्ता हृदयादयः ।
तदर्थमेव वर्णं तं षोढा संलिख्य केवलम् ॥ ८ ॥
द्वितीयतुर्यषष्ठैश्च द्वादशेनान्तिमेन च ।
चतुर्दशेनाराद्वर्गा त्क्रमाद्वै विनियोजयेत् [हन्तिवै शयेत् (?)]॥९॥
बीजवच्छिरसा सर्वान् लांछये त्पंचमं विना ।
सर्वेषां प्रणवः पूर्वं स्स्वसंज्ञां ते नियुज्य च ॥ १० ॥
स्वकीयजातय श्चान्ते वषडन्ताः क्रमेणतु ।
ॐ नमो भगवते ना रसिंह्मायेत्यनेन तु ॥ ११ ॥
द्वादशाक्षरमन्त्रेण स्मृत्वा विग्रहवत्पुरा ।
सबाह्याभ्यन्तरस्थेन सांगेना द्येन पूजयेत् ॥ १२ ॥
अथ लब्धाधिकारस्तु मन्त्रेणा नेन दीक्षितः ।
भक्तिश्रद्धापरो नित्यं मतिमांश्छिन्नसंशयः ॥ १३ ॥
गुर्वाज्ञाभिरतो नित्यं तर्कवाग्जालवर्जितः ।
स्वकर्मनिरतो नित्यं [ धर्मनिरतो ] वानप्रस्थो ऽथवा गृही ॥१४॥
मन्त्र माराधये द्येन विधिना तं निशामय ।
उपार्ज्य भोगा नखिला न्न्याय्यो पायेन वै पुरा ॥ १५ ॥
स्नातो बद्धकचो मौनी शुद्धवासो ऽर्घ्यपुष्पधृत् ।
कृत्वा द्वास्थार्चनाद्यन्तु उपविश्यासने ततः ॥ १६ ॥
स्रायामं भूतसंशुद्धिं धारणाभ्यां समाचरेत् ।
केवलेन तु मन्त्रेण भावनासहितेन तु ॥ १७ ॥
नाभिदेशस्थितं ध्यात्वा देवं संगृह्य कल्मषम् ।
निस्सृतं वायुमार्गेण द्वादशान्ता वधौ क्षिपेत् ॥ १८ ॥

निरस्तपाप माकृष्य वात[ शंख ]चक्रसमन्वितम् ।
नासाग्रेण तु मन्त्रेशं देहसम्पूरणाय च ॥ १९ ॥
तं ध्याये द्धृदयस्थं च गतिरुद्धेन वायुना ।
चित्तोपशमनार्थन्तु नूनं वायुजयाय च ॥ २० ॥
शनै श्शनै रथ बहिः केवल म्मारुतं क्षिपेत् ।
विनान्त्यरेचकेनैव मन्येषा मुत्तरोत्तरम् ॥ २१ ॥
कालाद्ध्रासं यथाशक्ति नित्यमेव समाचरेत् ।
द्वादशान्तेथ मन्त्रेशं तप्तहाटकसन्निभम् ॥ २२ ॥
सहस्ररविसंकाशं वृत्तमण्डलमध्यगम् ।
स्मृत्वाथ मुक्त स्तन्मात्रै र्निर्दहे द्विग्रहं स्वकम् ॥ २३ ॥
दक्षिणांघ्रे रथांगुष्ठ प्रान्तदेशे शिखाक्षरम् ।
ध्यात्वा युगान्तहुतभु ग्प्रज्वाला समा[ शता ] वृतम् ॥ २४ ॥
तेन स्वविग्रहं ध्याये त्प्रज्वलन्तं समन्ततः ।
देहजां भावये ज्ज्वाला म्मन्त्रनाथे लयं गताम् ॥ २५ ॥
तत स्स्वमन्त्रं तद्बिम्ब माकृष्य हृदि विन्यसेत् ।
अथ हस्तद्वये न्यस्ये दादिमद्वादक्षरम् ॥ २६ ॥
दिव्यं प्रशान्तांगार [ न्तराग ] न्तु तमधिष्ठाय चेतसा ।
स्वमन्त्रा दमृतौघेना सेचये द्विग्रहं स्वकम् ॥ २७ ॥
मणिबन्धा न्नखाग्रन्तु मूलमन्त्रपुरस्सरम् ।
हृदादयो ऽस्त्रपर्यन्ता अंगुष्ठाद्यंगुलीषु च ॥ २८ ॥
सर्वासु युग्मयोगेन नेत्रं नखमुखाश्रितम् ।
आमूर्ध्नश्चरणान्तन्तु द्वादशार्णं न्यसे त्तनौ ॥ २९ ॥
जीवभूतं तदन्तस्स्थं मूलमन्त्रं तथा न्यसेत् ।
हृदाद्यं नेत्रपर्यन्त मंगषट्कं स्वगोचरे ॥ ३० ॥
स्वस्वांगुलियुगेनैव तेजोरूपं विना कृते ।
श्रीवत्सं वक्षसो वामे पूर्णेन्दुसदृशद्युतिम् ॥ ३१ ॥

कौस्तुभं हृदये न्यस्ये च्चण्डदीधितिलक्षणम् ।
नानाऽजवनपुष्पोत्थां वनमालां च कण्ठतः ॥ ३२ ॥

पद्मं दक्षिणपाणौतु शंखं वामकरे न्यसेत् ।
गदां पद्मकरे भूयश्शंखपाणौतु चक्रराट् ॥ ३३ ॥

खड्गं दक्षिणहस्तेथ धनु र्वामकरे न्यसेत् ।
आचांसा दक्षिणे भागे न्यस्या श्री रुत्तरे तथा ॥ ३४ ॥

पुष्टि र्गुल्फावसानं च वक्त्रमध्ये सरस्वती ।
पृष्ठतो विन्यसे न्निद्रां ततः पाणिद्वयेनतु ॥ ३५ ॥

मुद्रां बध्वा स्मरे द्ध्यानं देवोहमिति भावयेत् ।
अथ प्रणवपूर्वेण स्वनाम्ना नतिना सह ॥ ३६ ॥

शेषपूर्वन्तु वह्न्यंत मासनं परिकल्पयेत् ।
[ शेषन्तु पूर्ववन्नयस्यासनं च परिकल्पयेत् । ]
तदाक्रम्याथ तस्यैव कार्या स्वहृदि कल्पना ॥ ३७ ॥

ब्रह्मस्वरूप ममलं स्वचैतन्यं तदूर्ध्वतः ।
विकल्पोपरतं कृत्वा इच्छयातु विवर्तते ॥ ३८ ॥

परध्वनिस्वरूपेण तत्प्रकाशात्मना पुनः ।
व्यक्तिभावेन तत्रापि एवं प्रविलये सति ॥ ३९ ॥

विसर्जनन्तु बोद्धव्यं संपन्नेतु क्रिया क्रमे ।
क्रम एष क्रमोक्तानां मन्त्राणा मवतारणे ॥ ४० ॥

लांछनादिक्रियाध्यान मेषां चैवहि कल्पना ।
ज्ञातव्याराधकेनैव नित्यं कर्मणि कर्मणि ॥ ४१ ॥

मन्त्रन्यास मतः कुर्या द्धस्तन्यासं विना विभोः ।
ध्यात्वाथ भावनाजातै र्भोगैः परमपावनैः ॥ ४२ ॥

पूजयित्वा जपान्तं चा प्यवतार्य बहि र्यजेत् ।
दक्षिणोत्तरहस्ताभ्यां हृद्बीजेन विचिन्यच ॥ ४३ ॥

सूर्यसोमौततःकुर्या द्द्रव्यदाहसमुद्भवौ ।
तोयमादायपात्रेथ तत्रहृन्मन्त्रितं क्षिपेत् ॥४४॥
पुष्पगन्धसमोपेतं सुसितं शालितण्डुलम् ।
मन्त्रयेत्प्रणवाद्येन वहुशोहृदयेनतु ॥ ४५ ॥
तदुद्धृते नांभसावा अस्त्रमन्त्रं समुच्चरन् ।
प्रोक्षयेत्स्वासनस्थानं यागोपकरणन्तथा ॥ ४६ ॥
चित्रस्थाद्भगवद्बिम्बा द्भुक्तम्पुष्पादिकंहियत् ।
अपनीयतुतत्कुर्या द्दासलारेणुमार्जनम् ॥ ४७ ॥
धातुद्रव्यमयेकुर्या त्क्षाळनंगन्धवारिणा ।
उपलिप्याथभूभागं सांभसागोमयेनतु ॥ ४८ ॥
तत्रमण्डलमालेख्यं सूत्रयित्वापुरासमम् ।
चतुरश्रंचतुर्द्वारं मार्गपीठाब्जभूषितम् ॥ ४९ ॥
त्रिनाभिनेमि षडरं चक्रन्तुकमलाद्बहिः ।
मध्यैस्सितादिकैरागैः पुष्पैर्वा तैश्चतैश्शुभैः ॥ ५० ॥
चन्दनाद्यैस्सुगन्धैस्तु सर्षपैस्तिलतण्डुलैः ।
सर्वौषधिमयेनैव चूर्णेनपरिपूर्यवा ॥ ५ ॥
पुष्पैरथार्घ्यपात्रन्तु मन्त्रैस्सम्पूज्यनिष्कळैः ।
पात्रेपरस्मिस्तस्माद्धि स्तोकमुद्धृत्यचोदकम् ॥५२ ॥
योगपीठार्चनंकुर्या दनुसन्धानपूर्वकम् ।
स्वनाम्नाप्रणवाद्येन नमोऽन्तेनयथाक्रमम् ॥ ५६ ॥
अनन्तेशंस्मरेन्मध्ये सर्वाधारमयंप्रभुम् ।
आग्नेयादौतुधर्माद्य मैशान्यन्तश्चतुष्टयम् ॥ ५४ ॥
प्रागादावप्यधर्माद्य मुत्तरान्तं न्यसेत्परम् ।
तदूर्ध्वंकमलंध्याये त्स्वनाम्नाथतथोपरि ॥ ५५ ॥
स्मरेत्पत्राश्रितंसूर्यं शशांकंकेसरावनौ ।
कर्णिकास्थंहुतभुजं ततोगन्धादिनायजेत् ॥ ५६ ॥

गणेशाद्यर्चनंकृत्वा प्रथमंगुरुस्तन्ततः ।
प्राप्तानुज्ञोथकलश मादायशुभलक्षणम् ॥ ५७ ॥
तमम्भसास्त्रजप्तेन सम्पूर्यादौतुनिक्षिपेत् ।
तद्गर्भे काश्चनरत्नं बीजान्योषधिसत्फलम् ॥ ५८ ॥
चूतादिविटपोद्भूतां सपत्रां पुष्प[ फल ] मञ्जरीम् ।
कौशेयवस्त्रस्त्रक्कण्ठं कृत्वाचर्चितचन्दनम् ॥ ५९ ॥
तन्मध्येपूजयेन्मन्त्रं सांगंसावरणंक्रमात् ।
प्राग्दिङ्मण्डलवाह्येथ दत्वावैपुष्पचक्रिकां [पत्रपुष्पिकां] ॥ ६०॥
पीठमन्त्रोपजप्तांच तदूर्ध्वेस्थापयेच्छतम् ।
अथावतार्यो हृदया न्मन्त्रोविमलदीधितिः ॥ ६१ ॥
कर्मणामनसावाचा सिद्धिमार्गेणसाधकैः ।
अनुज्झितस्वरूपंच सूर्यविम्बमिवांभसि ॥ ६२ ॥
कर्मणाप्रेरयेच्चैव वाचातम्मन्त्रमुच्चरेत् ।
आगच्छपदसंयुक्तं संस्मरेन्मनसाकृतिम् ॥ ६३ ॥
एवमाहूयवैदद्या दर्घ्यपाद्येचभक्तितः ।
आमूलात्सर्वमन्त्राणां व्यक्तिस्थानांसमर्चनम् ॥ ६४ ॥
अर्घ्यपुष्पादिनाकुर्या त्स्वेनस्वेनस्वकेपदे ।
तदोदितं विभोर्देहा द्धृदयाद्यंचतुष्टयम् ॥ ६५ ॥
न्यसे त्कमलपत्राणा मापूर्वा दुत्तरान्तिकम् ।
अग्नीशरक्षो वाय्वादिदळे ष्वस्त्रं यथाक्रमम् ॥ ६६ ॥
नेत्रं केसरजालस्थं चक्रं नाभित्रयोपरि ।
श्रीवत्सकौस्तुभौ चैव वनमाळां तथैव च ॥ ६७ ॥
उदक्पश्चिमभागस्थे चाक्रीये त्वपर [ प्यपरा ) त्रये ।
कमलं निशिताग्रं च नन्दकं विन्यसे त्क्रमात् ॥ ६८ ॥
प्राग्भागदक्षिणस्थाभ्यां त्रितयं चाथ विन्यसेत् ।
कार्मुकं हेतिराट्छंखं ततो देवस्य दक्षिणे ॥ ६९ ॥

नेमिभागे श्रियन्देवीं पुष्टिमुत्तरतोन्यसेत् ।
पृष्ठदेशे स्थितां निद्रां अग्रभागेसरस्वतीं ॥ ७० ॥
वामदक्षिणभागाभ्यां विधिस्थ मिषुधिद्वयम् ।
द्वारेष्वस्त्रं न्यसेद्भूयो मुद्रांकोणचतुष्टये ॥ ७१ ॥
सायुधा नथ दिक्पालान् स्वस्थाने मण्डलाद्बहिः ।
एवं न्यस्यततोध्यायेन्मन्त्रव्यूहं यथास्थितम् ॥ ७२ ॥
सर्वदेवमयन्देवं सर्वेषां तेजसांनिधिम् ।
सर्वलक्षणसम्पूर्णं सार्वज्ञ्यादिगुणैर्युतम् ॥ ७३ ॥
निष्टप्तकनकाभंच सम्पूर्णांगं महातनुम् ।
घोरशार्दूलवदनं चण्डमार्ताण्डलोचनम् ॥ ७४ ॥
सौदामिनीचयप्रख्यै र्लोमभिःपरिपूरितम् ।
अरुणाम्भोजपत्राभं वज्राधिककरेरुहं ॥ ७५ ॥
चलत्फणीश्वरसटं चन्द्रकोटिशतद्युतिं ।
वमन्तमान्तरंवह्निं स्वरंध्रैः [ मन्त्रैः ] मारुतानुगैः ॥ ७६ ॥
प्रलयाम्बुदनिर्घोष मुद्गिरन्तं स्ववाचकम् ।
युगान्तहुतभुग्ज्वाला मण्डलान्त र्व्यवस्थितम् ॥ ७७ ॥
षडस्त्रंचाप्यष्टबाहुं[षडस्रभूत्त्वाष्टभुजं]व्याप्यलोकान्स्थितंप्रभुम् ।
दिव्यगन्धानुलिप्तांगं दिव्याम्बरधरंतथा ॥ ७८ ॥
दिव्यस्रग्वेष्टनोपेतं दिव्यालंकारमण्डितम् ।
कौस्तुभेनोरसिस्थेन श्रीवत्सेनाप्यलंकृतम् ॥ ७९ ॥
रत्नकांचनसन्मुक्ता युक्तयावनमालया ।
सब्रह्मसूत्रयाचैव शोभितं परमेश्वरम् ॥ ८० ॥
भुजान्यस्त्रवरैर्दीप्तैः कमलाद्यैर्युतानिच ।
क्षीरसागरवच्छुभ्रं ततःपद्मन्तुदक्षिणे ॥ ८१ ॥
प्रणवध्वनिगर्भन्तु हिमाद्रिशतशोऽधिकम् ।
वामेशंखवरंध्याये द्गदाखड्गौ ज्वलत्प्रभौ ॥ ८२ ॥
दक्षिणेपाणियुग्मेथ चक्रंकालानलद्युतिम् ।
सधनुर्वामहस्ताभ्यां ततःपाणिद्वयेनतु ॥ ८३ ॥
अविद्यादलनीम्मुद्रां क [ कु ] मोख्यां संस्मरेत्प्रभोः ।
एवमेवहि हृन्मन्त्रं ध्यायेत्कुमुदपाण्डरम् ॥ ८४ ॥

अंजनाश्मप्रतीकाशं शिखामन्त्रं तथाकृतिम् ॥ ८५ ॥
धरित स्सूर्यसन्तप्तो यथा कनकपर्वतः ।
तथा कवचमन्त्रं च ध्यानकाले विचिन्त्य च ॥ ८६ ॥
कृतोज्वालासहस्रै स्तु अयस्कान्तसमद्युतिः ।
सर्वाञ्जशक्तिसंपूर्ण श्चास्त्रमन्त्रः प्रकीर्तितः ॥ ८७ ॥
निर्धूमांगारशिखर सदृशो नेत्रमन्त्रराट् ।
ध्येया स्स्वरुचिसंयुक्ता द्विभुजाः पुरुषोत्तमाः ॥ ८८ ॥
साङ्गाः कौस्तुभपूर्वा ये गदामालेऽगनाकृती ।
फुल्लपद्मोदराभा श्री र्नळिनीनाळसंयुता ॥ ८९ ॥
चन्द्ररश्मिप्रतीकाशा श्वेतचामरधारिणी ।
पूर्णेन्दुसदृशी पुष्टि रुद्वहन्ती च पाणिना ॥ ९० ॥
सम्पूर्ण ममृतेनैव कलशं कांचनोत्थितम् ।
विज्ञानपुस्तककरा स्फटिकाभा सरस्वती ॥ ९१ ॥
फुल्लेन्दीवरसंकाशा त्वक्षसूत्रकरांकिता ।
ध्येया भगवती निद्रा सर्वा श्चामरलांछिताः ॥ ९२ ॥
सम्मुखा देव देवस्य वस्त्रालंकारमण्डिताः ।
एवं ध्यात्वा ततः कुर्या त्पूजनं कुसुमादिकैः ॥ ९३ ॥
स्नानै विलेपनै र्वस्त्रै र्माल्यै र्धूपै श्च दीपकैः ।
दध्ना च मधुमिश्रेण क्षीरेणाज्यान्वितेन च ॥ ९४ ॥
हृद्यै र्मृष्टै स्स्थिरै र्मेध्यै र्नैवेद्यै र्विविधै श्शुभैः ।
यथा कालोद्भवै स्सर्वैः फलमूलै स्तु षड्रसैः ॥ ९५ ॥
पूजितै र्मुक्तदोषै स्तु मुद्रामात्रोपलक्षितैः ।
मूलै र्ध्यानै स्तथा स्विन्नै र्बीजैर्हों [ हैं ] मादिना ऽथवा ॥ ९६ ॥
तत स्स्वहस्तौ संस्कृत्य भस्मना लंभनादिना ।
बध्वा प्रदर्शये न्मुद्रां त्रिशिखां सम्मुखे विभोः ॥ ९७ ॥
ध्यात्वा त्रेताग्निरूपन्तु दक्षिणा दंगुळित्रयम् ।
स्पष्ट मूर्ध्वशिखं चैव ज्येष्ठा त्कान्ता कनीयसी ॥ ९८ ॥
अधोखिलस्वरूप श्च ध्वान्तातीतो ऽग्निरूपधृत् ।
देवो गुणत्रयातीत स्तथा मार्गत्रयातिगः ॥ ९९ ॥
धर्मै स्स्थूलतरै र्मुक्तो योयं व्यक्तो धिपार्चितः ।

निरन्तराभ्यां शाखाभ्यां मुद्रैषा हार्दिकी स्मृता ।
अंगुष्ठादि कनिष्ठान्तं शाखायुग्मं पृथ क्पृथक् ॥ १॥
सान्तरं सम्पुटा दस्मा त्कनिष्ठादौ तथा भवेत् ।
शिर श्शिखा तनुत्राख्य नेत्रमुद्रा यथाक्रमम् ॥ २ ॥
अस्या मंगुष्ठयुग्मन्तु मुद्रायां करमध्यगम् ।
प्रदेशिन्या ततो विद्धि कानष्ठान्तं श्रियादिषु ॥ ३ ॥
स्वमन्त्रयुक्ता चान्येषा मर्चितानां यथाक्रमम् ।
पुनः पुनः प्रयोक्तव्या हार्दयं शिरसा सह ॥ ४ ॥
परस्परमुखाश्लिष्टौ शाखाक्रान्तौ परस्परम् ।
किन्तुवैदक्षिणंहस्त मूर्ध्वंचाप्यधरेपरम् ॥ ५ ॥
अयिथादळनीह्येषा मुद्रापूर्वमुदाहृता ।
एवंमुद्राचयंकृत्वा पूजांकृत्वा पुनःप्रभोः ॥ ६ ॥
यथाशक्तिजपंकुर्या च्छतमष्टाधिकन्तुवै ।
एकैकंहृदयादीनां सर्वेषां विहितंत्वथ ॥ ७ ॥
क्रियांगत्वान्नदोषोऽस्ति अन्यथा बजपंविना ।
समर्चयित्वाष्टांगेन प्रणम्यपरमेश्वरम् ॥ ८ ॥
स्मृत्वानुज्ञांसमादाय यजेद्वह्निगतंततः ।
कुण्डंसुलक्षणंकृत्वा संस्कारै स्संस्कृतंपुरा ॥ ९ ॥
पूजयित्वाऽर्घ्य पुष्पाद्यै स्तत्राग्नि मवतार्यच ।
सुसमिद्धंच निर्धूमं संशुद्धं ताडनादिना ॥ ११० ॥
अर्घैर्निरंबुकुसुमैः पूजयित्वाच भावयेत् ।
व्यस्तोगुणगणष्षष्ठ स्तेजोनाम गुणोह्ययः ॥ १ ॥
परस्यब्रह्मणस्सोयं सामान्यंसर्वतेजसा ।
ध्यात्वैवं नेत्रमन्त्रेण निक्षिपे त्कुण्डमध्यतः ॥ २ ॥
पावनैरिन्धनैश्शुष्कैः कृत्वानिर्धूममेवतम् ।
समिद्भिरर्चयित्वाथ तन्मध्येमन्त्रमण्डलम् ॥ ३ ॥
ध्यात्वाऽभ्यर्च्य यथापूर्वं सन्तर्प्य सघृतैस्तिलैः ।
परिवारयुतन्देवं सहस्रशतसंख्यया ॥ ४॥
दद्यात्पूर्णाहुतिंसम्य ग्व्योमसंख्यांनिवेद्यच ।

भक्तान्प्रवेशये त्तत्र गृहीतकुसुमांस्तुवै ।
प्रक्षपयेन्मण्डलान्त र्नेत्रबन्धं विमुच्यच ॥ ६ ॥
अष्टाङ्गप्रणिपातैस्तु प्रदक्षिणयुतैस्ततः ।
देवश्चाग्नि र्गुरुःकुम्भः पूजनीयःपुनःपुनः ॥ ७ ॥
तत्काळं भक्तिभावेन विज्ञातायोग्यतायथा ।
तीव्रमन्दादिकां तेषां तदादीक्षां समाचरेत् ॥ ८ ॥
शुद्ध्याद्ध्यक्तसंशुद्धौ शतमष्टाधिकन्तुवै ।
तिलानान्तद्धदाज्यस्य द्वादशार्णेन बुद्धिमान् ॥ ९ ॥
दद्यात्पूर्णाहुतिंपश्चा न्मन्त्रमर्घ्यादिनार्च्यच ।
ततश्चांगसमूहेन प्रागुक्त पारि [ दळ ] संख्यया ॥ १२० ॥
कुर्याद्व्यक्तशुद्ध्यर्थं दद्यात्पूर्णाहुतिंततः ।
स्वरूपापादनार्थन्तु मूलबीजेनवैतथा ॥ १ ॥
प्रणवादिनमोन्तेन कुर्या द्धोम मतन्द्रितः ।
ध्यात्वानिरस्तबन्धन्तं शुद्धंशान्ततु सर्वगं ॥ २ ॥
समस्तसंवित्पूर्णंच दद्यात्पूर्णाहुतिंततः ।
मूलमन्त्रेणमन्त्रज्ञो भक्तानामनुकम्पया ॥ ३ ॥
समयांश्रावयेत्पश्चा त्कुम्भे ऽग्नौ मण्डलेततः ।
भक्त्यानयातुसम्प्राप्त मैहिकामुष्मिकंत्वया ॥ ४ ॥
नास्याः कुर्याः परित्यागं कर्मणा मनसा गिरा ।
साध्यं विना न कुर्या स्तु स्नानादीनां च लोपनम् ॥ ५ ॥
याव ज्जीवं यथाशक्ति संस्थितो यत्र कुत्र चित् ।
स्थानेषु हृदयाद्येषु कुर्या न्मन्त्रगणार्चनम् ॥ ६ ॥
द्रव्यैः पुष्पाम्बुपूर्वै स्तु तदभावे तु वै हृदि ।
मानसीं पूर्वव त्पूजां निर्वपेन्न्यासपूर्विकाम् ॥ ७ ॥
मन्त्रनाथं गुरु म्मन्त्रं समत्वेनाभिवीक्षयेत् ।
मन्त्रमण्डलमुद्राणां परां गुप्तिं समाचरेत् ॥ ८ ॥
दूरादेव नमस्कार्यो मृगराड्व्याघ्र एव वा ।
तदाकृतिर्मृगो ऽन्यो वा तच्चर्मकापि नारुहेत् ॥ ९ ॥
नचाक्रमेत पादेन नच तत्पावके क्षिपेत् ।
पद्मपत्रे स्तथाश्वत्थपर्णै र्भोजनभाजनम् ॥ १३० ॥

वर्जनीयं तथा शंख पद्माद्यंकित मासनम् ।
नक्तं वा परपिण्डं [ परिपीडं ] वा प्येकादश्यां समाचरेत ॥ १ ॥
विशेषपूजनं कुर्या द्वादशी ष्वाखिलासु च ।
अयनादिषु चान्येषु सूर्यसंक्रमणेषु च ॥ २ ॥
न भूतग्रहदुष्टानां व्याधीनां वा कदाचन ।
असिद्धेन स्वमन्त्रेण कुर्यां दुत्सा रणं [ दनं ] तु वै ॥ ३ ॥
मन्त्रजं सिद्धिलिंगं य त्स्वप्ने प्रत्यक्षतोपि वा ।
अनुभूतं न वक्तव्यं कस्यचि द्गुरुणा विना ॥ ४ ॥
व्यक्तं नृसिंह्मबीजन्तु दृश्यते यत्र कुत्र चित् ।
नमस्कुर्या त्समभ्यर्च्य वाक्पुष्पै स्सप्रदक्षिणैः ॥ ५ ॥
कृत्वाश्रुपातं शोकं वा विप्रयोगनिमित्ततः ।
स्नानादृते न कुर्या द्वै देवाग्निपितृतर्पणम् ॥ ६ ॥
आनाभिवर्षना त्काला दन्यत्र सति संकरे ।
सूतकाख्ये न कर्तव्यं प्रागुक्तं चैव यत्नतः ॥ ७ ॥
स्वानुष्ठानं हि वै यस्मा दागमा त्समुपागतम् ।
तस्य सम्पूजनं यत्ना द्रोपनं च समाचरेत् ॥ ८ ॥
ब्राह्मणादी न्यथाशक्ति दीनानाथां श्च पालयेत् ।
एवं हि समया न्दृष्या द्भक्तानां भावितात्मनाम् ॥ ९ ॥
सम्पालनाच्च येषां वै प्राप्नुया न्मन्त्रजं फलम् ।
इष्ट्वैवंहि ततः कुर्या त्सेचनं कलशेन तु ॥ १४० ॥
आत्मन श्चानुभक्तानां नैवेद्यं प्रार्थये त्ततः ।
ब्राह्मणाय च तद्दद्यात् हृद्यं मेध्यं च शोभनम् ॥ १ ॥
क्षमापये त्ततो देवं यत्र यत्रावतारितम् ।
अथ शिष्टै स्तु नैवेद्यै र्यजे द्गणपतिं प्रभुम् ॥ २ ॥
विष्वक्सेनाभिधानंचा प्यर्घ्याद्यै रर्चितोहि यः ।

बहिराराधनस्थाना त्प्रादक्षिण्येन निक्षिपेत् ।
पूर्वादिदिग्भागपर्यंतं मन्त्री भूतबलिं तदा ॥ ४ ॥
ततो विसर्जनं कुर्या द्दुपसंहृत्य चाखिलम् ।
विनिक्षिप्याम्भसोमध्ये पत्रपुष्पादि निक्षिपेत् ॥ ५ ॥
निष्कामः पावनार्थन्तु स्तोकमुद्धृत्य वै पुरा ।
सन्ध्यायमन्त्रपूर्वेण समश्नीयाच्च मौनवान् ॥ ६ ॥
भोजनान्तेततः कुर्या त्संस्मारेत्तु निशामुखे ।
संजपं तस्य ध्यानं सोपतर्पण पूर्वकम् ॥ ७ ॥
तथैवं रात्रिशेषन्तु कालं सूर्योदयावधि ।
कर्तव्यं सजपं ध्यानं नित्य माराधकेनतु ॥ ८ ॥
एवमेव विधानेन पूजयित्वा दिनेदिने ।
जपे लक्षाष्टकं मंत्री ततास्सिद्ध्यति मंत्रराट् ॥ ९ ॥
दद्यात्मनसो ऽभीष्टा स्सिद्धीस्सर्वान्तु रूपकाः ।
इत्यादिरपेन्द्र ऋषिभ्यो भक्तेभ्यश्चमयोदितं ॥ १५० ॥
लोकविस्तारसारेण शास्त्रवै युगभेदतः ।
यागोयागोपकरणं विमलं प्रतिमादिकम् ॥ १ ॥
ज्ञातव्यं तत्त्वयाखस्य गविरोधेन सर्वदा ।
आगमेभ्यो ऽथतन्त्रेभ्य स्तत्काशा दात्मसिद्धये ॥ २ ॥
यथोक्त मिहसंक्षेपा त्खेदन्यत्र विस्तरात् ।
अथसंसाधितन्मन्त्रं ब्रह्मचर्यादिसंयमैः ॥ ३ ॥
पयोव्रतक शाकांतु मूलमूलफलाशनैः ।
मन्त्रीयथाप्नुयात्सिद्धी च्छान्तिकादिषुतच्छृणु ॥ ४ ॥
ज्ञात्वादौ स्वशरीरोत्थै लौकिकै रपिलक्षणैः ।
ध्यानेन स्वप्नयोगेन संस्थितिं जीवितस्यच ॥ ५ ॥
ततश्शल्यादि निर्मुक्तं स्थानमालाचशोभनं ।
संच्छन्नं कटजालेन साम्बरेणाथवागृहम् ॥ ६ ॥

तन्त्रमण्डलमालिख्य सर्वोपकरणान्वितम् ।
चन्दनक्षोदयुक्तेन शशिनाऽऽहितेन च ॥ ७ ॥
सुगन्धशालिचूर्णेन प्रागुदीरितलक्षणम् ।
निर्व्रणं लक्षणाढ्यं च पूरितं गालिताम्भसा ॥ ८ ॥
हेमरत्नौषधीमूल शाखादूर्वाफलोत्करम् ।
धूपिताहतसूत्रेण वाससापरिवेष्टितम् ॥ ९ ॥
सुखमाधारसंस्थं च वाससोदण्डकस्य च ।
विन्यसेत्स्वमसूत्रेण दिग्विदिक्कलशाष्टकम् ॥ १० ॥
सुधाचन्दनलिप्ताङ्गं लाजतंडुलपूरितम् ।
श्वेतपट्टगलोपेतं सितपुष्पस्रगन्वितम् ॥ १ ॥
मुक्ताफलोदरं चैव बीजमल्लक [ बीजानल्लक ] भूषितम् ।
उपकुम्भाष्टकं त्वेवं कुम्भानामुपरि न्यसेत् ॥ २ ॥
श्वेतचामरसंयुक्तं सित सूर्ध्वे वितानकम् ।
बध्वा सितेन सूत्रेण तन्तथा कलशाष्टकम् ॥ ३ ॥
संवेष्ट्य कण्ठदेशान्तं त्वच्छिद्रेण दृढेन च ।
कृत्वैवं च तत स्नात्वा कुर्यादाह्निकं ततः ॥ ४ ॥
निशांशुना चन्दनेन श्वेतदूर्वाङ्कुरेण च ।
सुश्लक्ष्ण भूर्जपत्रेषु नाम सामान्यानि लिखेत् ॥ ५ ॥
अशान्तोपगतेनैव कुर्यात् हीजेन संपुटम् ।
कमलं तद्विलिख्य मष्टपत्रं सकर्णिकम् ॥ ६ ॥
नाभिपुर्यं मध्यचक्रं वर्णपत्राष्टकं लिखेत् ।
तदन्त स्तम्भपुर्यन्तं मन्त्रेशं च लिखे स्वरम् ॥ ७ ॥
नतिप्रणवगर्भन्तु ततः कमलबाह्यगम् ।
विलिख्य नेमिनवकं द्विधोर्ध्वाधोकुलं तु वै ॥ ८ ॥
संवेष्ट्य सितसूत्रेण श्रीमत्कुम्भे निवेशयेत् ।
आधारे शालिपर्णीभिः मण्डलाग्रे [illegible] ॥ ९ ॥

आवाह्य मण्डले मन्त्रं प्राग्वद्धृदयकोटरात् ।
तत श्चेतोपचारेण तन्त्रम्मन्त्रेश्वरं यजेत् ॥ १७० ॥
पूर्णेन्दुमण्डलान्तस्स्थ मुद्गिरन्तं सुधारसम् ।
शशांकशतसकाशं ध्यात्वा सपरिवारकम् ॥ १ ॥
यस्य यस्य महाशान्ति पूजान्ते समुदीरयेत् ।
ततः शशांकदिग्भागे कुण्डे पूर्णेन्दुलक्षणे ॥ २ ॥
क्षीरतण्डुलमध्वाज्यै र्गुग्गुलेन तिलेन च ।
सचन्दनेन होमं तु सप्तरात्रं समाचरेत् ॥ ३ ॥
पयोभुक्परमेशं च प्रहराष्टक मर्चयेत् ।
होमान्ते कलशस्थस्य पयसा शीतलेन तु ॥ ४ ॥
सेचनं चाम्भसाँ कुर्या त्प्रत्यहं प्रहराष्टकम् ।
स्नानान्ते ब्रह्मरन्ध्रोर्ध्वे संस्मरे न्मन्त्रनायकम् ॥ ५ ॥
स्रवन्त ममृतं त्वेवं शान्ति र्भवति शाश्वती ।
अथवादाय मृत्पात्रं वैदळं वाथ काष्ठजम् ॥ ६ ॥
तत्र पंकजव त्कुर्या द्रचनामोदनेन च ।
पिष्टनिर्मितपात्राणां सम्प्रज्वाल्य घृतेन तु ॥ ७ ॥
दीपाष्टकं ततः पूजां कुर्या त्पूजादिकै र्बलैः ।
स्विन्नानि सप्तबीजानि विकीर्यच तदूर्ध्वतः ॥ ८ ॥
ततोर्चिते तोयकुम्भे धूपपात्रन्तु विन्यसेत् ।
अच्छिन्नधूपप्रसरं त्रैकाल्यं च बलिं हरेत् ॥ ९ ॥
शान्त्यर्थंदेशपालानां भूताना मेव मेवहि ।
पृष्ठे चोदकधारां वै अच्छिन्नां पदसप्तकम् ॥ १८०॥
शान्तये बलिमन्त्राणां मूलमन्त्रेण पातयेत् ।
इति शान्ति विधानञ्च पौष्टिकंच निबोधंतु ॥ १ ॥
कुङ्कुमक्षोद मिश्रेण कुसुम्भरजसातुवै ।
पूर्ववन्मण्डलंकुर्या द्रक्तचन्दन भूषितम् ॥ २ ॥

नीवारतण्डुलेनैव ताम्रवर्णै स्तिलै [ स्तिलै ] शुभैः ।
सम्पूर्यबदरोपेतै रुपकुम्भाष्टकंहियत् ॥ ३ ॥
सोपकुम्भानिकुम्भानि रक्तसूत्रेणवेष्टयच ।
शेषंयद्विहितंचात्र तत्तद्रक्तं प्रकल्पयेत् ॥ ४ ॥
ततस्स्नातः कृतन्यासो नाम रोचनयालिखेत् ।
अलक्तकांबुयुक्तेन सान्द्रदर्भांकुरेणतु ॥ ५ ॥
पूर्ववत्पद्मगर्भस्थं ततःपत्रेष्वधोमुखम् ।
बीजन्नियोजयेत्तस्मे गदतश्चाग्रधारय ॥ ६ ॥
नेमेरेकोनविंशाख्य वर्णस्याधोगतंन्यसेत् ।
बीजंनाभितृतीयंय तदधःपंचमारगं ॥ ७ ॥
शिरसारान्तपूर्वेण युक्तंबाह्या द्दशादिना ।
तदन्तस्स्थं न्यसेद्बीजं नाभितुर्यासनस्थितम् ॥ ८ ॥
नाभिसप्तमगर्भेध विन्यसेत्कमलन्तुतत् ।
बीजंपुष्टिपदोपेतं कुरुद्वीस्पासमन्वितम् ॥ ९ ॥
लिखेत्प्रणवपूर्वंतु बाहिरष्टासुदिक्षुवै ।
संवेष्ट्य रक्तसूत्रेण मधुतोयघटेन्यसेत् ॥ १९० ॥
निधायपूर्ववत्कुर्या द्दिग्बन्धं हृदयादिकैः ।
अस्त्रेणतुविदिग्बन्धं नेत्रेणेर्ध्वमधस्तथा ॥ १ ॥
ततोविद्रुमसंकाशं मन्त्रमावाह्य संयजेत् ।
अथोमन्त्रगणंसर्वं लोकेशास्त्रान्त संयुतम् ॥ २ ॥
रक्तैरकण्टकैर्हृद्यै र्चनंकुसुमैर्हितम् ।
राजमुद्गैस्तु नैवेद्यं युक्तमत्र गुळोदनं ॥ ३ ॥
गुळरञ्जितभक्ष्याणि कुर्यान्नानाविधानिवै ।
सम्भवेसतिवैरक्तं सर्वकार्यमसम्भवे ॥ ४ ॥
रञ्जयेत्कुंकुमाद्येन केनाचिद्रक्तधातुना ।
सर्वं जपावसानन्तु कुर्याद्धोमं समाचरेत् ॥ ५ ॥

घृतैस्तिलैस्तुपूर्वोक्तैः शर्करावदरान्वितैः ।
दत्वापूर्णाहुतिंकुर्यात्सेचनं शर्करांभसा ॥ ६ ॥
पूर्ववन्मन्त्रनाथस्य साध्यगर्भीकृतस्यच ।
ततःपूर्वोक्तविधिना बलिकर्मसमाचरेत् ॥ ७ ॥
सप्तरात्रं त्रिरात्रंवा पुष्टिरुत्पद्यते महत् ।
प्रभावान्मन्त्रराजस्य विधिनाऽनेनसर्वदा ॥ ८ ॥
अथानेनहिमन्त्रेण कुर्यादाप्यायनन्तुवै ।
परस्यैवात्मनोमन्त्री यथातदवधारय ॥ ९ ॥
मण्डलंमधुनायुक्तं चतुर्वर्णकभूषितम् ।
वस्त्रस्रग्दर्पणोपेतं किंकिणीध्वजसान्वितम् ॥ २०० ॥
घृतेनमधुनादध्ना पयसासुश्रितेनच ।
न्यस्तेनउपकुम्भौतु द्वौद्वौसम्पूर्यपत्नतः ॥ १ ॥
मधूकफलकर्पूर द्राक्षामलफलैस्ततः ।
पार्श्वेष्वेवापूर्यकुम्भानां वक्त्रदेशेनिधायच ॥ २ ॥
यवांकुराणिशरावाणि सिक्तानिशिशिरांभसा ।
सुधाचन्दनलिप्तानि सितपुष्पान्वितानिच ॥ ३ ॥
चर्चितानिसिताघ्र्येण योज्यकुम्भान्तरावनेः ।
सितरक्तन्तुहेमाभं पुष्पाद्यमखिलंहियत् ॥ ४ ॥
उपचारेतुविहितं तदाहृत्याखिलंतुवै ।
कृताह्निकश्शुक्लवासा स्वहृन्मन्त्राभिधानधृक् ॥ ५ ॥
सकुंकुमेनक्षीरेण ईषदिक्षुरसेनच ।
तथाचमधुनाभूर्जे वस्त्रेवासार्णमध्यगम् ॥ ६ ॥
दत्वासंज्ञापदंकुर्याद्बाह्येपद्मश्चतुर्दलम् ।
तद्बहिर्द्विगुणैः पत्रैः कर्णिकाकेसरान्वितम् ॥ ७ ॥
द्विषट्कपत्रंतद्वत्तु तद्बहिष्षोडशाच्छदम् ।
ततस्त्रिरष्टपत्रन्तु तद्बाह्ये वृत्तमालिखेत् ॥ ८ ॥

अथोमुखन्तुसर्वेषां दळानाम्बीजपश्चकम् ।
क्रमेणपूर्वपश्चात्तु योजनीयंहितच्छृणु ॥ ९ ॥
नाभिसप्तमवर्णाय ञाभितुर्योपरिस्थितम् ।
उत्तराधरयोगेन तदेवादाय वैपुनः ॥ २१०॥
अथनाभितृतीयन्तु अथोद्वाभ्यांतु विन्यसेत् ।
अधस्स्थं सप्तमन्नाभे स्तच्चतुर्थन्तु मूर्धनि ॥ १ ॥
ततस्सप्तममादाय तृतीयं तदधोन्यसेत ।
तदधोनेमिवर्गाद्य योजयेद्द्विविंशकम् ॥ २ ॥
भूयोनेमेस्तमादाय नाभिसप्तमपृष्ठगम् ।
तस्यांप्यधस्तृतीयन्तु नाभिदेशाञ्चविन्यसेत् ॥ ३ ॥
सर्वेषांनाभिपूर्वन्तु पंचमारगसंयुतम् ।
निदध्यादासनंपश्चा च्छिरसालांछयेत् क्रमात् ॥ ४ ॥
नवमेनतुवैनेमे ररोपान्त्य गतेनतु ।
नाभीयतुर्यवर्णानां प्रागवन्मध्ये ऽत्रमन्त्रराट् ॥ ५ ॥
वौषट्पदद्वयान्तस्थ मघबीजंहि केवलम् ।
दळान्तराळभूमौतु चतुष्पत्रस्य योजयेत् ॥ ६ ॥
अरावसानसम्भिन्नं कृत्वावैनाभिसप्तमं ।
तेनयुक्तं तथादद्या दष्टपत्रस्य सन्धिषु ॥ ७ ॥
तेनैवनाभितुर्यन्तु भेदयित्वा तदन्तगम् ।
कृत्वाबीजवरं कुर्या द्विषट्पत्रान्तराळगम् ॥ ८ ॥
वषट्कारपदोपेतं बीजंपीताम्बुसन्निभम् ।
न्यसेत्षोडशपत्रस्य सन्धिदेशगतंततः ॥ ९ ॥
नाभेस्सप्तमबीजन्तु तच्चतुर्थासनास्थितम् ।
अराश्चतुर्दशेनैव तदन्तेनापि [ भि ] भूषितम् ॥२२०॥
एतत्सम्पुटमध्यस्थं क्षरन्तममृतंमहत् ।
पूर्ववद्वात्रिंशपत्रस्य प्रादक्षिण्येनविन्यसेत् ॥ १ ॥

नाभिलुर्यमधादाय स्थितंतत्स्वप्नमोपरि ।
नेमेर्नवमबीजेन अरान्ताद्येनचांकयेत् ॥२॥
बीजमेतन्नियोक्तव्यं संख्याहीनंनिरन्तरम् ।
ऊर्मिभूतंबहिष्ठस्य पयोजावरणस्यच ॥ ३ ॥
लिख्यैवं सितरक्तेन पीतसूत्रेण वेष्टयेत् ।
मध्विक्षुरस आम्राम्बु पूर्णकुम्भे नियोज्यंच ॥ ४ ॥
चन्दनेनसमालिप्तं कृत्वापुष्पस्रगन्वितम् ।
ठान्निधायोदितेस्थाने ततोमन्त्रेश्वरंयजेत् ॥ ५ ॥
हृत्पुण्डरीक मध्यस्थं परिवारसमन्वितम् ।
स्वच्छ स्फाटिकवर्णाभं हिमा दधिकशीतलम् ॥ ६ ॥
ध्यायेत्तं ब्रह्मरन्ध्रोर्ध्वे सितंपद्म मधोमुखम् ।
तत्कर्णिकोदरेलीनं स्मरेद्गगनमण्डलम् ॥ ७ ॥
प्रकाशितं निशानाथ मयूखा खिलतारकैः ।
विक्षिप्तबाह्यैराकीर्णं सुरसिन्धु विनिर्गमैः ॥ ८ ॥
अथार्घ्य पुष्पपूर्वाणां भोगाना मर्चनेविभोः ।
प्रागुक्तानां क्रमेणैव अनुसन्धान माचरेत् ॥ ९ ॥
यंयं संकल्पयेद्रोगं तन्तम्भाव्य सुधामयं ।
पतन्तमंबराद्वेगा दमृतांशुपरिप्लुतम् ॥ २३० ॥
साक्षादमृत रूपस्तु तै स्तै रमृतसम्भवैः ।
बृंहितं मुदितंमग्नं सम्प्लुतं मन्त्रराट्स्मरेत् ॥ १ ॥
ततो ऽवतार्य हृदया त्साधनेन यजेद्बहिः ।
इष्टा ऽथवह्नि गर्भस्थं ध्यात्वा सन्तर्पये ततः ॥ २ ॥
सामलैराज्य सिक्तैस्तु बिल्वैर्दूर्वा कुरैर्नवैः ।
तिलैर्गोक्षीरसंयुक्तैः लाजतण्डुल मिश्रितैः ॥ ३ ॥
सिताज्यपुष्पसंयुक्तैः दद्यात्पूर्णाहुतिंततः ।
मधुक्षीरोदकेनाथ कुर्या द्वै मन्त्रसेचनम् ॥ ४ ॥

घृतेन पयसान्नेन पायसेन फलै श्शुभैः ।
पूर्ववद्बलिदानं तु कुर्या द्दाप्यायनं भवेत् ॥ ५ ॥

अथ रक्षाविधानं तु वक्ष्ये सम्य ग्यथा स्थितम् ।
येन विज्ञातमात्रेण नीरुज स्सर्वदा भवेत ॥ ६ ॥

सामान्यं सर्वदोषाणां ज्ञातानां च निवारणे ।
अज्ञातानां विशेषेण तत्सम्य गवधारय ॥ ७ ॥

ताराग्रहोपतापेन धातु वैषम्य मेति वै ।
तद्वैषम्या त्प्रकुप्यन्ति व्याधयस्तु ज्वरादयः ॥ ८ ॥

तत्कोपावसरेणैव ब्रह्मरक्षो मुखा ग्रहाः ।
शाकिन्यो भूतवेताळा स्संक्रामन्ति हि देहिनः ॥ ९ ॥

निमित्तं विद्धि सर्वेषां कर्म यद्वै पुरा कृतम् ।
सामर्थ्येन तु मन्त्रेण ज्ञानेन तपसा च वै ॥२५०॥

जपाध्ययनहोमेन दानेन विविधेन च ।
मन्त्रौषध्युपयोगेन सहसा नाश मेति तत् ॥ १ ॥

प्राधान्येन तु सर्वेषा मन्त्रनत्रानुतिष्ठति ।
यस्य स्मरणमात्रेण ना विशन्ति गृहादयः ॥ २ ॥

कृत्वाधारं यथोक्तं तु यजनार्थं नृकेसरेः ।
बीजै स्सिद्धार्थकोपेतै रुपकुम्भानि पूर्यच ॥ ३ ॥

तत्केष्वप्युपकुम्भानां सफलानि नियोज्य च ।
तिलसर्षपपूर्णानि वस्त्राणि विततानि च ॥ ४ ॥

सुसमं तद्वहि र्दद्या द्दिक्षु लोहशराष्टकम् ।
कण्ठदेशेषु बध्नीया च्छराणां दृढतन्तुना ॥ ५ ॥

बर्हिपक्षसमायुक्तां सर्पकंचुकभूषिताम् ।

पंचरागेण सूत्रेण उदगाशा दितः क्रमात् ।
प्रादक्षिण्येन तु त्रेधा वेष्टये त्तच्छराष्टकम् ॥ ७ ॥
अष्टानां पूर्णकुम्भाना मन्तरान्तरयोगतः ।
दद्या दुच्चासनस्थन्तु दीपाष्टक मनुक्रमात् ॥ ८ ॥
तैळेन राजिकाख्येन ताम्रपात्रस्थिता स्तु वै ।
दीपानां वर्तयो देया महाराजतरंजिताः ॥ ९ ॥
अथ बद्धशिखो मौनी प्राग्वद्दिग्बन्ध माचरेत् ।
अभिसन्धाय मनसा सर्वदोषपलायनम् ॥ २५० ॥
संयजे न्मन्मनाथन्तु काम्यै र्बहुविधै श्शुभैः ।
पुष्पै र्धूपै स्तु नैवेद्यै र्भक्ष्यै स्सफलमूलकैः ॥ १ ॥
हुत्वाथ सर्वबीजानि सिद्धार्थकयुतानि च ।
राजिका घृतयुक्तानि तिलानि सफलानि च ॥ २ ॥
ध्यात्वा पूर्णाहुतिं दद्या न्मध्याह्नसमये ततः ।
रक्ष्यं सुनिर्मलं कृत्वा पूर्व मभ्यंजनादिकैः ॥ ३ ॥
हेमरक्तौषधिस्नानैः मोक्षयित्वा प्रवेश्य च ।
ताडयित्वा स्सुपुष्पेण आपाद्य स्सुनिरीक्ष्य च ॥ ४ ॥
नतजानुशिरः कृत्वा देवाय विनिवेदयेत् ।
उत्तराभिमुखं कृत्वा आसने परिधान्विते ॥ ५ ॥
भस्मोपलक्षिते चैव तथार्घ्यादिसमन्विते ।
षडंगेनाथ मन्त्रेण तस्य न्यासं समाचरेत् ॥ ६ ॥
मनसा करशाखासु स्वस्थाने ष्वथ विग्रहे ।
स चक्र मथ तस्याग्रे षट्कोण म्मण्डलं लिखेत् ॥ ७ ॥
घृतं ज्वालागणेनैव तत स्तत्र निवेशयेत् ।
प्राग्युक्तरचनाढ्यन्तु सुपर्णं गन्धधारिणा ॥ ८ ॥

समकं कलशानां तु मध्ये योज्यं तदग्निषु ।
अग्निभ्या मन्तरालस्थं दीपषट्कं यथा पुरा ॥ ९ ॥

कृत्वा मध्यमकुम्भे तु सांगं मन्त्रेश्वरं यजेत् ।
नमो नृसिंहभूतेभ्यः प्रणवाद्येन पूजयेत् ॥ २६० ॥

कोणेषु भगवद्भक्तनिचयं दोषनाशनम् ।
पूजयित्वा यथा न्यायं पुष्पधूपादिकेन वै ॥ १ ॥

दिग्बन्ध मथ वै कुर्या त्साङ्गै स्सिद्धार्थकैः क्रमात् ।
ताडये दातुरं पश्चा दापादा न्मस्तकावधि ॥ २ ॥

स्वपाणिव्यजनेनाथ समाकृष्य विनिक्षिपेत् ।
दोषजालं च तद्दोषान् गगने वा धरातले ॥ ३ ॥

ततोऽग्निपात्र मादाय निर्धूममतिदीप्तिमत् ।
तस्मिन्निरिन्धने कुर्यात् होमं सिद्धार्थकैः क्रमात् ॥ ४ ॥

मूलम [ तिलैर्म ] न्त्रेण चाङ्गेण शताष्टाधिकसंख्यया ।
अमुकं रक्ष रक्षेति स्वाहाशक्तिसमन्वितम् ॥ ५ ॥

मन्त्रान्ते तु पदं कुर्यात् श्रामये न्मूर्ध्नि चाहुतिम् ।
महिषाक्षी मथादाय सिद्धार्थकसमन्विताम् ॥ ६ ॥

प्रजप्य धूपये त्तं वै कृत्वाच्छिन्नं तु वाससा ।
निधाय सजलं पात्र मग्निपात्रोपगन्ततः ॥ ७ ॥
नैवेद्यशेष मन्यस्मिन् सर्वं मुद्धृत्य सोदकम् ।
पशुप्रतिनिधिं चैव रंजितं कुंकुमादिना ॥ ८ ॥

ध्यात्वा श्रितानां दोषाणा म्मनसा परिकल्पितम् ।
यदीया चास्य वै बाधा इन्द्रियाणां च धातुषु ॥ ९ ॥

आदाय च बलिं शम्बत् सिंहवक्त्रै [ र्वे ] तु मुंचतु ।
[illegible] ॥ २७० ॥

असंख्य माचरे द्धोमं बलियुक्तं प्रदक्षिणैः ।
बलिपाणि मथक्षाळ्य अञ्जजमेन वारिणा ॥ १ ॥

भूतिमादायवैकुण्डा दधगोमय जन्तुवा ।
प्रजप्य बहुशोञ्जेण ललाटाद्ंघ्रिगोचरम् ॥ २ ॥

कार्याणिचोर्ध्वपुण्ड्राणि पृष्ठपार्श्व द्वयेषुच ।
स्वस्त्यस्तुते [ स्वस्त्वाकृते ] युक्तेनाथ मन्त्रेणार्घ्योदकेनतु ॥३॥

मन्त्रकुम्भात्समेतेन विप्रुड्भिर्ह्लादयेदसु ।
ध्यात्वापूर्णेन्दुगम्मन्त्रं पूर्णचन्द्रायुतोपमम् ॥ ४ ॥

ब्रह्मरन्ध्रेणसाध्यस्य स्रवन्तममृतम्महत ।
शरीरविटपन्तेन सेचयेच्चनखावधि ॥ ५ ॥

एवंकृत्वार्चयेद्भूयो मन्त्रम्मण्डलकुम्भगम् ।
कुम्भंतंशयनागारे ऊर्ध्वदेशेनिधायवै ॥ ६ ॥

वस्त्रपीठोपरिस्थन्तु छन्नंकृत्वातुवाससा ।
तत्रापिदिग्विदिक्स्थञ्च दृश्यात्पूर्णघटाष्टकम् ॥ ७ ॥

अच्छिन्नप्रसरन्धूपं दीपपात्रंघृतादिना ।
फलपुष्पौषधीदीप जालसिद्धार्थकन्दयौ ॥ ८ ॥

पात्रस्थंयन्तदप्येतु कृत्वाचाथबलिंहरेत ।
निशामुखेतुसंप्राप्ते सर्वदोषप्रशान्तये ॥ ९ ॥

एकस्मिन्वैसमादाय पात्रयत्कारिपसंविभोः ।
आपुष्पधूपदीपाच्च उपसंगृह्ययत्नतः ॥ १८० ॥

तद्भूतदत्तमन्यस्मिन् षण्णांवासरपृथक्पृथक् ।
स्वदीपालंकृतंकृत्वा स्वकटोपरिविन्यसेत ॥ १ ॥

रक्षरक्षपदोपेतं मन्त्र मञ्ज युतंस्मरेत् ।
रक्ष्यस्य शिरसिभ्राम्य यथादत्तं क्रमेणतु ॥ २ ॥

सत्वशुद्धां स्तथा भूयो मद्भक्तान् बलिवाहकान् ।
अस्त्राभिमन्त्रितं दद्या त्तेषां सिद्धार्थकं करे ॥ ३ ॥
प्रजप्य भस्मना कुर्या ल्ललाटे तिलकन्तु वै ।
प्रवाहये द्बलिं मन्त्री ह्यगाधे म्भसि वै पुरा ॥ ४ ॥
चत्वरे वृक्षमूलेथ ग्रामा द्वा नगरा द्बहिः ।
देवभूतबलिक्षेपो विहित श्चात्रकर्मणि ॥ ५ ॥
धूमायन्तंच सिद्धार्थै र्वह्निपात्रं पुरोदितम् ।
तेनैव बलिपात्रेण सोदकेन समन्वितम् ॥ ६ ॥
त्यजेत् कूपसमीपे तु वाप्यां वा निकटे तरोः ।
बलं क्षिप्त्वा समाचम्य धौतांघ्रिकरपल्लवः ॥ ७ ॥
रक्ष्यावनौ सुलिप्तायां परित श्शोधितस्य च ।
तन्मूर्ध्नि दीपपात्रैश्च सिद्धार्थक्षेप माचरेत ॥ ८ ॥
प्रजप्य बहुशो स्त्रेण मूलसम्पुटितेन च ।
बध्नीया त्सप्तरात्रन्तु प्रत्यहं तस्य चाम्बरे ॥ ९ ॥
कृतेनानेन विधिना पीडितानां सदैवहि ।
रक्षणं रसधातूनां शश्वद्देवहिजायते ॥ २९० ॥
ततः प्रलिप्तेविमले कुशाजिन समावृते ।
कृतन्यास स्स्वयन्तिष्ठे द्रक्ष्यागारे सहायवान् ॥ १ ॥
पयोभुग्वानिराहारो ध्यानजप्य परायणः ।
आदिमध्यावसानस्थं रात्र्यंशेषु समाचरेत् ॥ २ ॥
पूजनंवह्नसम्य ग्बलिदान समन्वितम् ।
सक्तुना सोदकेनैव मधुनाथ घृतेनच ॥ ३ ॥
पूर्वभागेतु यामिन्या मतीतो विहितोबलिः ।
यवगोधूमशाल्युत्थ चूर्णेनसगुडाम्भसा ॥ ४ ॥
त्रिप्रकाराणि संवर्त्य मोदकानितुपाणिना ।
वृत्तदीपशिखाकारै स्तुल्यान्याम्रफलस्यच ॥ ५ ॥
क्षीरयुक्तैरपक्वैस्तै र्मध्यरात्र्यां बलिंहरेत ।

तण्डुलै रजनीचूर्णै र्दध्नादूर्वांकुरैः फलैः ।
व्यतीतायान्तु शर्वर्यां बलिरक्षागृहाद्बहिः ॥ ७ ॥
मार्गैकदेशे निक्षिप्य चत्वरेवापि शोधिते ।
अथाभिमन्त्र्यबीजानि सप्तधान्यानिमल्लके ॥ ८ ॥
दत्वाद्विजेन्द्र कन्यायां तत्सकाशा त्समाहरेत ।
तिस्रःप्रसृतयःपात्र एकस्मि न्सप्तचापरे ॥ ९ ॥
एकादश ततोन्यस्मि न्घटेपात्रनयन्ततः ।
अस्त्रसंम्पुटितेनैव सिंहबीजेन मन्त्रवित ॥ २०० ॥
शतमष्टाधिकंचैव द्विगुणं त्रिगुणंक्रमात् ।
तेनतोयघटानान्तु उद्धृत्यो द्धृत्यनिक्षिपेत ॥ १ ॥
एकंस्थले जलेचान्ये प्रातर्मध्य न्दिनक्षये ।
आसमाप्ते रिदंकुर्या त्सामान्यं भूततर्पणं ॥ २ ॥
ततोपरस्मिन्नहनि इष्ट्वामन्त्रन्तु मण्डले ।
हुत्वायथाविधानेन दत्वापूर्णाहुतिन्तुवै ॥ ३ ॥
सितेनशालिचूर्णेन अष्टाश्रं मण्डलं लिखेत् ।
तन्मध्येशंखमध्यस्थं कमलं लिख्यषड्दळम् ॥ ४ ॥
दद्याद्घटाष्टकं बाह्ये प्राग्वद्दीप समन्वितम् ।
अवतार्यंचतन्मध्ये रक्षाकुम्भं शिरास्थितम् ॥ ५ ॥
अपनीयपुरातस्मा दर्घ्यमाल्यानुलेपनम् ।
शीतळोदकधाराश्च पूरणार्थंपरांक्षिपेत् ॥ ६ ॥
यथायथाक्षयंयाति तत्रस्थमुदकंतुवै ।
तथातथाभवेद्वृद्धी रक्ष्यस्या खिळधातुषु ॥ ७ ॥
स्रग्वस्त्राख्यानुलेपाद्यै र्नैवकृत्वार्चितन्तुतम् ।
तत स्सम्पूज्य तन्मध्ये मन्त्रनाथं यथा पुरा ॥ ८ ॥
रक्तधातो र्भवे द्येन नृणा मुपचयो महान् ।

अर्घ्यं पुष्पं रजो धूपं दीपं यन्मन्त्रयोजितम् ।
तत्सर्व मुपसंहृत्य नित्य मम्भसि निक्षिपेत् ॥ २१० ॥
शेषस्य विनियोगन्तु प्रागुक्तं सर्व माचरेत् ।
तृतीयेह्नि ततः कुर्या च्चतुरश्रं तु मण्डलम् ॥ १ ॥
षट्कोणंचैव तन्मध्ये पुर मुल्लिख्य साम्बुजम् ।
तत्र कुम्भसमूहन्तु तस्मा द्दीपान्तरीकृतम् ॥ २ ॥
इष्ट्वातु मन्त्रदत्तेन तर्पये द्ब्राह्मणां स्तु वै ।
वृत्तमण्डलमध्येतु चतुर्थेहनि संलिखेत् ॥ ३ ॥
अष्टारं दीप्तिमच्चक्रं वह्निवेश्म तदन्तरे ।
तत्रेष्ट्वा मन्त्रमूर्तिन्तु कृत्वा रक्षां यथा पुरा ॥ ४ ॥
द्विजेन्द्रजां कुमारीं च तथा ब्राह्मणदारिकाः ।
पूजयित्वा यथा न्यायं ताभ्यां यच्छे न्निवेदितम् ॥ ५ ॥
अथाष्टकोणं कुर्वीत मण्डलं पंचमे ऽहनि ।
शंखं तदन्तरे कुर्या च्छंखस्योदरगं लिखेत् ॥ ६ ॥
सनाभिवेदिपंचारं जातावासं च हेतिराट् ।
सकुम्भानां च दीपानां प्राक्कृत्वा विनियोजनम् ॥ ७ ॥
विविधैः पूजये द्देवं नैवेद्यैः कुसुमादिकैः ।
देवोपभुक्त मन्नन्तु क्षिप्त्वा प्रागुक्त माचरेत् ॥ ८ ॥
अथ षष्ठ दिने कुर्या त्त्रिकोणभुवनान्तरे ।
सप्तारन्तु महाचक्रं सप्तलोकमयं हि यत् ॥ ९ ॥
तदन्तरे च तद्दिक्षु गदाद्वन्द्वद्वयं लिखेत् ।
तन्मध्ये तद्घटान्तस्स्थं यजे न्मन्त्रं यथाविधि ॥ २२० ॥
इष्ट्वा नैवेद्य मादाय उच्चस्थाने निधाय तत् ।
उपभोगं याति चैव काकादेः खेचरेषु च ॥ १ ॥
चतुरश्रं चतुर्द्वारं मण्डलं सप्तमेहनि ।
कुर्या त्कोणचतुष्केतु लिखे च्छंखचतुष्टयम् ॥ २ ॥

तत्र मध्ये लिखे त्पद्म मसंख्यदळभूषितम् ।
तत्कर्णिकाश्रितं चक्रं द्वादशारं विलिख्य च ॥ ३ ॥
अष्टदिक्ष्वष्टकं दद्या त्कलशानां सदीपकम् ।
तत्र षट्दिवसोर्ध्वन्तु विनियोगं समाचरेत् ॥ ४ ॥
नैवेद्यस्य च मन्त्रज्ञो दक्षिणाभि स्समन्वितम् ।
एवं मांसादिधातूनां क्रमा दुपचयो भवेत् ॥ ५ ॥
महिषो जोगुडं चैव हरिण श्शशक स्तथा ।
मयूर श्चक्रवाकस्तु सप्ताहं सप्तकन्तु वै ॥ ६ ॥
देवं ध्यात्वाश्रितानांतु सत्वानां पिशिताशिनाम् ।
रसाद्यर्थीष्टिस्सम्पाद्यं नसजीवंहि जंगमम् ॥ ७ ॥
स्वार्थतो वा परार्थेन श्रेयसेभिनिवेशिना ।
प्राणिहिंसा न कार्या वै विशेषा ज्जीवितैषिणाम् ॥ ८ ॥
आयुषः क्षय मायाति नूनं प्राणिवधा न्नृणाम् ।
भूताभयप्रदानेन आयुषो वृद्धि माप्नुयात् ॥ ९ ॥
आयु रारोग्य मैश्वर्य मपमृत्युजय म्महत् ।
बल मोजो धृति धैर्यं स्या न्मन्त्रा त्परायुषः ॥ २२० ॥
मन्त्रपूजा जपो होमो दानं हेमगवादिनाम् ।
ऐहिकामुष्मिकीं वृद्धि सत्वस्थानां करोति च ॥ १ ॥
मण्डलस्थं ततः क्षिप्त्वा शर्वाते सप्तमे दिने ।
रजांसि बलयो वान्य त्माग्व दादाय सन्त्यजेत् ॥ २ ॥
इति रक्षाविधानन्तु सरुजाना मुदाहृतम् ।
निरुजानां विशेषेण रक्षणं भोगसेविनाम् ॥ ३ ॥
क्रियारतानां भक्तानां आस्तिकानां हितैषिणाम् ।
कार्यं क्रियापरेणैव मन्त्रज्ञेन सदैवाहि ॥ ४ ॥
यत्रानेन विधानेन शरीरमपि रक्ष्यते ।
तत्र भूताः प्रयच्छन्ति कल्याणं सार्वलौकिकम् ॥ ५ ॥

अथ सन्धारणीं रक्षां वक्ष्ये विग्रहभूषणम् ।
या सम्पन्ने क्रियामात्रे धारणादेव रक्षति ॥ ६ ॥
प्रणवाद्यन्तसंरुद्धं प्राग्वत्संज्ञापदं लिखेत् ।
रक्षवीप्सापदोपेतं पत्रसन्धिषु षट्स्वथ ॥ ७ ॥
द्वादशारं बहिश्चक्रं नाभिनेमियुतं लिखेत ।
नाभे रष्टमबीजं य त्तदरे ष्वन्तरान्यसेत् ॥ ८ ॥
सप्तमा द्दशमं याव द्वर्जयित्वाक्षराष्टकम् ।
क्रमेण भेदये च्छेषै स्तदराणैं स्सबिन्दुकैः ॥ ९ ॥
जहि वीप्सापदं दोषा नमुकस्येति विन्यसेत ।
सर्वेषा मन्तराळेषु अस्त्रमन्त्रन्तु पूर्ववत् ॥ ३४० ॥
अमुकं पाहि पाहीति द्वादशाक्षरमध्यगम् ।
चक्रनाभौतु विन्यस्य नेमिदेशे तथैवहि ॥ १ ॥
क्रमा दथ बहि र्लेख्या मन्त्रचक्रस्य यत्नतः ।
वृत्तत्रयश्रार्धचन्द्राणि चतुरश्रपुराणि च ॥ २ ॥
बिन्दुस्वस्तिककल्हार वज्रसंलांछितानि च ।
नाभिपूर्वद्वितीयेन चतुर्थेन तदादिना ॥ ३ ॥
क्रमा द्वर्णचतुष्केन तानि युक्तानि कारयेत् ।
सषढंगेन बीजेन नामरक्षपदानुगम् ॥ ४ ॥
सम्पुटीकृत्य वृत्ताख्यं मण्डलं परिपूरयेत ।
द्वादशार्णेन बाह्यस्थं तृतीयं पूर्य पूर्ववत ॥ ५ ॥
द्वितीयं वा चतुर्थन्तु बहि र्दिक्ष्वष्टके क्रमात् ।
रक्षवीप्सापदोपेतं नामवर्जं नियोजयेत् ॥ ६ ॥
सह गोरोचना योज्या कर्पूरं कुंकुमन्तु वै ।
क्षीरेणकापिलेनाथ तद्गोमयरसेनच ॥ ७ ॥
निशांबुनासमालोड्य निम्नगा सलिलेनवा ।
विलिख्यभूर्जपत्रेवा बर्हिपक्षेण वासने [रे]॥ ८ ॥

शुभेनुकूलेनक्षत्रे सुलग्नेभ्युदितेगृहे ।
पूज्यसंवेष्ट्यसूत्रेण ततस्त्वद्धातुनानुवै ॥ ९ ॥
सन्धार्यमूर्ध्निकण्ठेवा सततं दक्षिणे भुजे ।
दैवदोषवियुक्तस्तु वर्द्धतेशोकवर्जितः ॥ ३५० ॥
आधिभूतै र्भयैर्मुक्तो यावज्जीवं हि तिष्ठति ।
परार्थतोवास्वार्थेन कृतकृत्योयदाभवेत ॥ १ ॥
दोषवान् शान्तिदेनैव कर्मणानेनसाधुना ।
मन्त्रीतदामन्त्रवरं प्रयत्नेन क्षमापयेत् ॥ २ ॥
सिद्धयर्थमन्यसिद्धानां यागहोम जपादिना ।
अथमन्त्रवराद्धर्मं साधनंयोभिवांछति ॥ ३ ॥
तत्मात्रयेविधानंच संक्षेपादवधारय ।
पितॄणां लुप्तपिण्डानां पिण्डनिर्वापणायच ॥ ४ ॥
प्रीतयेपि जगद्धातुः परित्राणार्थमात्मनः ।
कृतोपवासोमावास्या म्मण्डलान्तर्गतं विभुम् ॥५॥
आवाह्यपूर्वविधिना योजयेद्भक्तिपूर्वकम् ।
पाद्यार्घ्यं पुष्पधूपैस्तु दानैर्हेमगवादिकैः ॥ ६ ॥
तिलयुक्तैस्तु नैवेद्यै स्सकुशैस्तु तिलान्वितैः ।
विमलैरम्बुपात्रैश्च स्वयमञ्जलिपूरकैः ॥ ७ ॥
सोचिरान्मन्त्र मूर्तेर्वै प्रासादाच्छाश्वतम्पदम् ।
प्राप्नोतिनरकस्थांश्च पितॄनपिनयेद्दिवम् ॥ ८ ॥
पत्रपुष्पफलान्नाद्य सस्यदद्धबोदनादिना ।
रसैरत्नैश्चसद्गन्धै र्वस्त्रोत्कृष्टैस्तु धातुभिः ॥ ९ ॥
प्रवालमुक्तामाणिक्यै र्भक्त्याचाविभवेसति ।
बिम्बस्थम्मण्डलस्थंवा सर्वैर्यो मन्त्रिराड्यजते॥ ३६० ॥
षडशीति मुखोत्थायां पूर्णायां सोपवासकः ।
यज्ञधर्म फलाकांक्षी सनूनन्तदवाप्नुयात् ॥ १ ॥

योहिवांछतिसद्धर्मं तीर्थाभि गमनम्महत् ।
सयथावत्क्रमात्पूर्वं म्मण्डलेमन्त्रराड्यजेत् ॥ २ ॥
ततस्सम्भृतसम्भार स्स्नानपूर्वं समर्चयेद् ।
सिद्धप्रतिष्टितंबिम्बं सैद्धंवाथस्वयंकृतम् ॥ ३ ॥
पञ्चगव्यदधिक्षीर घृतमध्विक्षुवारिभिः ।
सर्वौषधीगन्धरत्न फलपुष्पान्वितैर्घटैः ॥ ४ ॥
सांगेनामःऽयमन्त्रेण शताष्टफलपूरितैः ।
अन्तरीकृतशुद्धांभः कुम्भैरर्घ्यसमन्वितैः ॥ ५ ॥
श्रद्धापूतेनमनसा एवंनिष्पाद्यतेयदि ।
प्रसादं मन्त्रनाथस्य प्रागुक्तमचिराल्लभेत् ॥ ६ ॥
संक्रात्यां सोपवासस्तु मण्डलेमन्त्रनायकम् ।
समावाह्ययजेद्यस्तु फलपुष्पैर्यथर्तुजैः ॥ ७ ॥
सप्ताहंफलमूलाशी त्रिकालंस्नानतत्परः ।
बहुशोष्टांगपातैस्तु प्रदक्षिणसमन्वितैः ॥ ८ ॥
सनूनंसमवाप्नोति ऋश्वद्यस्तद्भुतोद्भवम् ।
अथाभिमतदानाद्वै योधर्ममभिवांच्छति ॥ ९ ॥
विष्टपस्थदिनंप्राप्य सोपवासस्तुसंयतः ।
अभिसन्धायमनसा धर्मदानादभीप्सितम् ॥ ३७० ॥
निर्वर्त्यमण्डलंरम्य मम्रयगारसमन्वितम् ।
गोसम्भवैस्तु नैवेद्यै र्भक्ष्यैस्सफलमूलकैः ॥ १ ॥
स्रग्वरैर्धूपदीपैस्तु तिलैर्होमांबुभाजनैः ।
सम्यगिष्ट्वाथसन्तर्प्य ज्वलनान्तर्गतन्ततः ॥ २ ॥
समिद्भिराज्येनतिलै स्सघृतैस्तण्डुलान्वितैः ।
ततोभिवर्धतेधर्मो मूर्तादानाच्छताधिकम् ॥ ३ ॥
दक्षिणेवायनेवाथ शुभंनिर्वर्त्यमण्डलम् ।
मन्त्रनाथन्तचावाह्य विधिनासंयजेत्ततः ॥ ४ ॥

माल्यैर्विलेपनैर्धूपै महादीपैर्घृतादिकैः ।
गुडखण्डचितैर्भक्ष्यैः पयसाकृसरेणतु ॥ ५ ॥
नाळिकेरोदकेनैव सक्तुनाचघृतेनच ।
सन्तर्प्यहुतभुङ्मध्ये मन्त्रमाज्यादिकैस्ततः ॥ ६ ॥
विधिनानेनवैधर्म मिष्टापूर्तमवाप्यते ।
चन्द्रसूर्योपरागेचा प्यहोरात्रोषितश्शुचिः ॥ ७ ॥
सर्वोपकरणोपेत मादौनिवर्त्यमण्डलम् ।
न्यस्य मन्त्रवरंतत्र विभवेनयजेत्ततः ॥ ८ ॥
सन्तर्प्यवह्निमध्येथ समिद्भिर्वाघृतादिकैः ।
जपेन्मन्त्रवरंपश्चा न्मनसाध्यानसंयुतम् ॥ ९ ॥
अक्षसूत्रकरोमन्त्री यावच्चन्द्रार्कदर्शनम् ।
पूजाहोमजपानाञ्च फलानन्त्यमवाप्नुयात् ॥ ३८० ॥
भक्तानामर्थहीनानां मन्त्रैकनियतात्मनां ।
साधनांग विहीनानां फलेप्सूनामिदंस्मृतम् ॥ १ ॥
स्नानाद्ध्यानात्तथायोगा ज्जपाद्धोमाच्चसद्भुतात् ।
सदन्नपानाद्दानाच्च सर्वलोपाच्चसामयात् ॥ २ ॥
धर्मसाधनमित्युक्तं सवित्तानांविशेषतः ।
यथार्थं साधनम्मन्त्रा दभिवाञ्छति योचिरात् ॥ ३ ॥
ब्रह्मचारीगृहस्थोवा वानप्रस्थोथवायतिः ।
कृत्वायागं यथासम्य क्सप्ताहंतत्र मन्त्रराट् ॥ ४ ॥
यजेत्सविभवेनैव त्रिस्नायीनक्तभोजनः ।
त्रैकालयंहुतभुङ्मध्ये सन्तर्प्याज्येन कालजैः ॥ ५ ॥
बिल्वैरामलकैःपद्मै स्तदभावे कुशांकुरैः ।
यद्वाञ्छेत्तस्यकालन्तु मन्त्रम्मन्त्रेश्वरात्फलम् ॥ ६ ॥
वैशाख्येहि सितेतेन सौम्यश्रवणसंयुते ।
सोपवासेनकर्तव्यं मन्त्रेशस्यार्चनम्महत् ॥ ७ ॥
[illegible] ।

दक्षिणोत्तरपादाभ्यां मन्त्रनाथस्यपूजयेत ॥ ८ ॥
गङ्गांश्च यमुनांचैव नलिनामर्णवेनतु ।
तदंघ्रिजलमिश्रेन घटमापूर्यचाम्भसा ॥ ९ ॥
अलंकृत्ययथाशोभं पुष्पवस्त्रानुलेपनैः ।
विनिवेश्यचतद्भक्ते तिलहोमफलान्वितः ॥३९८॥
मध्वाज्यशर्कराद्येन पूर्णदृध्योदनानिच ।
महत्पूर्णघटश्चैव पात्रंवावैदलन्ततः ॥ १ ॥
निवेद्यमन्त्रमूर्तौमा क्षद्रुपानहसंयुतम् ।
तत्रातपत्रसहितं पात्रमाहूयवैततः ॥ २ ॥
स्रक्चन्दनाद्यैं धूपैस्तु तमलंकृत्यवाससा ।
मन्त्रेणार्घ्योदकं पाणौ दत्वा तदनु तद्घटम् ॥ ३ ॥
प्रतिपाद्य जगद्योनेः प्रीत्यर्थ मपि तेन वै ।
प्रयत्नेन परां प्रीतिं वाञ्च्यो मन्त्री सहामले ॥ ४ ॥
एवमेव प्रपन्नाये नारायण मनामयम् ।
वर्णा ब्राह्मणपूर्वेतु ते स्वदुष्कृतशान्तये ॥ ५ ॥
स्नात्वाभ्यर्च्य पितॄन् देवान् सन्नदीभ्यां तु संगमे ।
आनाभि मवतीर्याथ विमलांजलिपूरकैः ॥ ६ ॥
निर्वर्त्य भगवद्यागं दद्या द्विप्रवराय च ।
प्राप्त्यर्थं विबुधानां च सर्वलोकनिवासिनाम् ॥ ७ ॥
पितॄणां स्वकुलोत्थानां सततं श्राद्धकांक्षिणाम् ।
श्वेतद्वीपाप्तये चैव वृद्ध्यर्थं च स्वसन्ततेः ॥ ८ ॥
आस्वां सितासिता चैव द्वादशी त्वमलेक्षण ।
भगवद्भावपूतानां या काचि दपरा तिथिः ॥ ९ ॥
साच वै श्रवणोपेता युताचाभिजितातु वै ।
सा तेषा मंगभावंच याति सर्पफलाप्तये ॥४००॥
तस्मा त्कृतोपवासस्तु तस्या मभ्यर्च्य मन्त्रराट् ।
विभवेनाथवा शक्त्या मन्त्रं [illegible] ॥ १ ॥

यानि यानीह दानानि गोभूहेमादिकानि च ।
दत्तानि चानुरूपाणि जनानां कृतकर्मणाम् ॥ २ ॥
फलदानि च दातॄणां भवदार्ढ्यकराणि च ।
सम्यक्दत्तानि तान्येव भक्तानां भावितात्मनाम् ॥ ३
भगवत्पादलिप्सूनां भवन्ति भवशान्तये ।
अपि वाद मिदं ताव द्यत्सर्वत्राच्युतो हरिः ॥४॥
विष्णु र्नारायणो हंस स्सर्वशक्तिमयः प्रभुः ।
द्रव्यात्मना विभक्तश्च ज्ञातव्यो ज्ञानकर्मणि ॥ ५ ॥
त्रिविधेन तु भेदेन बुद्बुदेभ्यो यथाम्बुधिः ।
एवं दानं स्व मात्मानं पात्रं नारायणात्मकम् ॥ ६ ॥
बुध्वा सामान्यबुध्या प्रा क्पुन स्तत्त्रिविधं पृथक् ।
सविशेषं परिज्ञेयं दानकाले ह्युपस्थिते ॥ ७ ॥
उपायलक्षणं द्रव्य मभ्यूह्यादौ स्वचेतसा ।
अनन्तशक्ते स्सामर्थ्य मिदं किंचि दनश्वरम् ॥ ८ ॥
दानाभिमानदेहस्तु प्रत्यगात्मा त्वहं प्रभुः ।
पात्रभावत्व मापन्नो मदनुग्रहकाम्यया ॥ ९ ॥
देवः पंचतनु स्साक्षा त्पंच भूतात्मना त्विदम् ।
ज्ञात्वैवं द्वादशार्णेन स्वेन वा न्यस्तविग्रहः ॥४१०॥
प्रत्ययं मन्त्र मालम्ब्य द्रव्यहोमादिकं ततः ।
स्वरूप मजह द्ध्याये न्महद्रश्मिकदम्बवत् ॥ १ ॥
अमन्त्रेण यजे त्पश्चा द्दर्व्यपुष्पानुलेपनैः ।
वियद्द्विषट्कमन्त्रेण स्वकेनांगोज्झितेन वै ॥ २ ॥
सकळी करणं कुर्या त्पात्रभूते परात्मनः ।
त मर्चयित्वा विधिव द्वस्त्रस्रगनुलेपनैः ॥ ३ ॥
भगवत्प्रीतिपूर्वन्तु दानं दद्याच्च सोदकम् ।
तेनापि प्रीणनं कार्यं भगवद्भावितात्मना ॥ ४ ॥

दानं ज्ञानात्मतां येन प्रयात्यच्युतवेदिनाम् ।
नारायणपरं ब्रह्म प्रतिशब्दस्त्व मागतः ॥ ५ ॥
संसारानलतप्तानां भक्तानां मोहशान्तये ।
अत स्तस्य स्वमन्त्रेण मूर्तिदानं समाचरेत् ॥ ६ ॥
द्वादशाक्षरपूर्वेण स्वथवान्येन केनचित ।
अनन्तं त्वमलं त्वेवं क्रोडीकृत्य तदात्मना ॥ ७ ॥
समर्चनीयं विधिव न्मन्त्राकृति यथा सदा ।
एवं दानप्रदानेन यजे न्मन्त्रात्मना परम् ॥ ८ ॥
महन्मन्त्रात्मना चैव पुन स्सद्व्रतसिद्धये ।
ब्रह्म त्वमेति वै येन व्रतिना प्रभव द्व्रतम् ॥ ९ ॥
अनेन भेदभिन्नं च सदानं सत्पदार्थिनाम् ।
तपो यज्ञं हि विधिवत् ब्रह्म भावनयार्चयेत् ॥ ४२० ॥
यथास्यां मोक्षफलद मचिरा द्विष्णुयाचना ।
नानाद्रव्यांगदेहं य यज्ञं चानेकलक्षणम् ॥ १ ॥
मूर्ततां यज्ञमन्त्रेण नीत्वैवं प्राक्समर्चयेत ।
जुहुया दासमाप्त्यन्तं पूर्णान्ते मोह [क्ष?] मृच्छति ॥ २॥
दानानां च व्रतानां च तपसां यज्ञकर्मणाम् ।
निवेदितव्यं यद्द्रव्यं दत्तं वा यत्र यत्पुरा ॥ ३ ॥
कर्तव्य मनुयागार्थं प्राक्तदेव हि केवलम् ।
तद्भावित मतोऽश्रीया त्पावनं प्रापणान्वितम् ॥ ४ ॥
भवे त्त्रिरात्रं फलदं भक्तानां शुभकारिणाम् ।
किं पुनस्तु समर्थानां चोदनाश्रयिणां तु वै ॥ ५ ॥
दानधर्मरतानां च व्रतिनां यज्ञयाजिनाम् ।
परत्र भयभीरूणा मल्पार्थानां शुभार्थिनाम् ॥ ६ ॥
शमीपलाशश्रीवृक्षै स्स मिद्भि श्चामलद्रुमैः ।
अम्भसा चाम्बुमध्यैव मन्त्रतर्पण माचरेत् ॥ ७ ॥

सम्प्राहि समर्तातेतु मन्त्र मुत्थाप्य मण्डलात् ।
ध्यानयुक्तं जपं कुर्या ल्लक्षसंख्यं समाहितः ॥ ८ ॥
ब्रह्मचर्यस्थितो मौनी दुष्टा हारविवर्जितः ।
क्षाररनाळतैलानां परित्यागी ह्यलोलुपः ॥ ९ ॥
नित्यं कुशाजिने शायी मान मात्सर्यवर्जितः ।
तप्तहाटकसंकाशं परिभ्रमणविग्रहम् ॥ ४३० ॥
भूरिधारासमाकीर्णं वक्र मग्रे खगं स्मरेत् ।
तन्नाभिसंस्थितं मन्त्र मचलं चैव सम्मुखम् ॥ १ ॥
नानारत्नप्रभाकान्ति मुद्गिरन्तं स्वविग्रहात् ।
हेमाद्रिधातुनिचयं चन्द्रकान्तादिसन्मणीन् ॥ २ ॥
एवं ध्याये जपे च्चापि पूजये दन्तरान्तरा ।
नियमा दासमाप्तेस्तु जपान्ते वित्तप स्स्वयम् ॥ ३ ॥
आज्ञावश्यो विधेय स्स्या दात्मना च धनेन च ।
प्रयच्छत्यर्थिनां कामं भुङ्क्ते सो ऽविरतं स्वयम् ॥ ४ ॥
आयुरारोग्यसंयुक्तो मन्त्रेशस्य प्रभावतः ।
प्रवर्ततेर्थयुक्तानां काम आशुचभोगिनाम् ॥ ५ ॥
तत्साधन मधो वक्ष्ये साधकानां हिताय च ।
मण्डलंपूर्ववत्कृत्वा शुचौदेशेमनोरमे ॥ ६ ॥
संगुप्तेतत्रमन्त्रेशं समाहूयचसंयजेत् ।
त्रिरात्रंसप्तरात्रंवा जुहुयात्तदनन्तरम् ॥ ७ ॥
प्रागुक्तेनविधानेन जपध्यानेसमाचरेत् ।
सर्वाधारमरिन्ध्यायेत् पद्मरागरुचामहत् ॥ ८ ॥
तन्मध्येविद्रुमाभंच बन्धुजीवनिभोज्वलन् ।
ध्यायेन्मन्त्रवरंमन्त्री जपेत्पूर्वोक्तसंख्यया ॥ ९ ॥
स्त्रीभोगंचेतसःकृत्वा जपान्तेसाधकस्ततः ।
प्रार्थयन्तेत्रभीताश्च सन्तप्तामदविह्वलाः ॥ ४४० ॥

देवकिन्नरनार्यस्तु यक्षगन्धर्वकन्यकाः ।
सिद्धासुरांगनाश्चान्या नरनागस्त्रियोऽखिलाः ॥ १ ॥
आजीवावधिवैसम्य क्कर्मणामनसागिरा ।
सेवन्तेसाधकेन्द्रन्तं मन्त्रस्यास्यप्रभावतः ॥ २ ॥
यंयंसमीहतेकामं पाताळोत्तिष्ठपूर्वकम् ।
लक्षजापात्तथाहोमा त्तंतंयच्छतिमन्त्रराट् ॥ ३ ॥
अर्थकामोपभोगात्तु विरतस्यचमन्त्रिणः ।
मोक्षदंसंप्रदायंच कथयिष्येयथार्थतः ॥ ४ ॥
कृत्वायागवरंभूयः प्रसन्नेनान्तरात्मना ।
पूर्वोक्तन्तु यजेत्काळं तत्रमन्त्रवरंक्रमात् ॥ ५ ॥
तर्पयित्वाविधानेन कुण्डेवाथजलेम्भसा ।
सर्वदोषनिवृत्यर्थं प्रायश्चित्तार्थमेवच ॥ ६ ॥
जपेदयुतमेकन्तु प्रागुक्तंवास्वशक्तितः ।
हृत्पुण्डरीकमध्येथ स्मरेन्मन्त्रंसमाहितः ॥ ७ ॥
रोमकूपगणैस्सर्वैं रत्नज्वालाशतावृतम् ।
तन्मयश्चस्वचैतन्यं कृत्वातद्बहिरश्मिभिः ॥ ८ ॥
भूतदेहंदहेत्कृत्स्नं तद्वियुक्तश्चसांप्रतम् ।
मार्ताण्डइवपक्षीश आस्तेमन्त्रस्वरूपधृक् ॥ ९ ॥
अथमन्त्राकृतिस्वांवै ध्यायेत्परिणतंशनैः ।
तेजोगोळकसंकाशं सर्वांगावयवोज्झितम् ॥४५०॥
तत्तेजोगोळकंपश्चा द्बृहत्परिमितन्त्वपि ।
सर्वगंशब्दरूपञ्च भावरूपन्तुचिन्मयम् ॥ १ ॥
तस्मादप्यभिमानन्तु ह्यस्मिताख्यं शनैश्शनैः ।
विनिवार्ययथाशश्वत् ब्रह्मसम्पद्यतेस्वयम् ॥ २ ॥
इत्येवं वैभवीयस्य नृसिंहस्यमहात्मनः ।
आराधनंच सर्वेषा मुक्तंसिद्धिसमन्वितम् ॥ ३ ॥

नित्यक्रियापराणांच संसारोद्विग्नचेतसाम् ।
मद्भक्तानामिदंवाच्यं शुद्रानां संयतात्मनाम् ॥ ४५४॥

इतिश्रीपांचरात्रे श्रीसात्वतसंहितायां वैभवीयनृसिंहकल्पो नाम
सप्तदशः परिच्छेदः ॥ १७ ॥

## अथ अष्टादशः परिच्छेदः

नारदः ।

एवमुक्तेसतिपुनः कामपालोमुनीश्वराः ।
उवाचेदं हरिं वाक्यं लोकानुग्रह काम्यया ॥ १ ॥

संकर्षणः ।

सम्प्राप्त प्रत्ययानांच द्विजातीनांच साम्प्रतम् ।
सम्यक्प्रक्षीण पापाना मारूढाना मिहक्रमे ॥२॥
दीक्षात्रयस्य भगवन् ज्ञातुमिच्छामि निर्णयम् ।
यत्प्राप्य भगवद्भक्तः कृतकृत्यो चिराद्भवेत् ॥ ३ ॥

भगवान् ।

शुभेनुकूले नक्षत्रे तिथौ लग्ने गृहेक्षिते ।
भक्ताना मधि वासार्थं क्ष्मापरिग्रहमाचरेत् ॥ ४ ॥
पुण्यदेशेनुकूलेच मनोज्ञे साधुसेविते ।
मृद्वारिफलपुष्पाढ्ये सामित्कुश समन्विते ॥ ५ ॥
गोसस्यशालि सुभगे क्षुद्रप्राणि विवर्जिते ।
तत्र वर्णानुरूपांक्ष्मां गच्छेत्पूर्वोक्तलक्षणाम् ॥ ६ ॥

सर्वदोषविनिर्मुक्तां सत्पक्षि मृग सेविताम् ।
या शुभायतनोद्देशै मठैर्गोष्ठापणैर्गृहैः ॥ ७ ॥
तोयाशयाश्रमैः क्षेत्रैः सद्वृत्तै रन्तरीकृता ।
जलौघभयनिर्मुक्ता बलाद्युक्ताच सज्जनैः ॥ ८ ॥
वनैरुपवनैर्ग्रामै र्नगरांगै स्समावृता ।
अलाभेसतिलाभेवा स्वभूमे ब्राह्मणादिषु ॥ ९ ॥
स्वमन्त्रेणार्चनात्स्वत्वं कुर्या द्वर्ण व्यपेक्षया ।
उद्धृतां कृतखातांच ज्ञात्वादोषोज्झिताम्पुरा ॥ १० ॥
शुभमृत्पूरितां कृत्वा लघ्वश्मभि रथान्तरा ।
ततस्त्वाकुट्टयेत्पश्चा त्पंचगव्येन सेचयेत् ॥ ११ ॥
युक्तांहेमादिसद्रत्नै स्समीकृत्योपलिप्यच ।
तत्रार्चनं विभोःकुर्यात् ध्यानान्तंचैवपूर्ववत ॥ १२ ॥
भूतानां बलिदानंच सुरभीणांच तर्पणं ।
द्विजानां दक्षिणान्तंवै ततस्तत्र समापयेत् ॥ १३ ॥
प्राग्दिक्षु सिद्धिपूर्वन्तु मण्टपं मण्डनान्वितम् ।
सुस्तम्भद्वितयेनैव कोणगेनोपशोभितम् ॥ १४ ॥
पार्थिवेनच पीठेन मध्यगेनविराजितम् ।
विस्तरात्तु द्विजातीनां शूद्रान्तानां समंस्मृतम् ॥ १५ ॥
अष्टाश्रमथवावृत्तं तुर्याश्रंसोपपीठकम् ।
अष्टांगुळा त्समुत्सेधा देकापायेन लक्षितम् ॥ १६ ॥
स्वोन्नत्यर्थेनोपपीठं सर्वेषां परिकल्पयेत् ।
विस्तारमुपपीठानां पीठोच्छ्रायाद्द्विसंगुणम् ॥ १७ ॥
उपपीठस्यसंलग्ना तन्मानेनतु चोन्नता ।
आप्यदिक्साग्रहस्ताच सम्पाद्यासनपिण्डिका ॥ १८ ॥
नैवेद्यमुपपीठेतु विनिवेद्यनिधायच ।
तस्यदाक्षिणदिग्भागे त्वन्तर्गमनसंयुतम् ॥ १९ ॥

विविक्तलोचनोपेतं पिण्डिकाकुण्डभूषितम् ।
सुकवाटार्गळोपेतं कुर्याद्भवनमण्टपम् ॥ २० ॥
उपलिप्यास्त्रजप्तेन वारिणागोमयेनतु ।
विधिवच्छोभनंकुर्या दित्येवंमण्टपद्वयम् ॥ २१ ॥
विहितो वित्तविरहा दधिवासो द्विजालये ।
शिष्यैर्वाचार्यभवने तत्रकुर्यात्परिग्रहम् ॥ २२ ॥
प्राग्वदर्चनपूर्वन्तु भूततर्पणपश्चिमम् ।
ओदनंदधिलाजाज्य मधुतोयपरिप्लुतम् ॥ २३ ॥
भूततर्पणमित्युक्तं तद्दिनातत्रतेनिशाम् ।
सन्तिष्ठन्तेबहिःक्रुद्धाः कांक्षमाणाःपरंवधम् ॥ २४ ॥
अतश्चविहितंयत्ना त्स्थानेक्षेत्रे कृतेर्सति ।
निर्विघ्नसिद्धयेदद्या द्बलिंसर्वत्रसर्वदा ॥ २५ ॥
कृत्वैवम्मंगळार्थंतु दीर्घं घण्टारवं शुभम् ।
स्वपदा त्प्राग्वदुत्थाप्य प्रोच्चार्यप्रणवम्महत् ॥ २६ ॥
प्रवेशयेत्ततस्तस्मिन् लाजान् सिद्धार्थकान् शुभान् ।
फलानिश्रीफलादीनि चन्दनादीनि रोचनाम् ॥ २७ ॥
श्वेतपूर्वास्सुमनस स्सन्महीरुहमञ्जरीम् ।
साग्रान् हरित दर्भांश्च सर्वरत्नानि काञ्चनम् ॥ २८ ॥
सर्वौषधीत्वगेलाद्यं सुगन्धिनिचयं शुभम् ।
पद्मकं शंखपुष्पंच विष्णुक्रान्ताच कुन्दरम् ॥ २९ ॥
सप्तसप्तचधान्यानि बीजानिच समानिषट् ।
शालिश्यामाकनीवार तण्डुलं भूरिसंस्कृतम् ॥ ३० ॥
गोसम्भवानिवैपंच पात्रेष्वौदुम्बरेषुच ।
तस्त्रावववर्जितान्यानि तान्येव सुबहून्यपि ॥ ३१ ॥
प्रतिक्षणोपयोगार्थं भाण्डेष्वपि नवेषुच ।
पाद्याचमनकार्यार्थं दघ्यन्नं विनिवेदने ॥ ३२ ॥

हेमाद्युत्थानिपात्राणि मृदुपर्णपुटानि वा ।
पाण्डराणि दुकूलानि वस्त्रयुग्मद्वयन्नवं ॥ ३३ ॥
उपवीतं चोत्तरीयं मुसिते चौत्तवाससी ।
कौशेयानि पवित्राणि कंकणं चांगुलीयकम् ॥ ३४ ॥
स्फाटिकञ्चाक्षसूत्रञ्च पद्माक्षन्तु शुणिमिकं ।
पंचलोहमयं चक्रं शंखं द्वादशारकं ॥ ३५ ॥
कृतपं योगपट्टञ्च नेत्रवस्त्रं मृगाजिनं ।
कुशीकाशांशुकं पट्टं पादुके च उपानहौ ॥ ३६ ॥
स्वर्णं मतिस्रहं छत्रं पूर्णगोधूमकाष्टकम् ।
चतुर्वर्णानि माल्यानि सुन्दरं पादलंलघु ॥ ३७ ॥
नीलशाद्वल सम्मिश्रं हरितं पत्रसंचयम् ।
गुग्गुलं मृष्टधूपञ्च दीपतैलंच सर्षपः ॥ ३८ ॥
दर्पणं धूपपात्रंच घण्टामर्घ्यादिपात्रकं ।
रजांसि करणीयुग्मं शालिकां घटिकांचितां ॥ ३९ ॥
पंचांगुलन्तु सुदृढं हेमाद्यं कुशपंचकम् ।
अलक्तरञ्जितं सूत्रं सुसिता कर्सरी शुभम् ॥ ४० ॥
काण्डान्यष्टौ तु साग्राणि बर्हिपत्रान्वितानि च ।
प्रोन्नतानि स्थिराग्राणि लोहरुक्काष्ठजानि वा ॥ ४१ ॥
रंजितानि सुधाद्यैस्तु तदाधाराणि यानि च ।
कुल्लिका न्यम्बुकुम्भानि भृंगारं करवीं शुभाम् ॥ ४२ ॥
अकालमूलनिर्गर्भं साधारं कलशं तथा ।
स्थालीं कमण्डलुं दर्वीं तत्पिधानन्तु चुल्लिकाम् ॥ ४३ ॥
भद्रपीठं चतुष्पादं चतुरश्रायत न्नवम् ।
मात्रावित्तं सताम्बूलं दन्तधावनसंचयम् ॥ ४४ ॥
शुष्कगोमयसंयुक्ता मथीं चाग्निजं मणिम् ।
पालाशदूर्वासमिध स्साग्राः परिधयस्तु वै ॥ ४५ ॥

अमृत मिन्धनं शुष्क माज्याकं तिलतण्डुलम् ।
प्रागुक्तं स्रुक्स्रुवाद्यं च होमोपकरणं च यत् ॥ ४६ ॥
सर्वं पञ्चकपर्यन्तं दुग्धपानद्वयान्वितम् ।
पूर्वोक्तानां च भोगानां मध्यात्स्थण्डिलार्चने ॥ ४७ ॥
संपाति भागभावं तत ज्ञात्वा सर्वं प्रवेशयेत् ।
अनुग्रहधिया चार्यो भक्तानां भाविनां विभोः ॥ ४८ ॥
दिव्यभोगोपलिप्सूनां निश्रेयस पदार्थिनाम् ।
[ प्रत्येकैकं हि यत् गांगे वर्धयेत द्रव्यमूर्तिना ।
निधेनाव्यक्तसत्वेन सन्मन्त्रग्रहणात्सह ॥ ]
सार्थं सप्तादिकं दद्या न्मन्त्रव्यूहं यथागमम् ॥ ४९ ॥
फलदं स्या त्सकामाना मकामानां हि मोक्षदम् ।
सह साध्य स्तत स्तत्र प्राग्वत्स्नात्वा कृताह्निकः ॥ ५० ॥
सम्प्रविश्याप्य दिक्संस्थः प्राङ्मुखः प्रविशे त्ततः ।
पद्मासनादिना मार्गे चर्मण्याचामपूर्वकम् ॥ ५१ ॥
कुर्या द्यदधिकारेण मन्त्रेणानुग्रहं शिशोः ।
तेनांगसहितेनैव सर्वं कर्म समाचरेत् ॥ ५२ ॥
समस्तैर्वैभवैर्मन्त्रैः कार्यो वा नुग्रहो यदि ।
सर्वाराधनदानार्थं वा द्विषट्कासने तदा ॥ ५३ ॥
विशाखयूपमन्त्रेण कुर्या त्तद्धारणाद्वयम् ।
तर्हाजिन तनुं व्याप्य प्राग्वत्तदभिमन्त्रितैः ॥ ५४ ॥
पुरा हृतै र्यथाशक्ति मण्डनं च समाचरेत् ।
माल्यमालभनै र्वस्त्रैः कटकाद्यंगुलीयकैः ॥ ५५ ॥
सितोष्णीषेण महता सितमाल्येन वै सह ।
मुखवासै स्सताम्बूलै र्ललाटतिलकेन च ॥ ५६ ॥
कृत्वा शुभेन शारीरं योगपट्टेन संस्थितम् ।
हृत्पुण्डरीकमध्ये तु संन्यस्ये द्बीज मैश्वरम् ॥ ५७ ॥

करयोः पद्मनाभीयं मुद्राख्य मथ विग्रहे ।
शेषे चालभ्य पादान्त मातृकामपि पूर्ववत् ॥ ५८ ॥
हस्तयो र्विग्रहे सांगं विन्यस्ये द्धोम मेव तम् ।
मुद्रावसानं कृत्वैव सम्य क्तत्तु च्चारयेत् ॥ ५९ ॥
पाणिभ्यां शंखचक्रे द्वे स्वमन्त्रेणाभिमन्त्रिते ।
भूत्वा तदात्मना पश्चा त्ते निधाय धरातले ॥ ६० ॥
अवलोक्याखिलं तस्थं प्रवर्तेताथ कर्मणि ।
अस्त्राभिमन्त्रितं कृत्वा कर्मभूम्यन्तरे स्थितम् ॥ ६१ ॥
तेनोपलिप्य सम्मार्ज्य यागस्थानं निघृष्य च ।
तद्ब्रह्माख्या यथो भूय स्तेजसो हि विशुद्धये ॥ ६२ ॥
हेमपूर्वाणि रत्नानि बीजानि विनिवेश्य च ।
गालितेनांभसा पूर्य ततः पात्रचतुष्टयम् ॥ ६३ ॥
एकस्मिन् चन्दनादीनि पूर्वं सिद्धार्थकानि च ।
साक्षतानि कुशाग्राणि तण्डुलानि तिलां स्तु वै ॥ ६४ ॥
सरत्ना नुत्तमान् धातून् सफला न्विनिवेशयेत ।
द्वितीये दधिमध्वाज्य क्षीरबिन्दुचतुष्टयम् ॥ ६५ ॥
कुशाग्रेण सबाह्लीकं सपुष्पं तिलतण्डुलम् ।
दूर्वांस्तविष्णुक्रान्तां च श्यामाकं शंखपुष्पिकाम् ॥ ६६ ॥
पद्मकं च तृतीये तु कुन्दरेण समन्वितम् ।
त्वगेलाद्यचयं सर्वं तत्कर्पूरं च चन्दनम् ॥ ६७ ॥
विनिक्षिप्य चतुर्थेतु द्रव्यं सर्व मिदं शुभम् ।
हृन्मन्त्रेण चतुर्णान्तु कुर्या द्वै द्रव्ययोजनम् ॥ ६८ ॥
साङ्गेनमूलमन्त्रेण सर्वंतस्याभिमन्त्रयेत्तु ।
चषकेनतेनैव कुर्यात्पुष्पादिनार्चनम् ॥ ६९ ॥
यथाक्रमेणसर्वेषां ध्येयं सर्वं सुधोपमम् ।
आवाहनेसन्निधाने सन्निरोधेतथार्चने ॥ ७० ॥

दिग्बलिनैवेद्यदानन्तु शाकमाषाभिरेवमाचरेत् ।
तद्गन्धसाचार्हणन्तु तथैवपरिवेषणम् ॥ ७१ ॥
कुर्यान्मणपवनंदानां प्रीणनंमौलिकर्मण ।
प्रोक्षणंसर्ववस्तूनां मन्त्रस्मादुदकेनतु ॥ ७२ ॥
आरम्भेसर्वकार्याणां तत्समाप्तौतथैवहि ।
ऊनाधिकानां साम्येतु ज्ञातव्यं त्वघशान्तये ॥ ७३ ॥
कार्यं तदर्घ्यदानञ्च नित्यमन्त्रात्मनाविभोः ।
कुम्भोपकुम्भकुण्डानां मन्त्राञ्जकलशार्चने ॥ ७४ ॥
सम्पूजनेच भूतानां गुर्वादीनाम्महामते ।
दक्षशिष्यात्मपूजार्थं कृत्वाकृत्वार्चनम्प्रति ॥ ७५ ॥
पाद्यदानंतृतीयात्तु नित्यंपात्रात्समाचरेत् ।
चतुर्थात्तुयथाकालं दद्याद्राचमनन्ततः ॥ ७६ ॥
कृत्वाभ्यर्पोरिणाप्रोक्ष्य पृथग्भाण्डस्थितम्पुरा ।
पञ्चगव्यन्ततःप्राश्य स्फलनीयं हृदादिकैः ॥ ७७ ॥
कुशोदकन्तदर्द्धेण दत्वाद्येनाभिमन्त्र्यच ।
अथपाणिद्वयेनैव अग्नीषोमात्मकेनच ॥ ७८ ॥
योग्यतापदवींनीता प्रोक्षयेत्पुराहृतम् ।
साम्भसातेनवैसर्वं विष्टराग्रगतैःकुशैः ॥ ७९ ॥
सर्वबीजानि धान्यानि सिद्धार्थक ठुतान्यथ ।
कुर्याच्च परिजप्तानि ध्यायाच्याञ्जलानिच ॥ ८० ॥
विघ्नोपशान्तयेवेगा द्दशदिक्षु विनिक्षिपेत् ।
संहृत्य वर्हिकूर्चेन प्राच्यान्दिशि निधापयै ॥ ८१ ॥
तद्गर्भीकृत्यसंक्लिष्य हेतिरस्त्रचन्दनादिना ।
करर्वी कुम्भसंयुक्ता मलंकृत्य यथापुरा ॥ ८२ ॥
भोगैः प्रावरणानैश्च मूर्तिभूतौ विचिन्त्यच ।
तद्देवताशरीरन्तु पश्येदंबरवत्कुम्भं ॥ ८३ ॥

विशाखयूपं तन्मध्ये समावाह्यार्चयेत्ततः ।
क्रमान्मुद्रावसानन्तु तस्यदक्षिणदिग्गतम् ॥ ८४ ॥
अस्त्रविग्रहरूपश्च स्मृत्वाकुरवकन्तुतत् ।
अस्त्रमन्त्रन्तु तन्मध्ये ध्यात्वाभ्यर्च्येयथाविधि ॥ ८५ ॥
ध्वंसयन्तश्च विघ्नानां कालंकर्मावसानकम् ।
इदमभ्यर्थयेद्विद्वान् साम्त्रोबद्धांजलिस्स्थितः ॥ ८६ ॥
यागालयंहिविश्वेश गृहाणरक्षितम्मया ।
आसमाप्तेर्भजविभो क्रियांगानांचसान्निधिम् ॥ ८७ ॥
ततोस्त्रोदकधारांवा ध्यच्छिन्नांमितिकानयेत् ।
प्रदक्षिणेनमार्गभागा संपदांचसंस्मरेत ॥ ८८ ॥
तन्निधायाधकुम्भेन सहकुर्यात्प्रदक्षिणम् ।
अर्घ्यदानन्तयोःकृत्वा प्राग्भागेचाधरोर्ध्वगम् ॥ ८९ ॥
पूजितंवाससाच्छन्नं चक्रमन्त्राभिमान्त्रितम् ।
निदध्याद्भद्रपीठन्तु तत्राधारगतंन्यसेत ॥ ९० ॥
साम्त्रांहिमन्त्रकलश मर्चयित्वाप्रणम्यच ।
दिगीश्वरगणांदिक्षु पूर्वोक्तांविन्यसेत्ततः ॥ ९१ ॥
ततस्समर्चनन्तेषां कृत्वाक्रेणहृदासह ।
प्रणवेनस्वनाम्नाच नमस्काराङ्गेनवै ॥ ९२ ॥
तोरणध्वजपूर्वाणां कार्यमर्घ्यादिनार्चनम् ।
ततोभवनभूमध्ये ध्यात्वापीठं पुरोदितम् ॥ ९३ ॥
तत्रार्चनंविभोःकुर्या त्पूर्वोक्तेनक्रमेणतु ।
पूर्णान्तन्तर्पणम्प्राग्व त्कृत्वाकुण्डेथपूजिते ॥ ९४ ॥
ततस्तुभगवद्भूतान् क्षेत्रनाथसमन्वितान् ।
अर्घ्यपुष्पादिनाभ्यर्च्य बलिमादायपात्रगम् ॥ ९५ ॥
इदमुक्त्वाचतदनु क्षिपेद्यागगृहाद्बहिः ।
येविष्णुभाविनोभूता येषतेष्वनुमानिनः ॥ ९६ ॥

आहरन्तु बलिं तुष्टाः प्रयच्छन्तु शुभं मम ।
प्रक्षालिताङ्घ्रिराचान्त स्संविशेद्यागमन्दिरम् ॥ ९७ ॥
अथगेहे तु संस्कृत्य चुल्लीं प्राग्दिश्यवास्थिताम् ।
पञ्चनालयमुत्सृज्य स्वदेशात्कुण्डमध्यगाम् ॥ ९८ ॥
स्थालीं चास्त्रेण संक्षाल्य बाह्यतो गोमयेन तु ।
विलिप्यान्तस्सुगन्धैस्तु प्रताप्य ज्वलितैः कुशैः ॥ ९९ ॥
सन्ताड्य कुसुमास्त्रेण सितसूत्रेण कण्ठतः ।
चतुर्धावमजनेन संवेष्ट्यार्घ्यादिनार्च्य च ॥१००॥
चुल्ल्यां कृत्वा समारोप्य तस्यां मधु घृतं पयः ।
परिशुद्धेऽश्रिते क्षीरे त्वस्त्रेणारोप्य तण्डुलान् ॥ १ ॥
चालयेन्मूलमन्त्रेण दृष्ट्वा नेत्रेण संस्कृतम् ।
हृदावतार्याभिघार्य शिखामन्त्रेण घट्टयेत् ॥ २ ॥
शिरसा लिप्य संक्षाल्य सुप्रसन्नेन वारिणा ।
भूतिना चन्दनाद्येन भूषयेदूर्ध्वपुण्ड्रकैः ॥ ३ ॥
विष्टरोपरि चान्यत्र निदध्यान्मण्डलान्तरे ।
होमं तत्सिद्धये कृत्वा पूर्णान्तमथ वै चरोः ॥ ४ ॥
आघारदानमाज्येन कुर्यात्तेजोमृतात्मकम् ।
ईशाज्जनाभरुद्धेन हंसार्णेन सबिन्दुना ॥ ५ ॥
तद्वद्वौषड्वषट्कार प्रणवाद्वितयेन च ।
यतोऽपिन (?) भातोत्र स्थितिद्वाभ्यां च सांप्रतम् ॥ ६ ॥
अतः पुरोदितेनैव तदन्तं सम्पुटेन च ।
अथ ऊर्ध्वं च सञ्छन्नं स्मरेदादाय वै हृदि ॥ ७ ॥
द्रव्यसम्पातहोमेऽथ पूर्णान्ते तु कृते सति ।
उद्धृत्याङ्गुलियोगेन पत्रे कृत्वयगन्तु तत ॥ ८ ॥
स्थण्डिले कलशे चैव विनियुज्य यथाविधि ।
तद्वाद्यभावितं शेषं कुशाक्रान्तं विलस्य च ॥ ९ ॥

क्रमान्मूलाङ्गनेत्रेण जुहुयान्त्रशतत्रयम् ।
नीत्वातत्सम्पूर्णभावञ्च पूर्णयापुनरेवाहि ॥ ११० ॥
ततश्चोत्तरतःकुर्या न्मण्डलंगोमयादिना ।
प्राक्प्रान्तंविष्टरंतत्र दद्याद्दर्भैर्हृदन्तरे ॥ १ ॥
तन्मध्येविन्यसेच्छिष्यं समाध्नि स्तब्धविग्रहम् ।
प्राङ्मुखंयतवाक्चित्त वित्तिरूपन्धृताञ्जलिम् ॥ २ ॥
अस्त्रेणमन्त्रयत्कुर्या त्प्रोक्षणन्तस्यचांभसा ।
तेनैवताडयेन्मूर्ध्नि दीप्तैस्सिद्धार्थकैस्तिलैः ॥ ३ ॥
अनादिवासनोत्थानां बन्धानांचालनायच ।
फडन्तेनाथचास्त्रेण कुशाग्रेणांघ्रिगोचरात् ॥ ४ ॥
समुल्लिख्यशिखान्तंच ऋज्वर्थमार्गसन्ततेः ।
जालवन्मन्त्रजालेन व्याप्तंस्मृत्वाचसंवृतम् ॥ ५ ॥
बध्नीयान्नेत्रमन्त्रेण तस्यनेत्रेचवाससा ।
वस्त्वर्घ्यकुसुमैर्गन्धैः कृत्वापूर्णाञ्जलिंपुरा ॥ ६ ॥
पाणिनादायचास्त्रेवा निधायाग्रस्थितंवटुम् ।
प्रक्षेपयेद्देवधाम्नि ततमूर्ध्नाञ्जलिंचतम् ॥ ७ ॥
तस्योद्घाटितनेत्रस्य त्वदृष्टस्येतरैर्जनैः ।
कुशलाध्वनिविष्टस्य दृष्ट्वावैभक्तिलक्षणम् ॥ ८ ॥
रोमांचौत्सुक्यहर्षाढ्य मानन्दाश्रुसमन्वितम् ।
सप्रणामजयालाप दिक्प्रदक्षिणसंयुतम् ॥ ९ ॥
शुद्धान्तःकरणंबुध्वा योग्योयामितिभावयेत् ।
यदातदाच्युतात्मान मात्मानंभावयंस्ततः ॥ १२० ॥
स्मरेद्दक्षिणपाणौतु चक्रांबुरुहमध्यगम् ।
प्रधानदेवतावृन्दं स्वेस्वेधाम्निपरेस्थितम् ॥१॥
स्वमरीचिगणेनैव द्योतयन्तन्तुचाखिलम् ।
तेनाच्युतकरेणैव सोदकेनालभेततम् ॥ २ ॥

पुष्पपूर्णाञ्जलौपृष्टे तस्यताम्नितयाश्रितम् ।
कृत्वामन्त्रगणन्तस्मै मोक्षविघ्नविशान्तये ॥ ३ ॥
पुनरभ्यर्च्यये नीत्वा मन्त्रेण परमेश्वरम् ।
आधाराधेयभावेन बुध्वान्तस्संस्थितिं पुरा ॥ ४ ॥
क्ष्मादीनां बुद्धिनिष्ठानां वासनानां तथात्मनः ।
ततः कुर्याच्च विश्लेषं तेषां ध्यानार्चनादिना ॥ ५ ॥
आत्मतत्त्वं समाश्रित्य कर्मचक्रं हि वर्तते ।
तच्चक्र मवलम्ब्यास्ते बुद्धिनिष्ठं हि सप्तकम् ॥ ६ ॥
अज्ञानव्यापकत्वं च सुखदुःखादिवेदनम् ।
सर्वज्ञस्यात्मतत्वस्य कर्मचक्रावलम्बनात् ॥ ७ ॥
चपलं कर्मचक्रंत द्वर्धमानं सदैव हि ।
क्ष्माद्य माधार माश्रित्य तावदेवावतिष्ठते ॥ ८ ॥
याव त्सर्वज्ञशक्त्या वै कर्मात्मानप्रबोधितः ।
प्रबुद्ध स्तस्य संरोधं कर्तु शक्नोति सर्वदा ॥ ९ ॥
मन्त्राराधनपूर्वेण ज्ञानानुष्ठानकर्मणा ।
अतो य आश्रयः क्ष्माद्य स्तत्वसारो हि पौरुषः ॥ १६० ॥
नीरसं चेरिणी भूतं कुर्या त्संस्थाप्य सांप्रतम् ।
निर्मुक्तचिरफलो येन कर्मवृक्षो विनश्यति ॥ १ ॥
शुद्धयर्थ मात्मन स्तस्मा त्सर्वज्ञस्याग्रत स्स्थले ।
भूताधिदेवमन्त्राणां कुर्या द्वै पूजनं क्रमात् ॥ २ ॥
चिन्तानुविद्धं सामान्य म्मन्त्रनाथै रधिष्ठितम् ।
क्ष्माद्यध्वानञ्च बुद्ध्यन्तं ध्यात्वा षट्प [ पु ] त्रवत्पुरा ॥ ३ ॥
तत्र मध्ये तजनाभन्तु प्राग्भागे केसरोद्वहम् ।
षट्कञ्च विश्वरूपाद्यं क्ष्माधारान्तन्तु विन्यसेत ॥ ४ ॥
नीत्वा स्वस्थान्न आद्यर्ण क्ष्मान्तानां बीजतां पुरा ।
तेन तेषां बलान्तस्थं प्राग्वन्न्यासं स्मरेत क्रमात् ॥ ५ ॥

क्ष्माबीजश्च दळाग्रेषु मूलनिष्ठेषु षट्सु च ।
इष्ट्वा सर्वेन्द्रियाधार मित्यभिन्नं पुरा ततः ॥ ६ ॥
चिद्धातस्कन्धवृन्देन खस्थितेनान्तरीकृतम् ।
उपर्युपरि योगेन बुद्ध्यन्तं समुपस्थितम् ॥ ७ ॥
भेददृष्ट्या यजे त्सम्यक् भूय स्संहारवर्त्मना ।
सवर्ग्गं स्वेन बीजेन पीतं तुर्याभिलक्षणम् ॥ ८ ॥
हेमाब्जभूतं तद्ध्यात्वा क्ष्मातत्वं तत्र मध्यतः ।
वाराहंसंयजे न्मन्त्रं सांगं सावरणं क्रमात् ॥ ९ ॥
तत्कारणाश्रितं कृत्वा परिधानसमन्वितम् ।
अथ क्ष्मामण्डलोर्ध्वस्थ मर्धेन्दुसदृशं स्थितम् ॥ १४० ॥
पुरं पद्मांकितं स्मृत्वा सितपद्मोदरं महत् ।
सरश्शयन्तदन्तस्स्थ माभिसन्धाय संयजेत् ॥ १ ॥
तेजोमयं तदूर्ध्वंतु त्रिकोणं भावये त्पुरा ।
रत्नज्वाळाकणाकीर्णं स्वस्तिकै रुपलांछितम् ॥ २ ॥
नृसिंहं पूजयें त्तत्र मध्ये रत्नारविन्दगम् ।
तस्योपरि सितं वृत्तं पुरं तारागणांकितम् ॥ ३ ॥
स्मृत्वा नीलाम्बुजाक्रान्तं स्मरे त्तत्र खगासनम् ।
नीरूपंच तदूर्ध्वंतु स्मरे च्छब्दै रलक्षणम् ॥ ४ ॥
ध्यायेत्तदन्तस्सूर्याभं प्राग्वर्णंतुसपंकजम् ।
तत्रवागीश्वरन्देव मभ्यर्च्यविधिवत्ततः ॥ ५ ॥
तत्कर्णिकोदराकाशे नानारत्नरुचिन्सतः ।
संस्मरेत्कमलाकारं चित्तवृत्तिमयन्तुयत् ॥ ६ ॥
यजेत्तन्मध्यगंविश्व रूपन्तुमनसःपतिं ।
तदूर्ध्वंमृतगर्भन्तु शीतांशुकरकोटिवत् ॥ ७ ॥
पद्मंस्वेनात्मनात्मानं धारयन्तंविभाव्यच ।
समभ्यर्च्यस्तदन्तस्थो व्यब्जनाभोधियाम्पतिः ॥ ८ ॥

पृथ्वींगन्धरसञ्च रूप स्पर्शशब्दमनोधियां ।
क्रमेणाधीशसंयन्तु अवतार्यपराद्यजेत् ॥ ९ ॥
अर्घ्यादिरर्घ्यपित्वाच्च न्यसेत्तत्रैवतत्पुनः ।
येत्रणीभूतयोनीनां राश्मीयाःकमलोपमाः ॥ १५० ॥
संस्थितिसंस्मरेत्तेषा मस्मिशक्तौ तथागतिं ।
सान्नाद्भिपाकनाकनां त्वभेदे नात्मनिस्थिताम् ॥ १ ॥
निरोधबीजरश्मीळ्च पञ्चानां भाविधारिणीं ।
निर्गतांवैक्यात् तत्या द्वियुक्तांस्वामिनाकृतां ॥ २ ॥
क्षरद्रूपापरिभ्रष्टा न्निराधारांच संस्मरेत् ।
प्रणवेनत्वमभ्यर्च्य दिक्षुकालेभ्युपस्थिते ॥ ३ ॥
साधिभूताधिदैवञ्च इष्टैवंभूतसत्तकम् ।
स्वयमभ्यर्च्येत्पश्चात् शिष्यमञ्जलिनाञ्चतम् ॥ ४ ॥
ततोग्रेदत्ताग्निधिगत्वा ध्यात्वायामत्रयोपरि ।
दक्षिणेनात्मनोदार्भे विष्टरेचक्रमन्दिरे ॥ ५ ॥
सकुशेनस्वहस्तेन दक्षिणंचरणंगुरोः ।
अवलम्ब्यसमास्तेवै स्पर्शनाद्येकतात्मना ॥ ६ ॥
बीजेनांत्रे शिखान्तञ्च स्मरेत्सोयमयंविभुम् ।
विशेषयन्तंसहसा ज्ञानाद्यार्थमविग्रहम् ॥ ७ ॥
संस्कारञ्चक्रंविविधं प्रेरकं दुःखवर्त्मनि ।
नास्यैक्य मभिसन्धान मभिसन्धानचेतसा ॥ ८ ॥
विश्लेषंकर्मणांलब्ध द्धर्मणास्त्रेण होमयेत् ।
क्रमेणसघृतानांच तिलानां द्वादशाहुतीः ॥ ९ ॥
अनुसन्धाय सम्पाद्यो मयायं वैपरात्मनि ।
दद्यादष्टावाहुतीश्च मूलेनसघृताःपुरा ॥ १६० ॥
तदुत्तमाङ्गं संस्पृष्ट्वा स्रुवेणाज्यान्वितेनच ।
हुत्वाज्ञान पदेनैव भूयस्सर्वं गुणात्मना ॥ १ ॥

प्राक्संख्यमाचरेद्धोम मन्त्रान्तरयोगतः ।
आचेश्वरपदात्सम्यक् नेत्रान्तंत्वेवमवहि ॥ २ ॥
इतिसम्पातहोमोवै सम्पन्नेसतिजायते ।
कर्तव्यो मन्त्रमाहात्म्याद् संस्कारै र्निखिलैर्युतः ॥ ३ ॥
साम्प्रतं चाणिमादीनां गुणाना मुत्तरवतु ।
विभोराराधनात्सम्यत योग्याभ्यासाच्च भाजनं ॥ ४ ॥
कृतेसम्पातभवने आज्येचाथ सकृत् सकृत् ।
मन्त्राणां तर्पणंकृत्वा सार्चनं श्रावयेद्विभुम् ॥ ५ ॥
अस्यकर्मात्मतत्वस्य कर्मपिण्डं [ त्वित्थं ] सवाउनं ।
यदनेकप्रकारन्तु स्वच्छक्त्या स्तंभितंमया ॥ ६ ॥
प्रायश्चित्तनिमित्तन्तु जुहुया त्तदनन्तरम् ।
बीजेनान्तर्निरुद्धेन स्वांगेनाकृतिकाष्टकम् ॥ ७ ॥
एतावता महाबुद्धे जन्तो र्जन्माश्रितस्य च ।
यातिव्यामिश्ररूपस्य हेयरूपस्य संक्षयः ॥ ८ ॥
मोक्षैकफलदो धर्म उपादेय स्त्वनन्तरम् ।
योसौ साम्मुख्य मायाति विविध स्तस्य चाच्युतः ॥ ९ ॥
येनान्तर्लीन मभ्येति ज्ञानं सहसाक्षयम् ।
अथादायारुणं सूत्रं कृत्वा नैकगुणं पुरा ॥ १७० ॥
निरीक्षितं दृशा चास्त्र वारिणा परिशोधितम् ।
तदंगुष्ठावधि यावत् शिखान्ता त्सम्प्रधार्य च ॥ १ ॥
संस्मरे त्सर्वदुःखानां सम्बन्धानां तदास्पदम् ।
संविश्य देवयानेन शिशुश्चैतन्यसन्निधिम् ॥ २ ॥
हुंफडन्तं च शिरसि नाम च प्रणवादिकम् ।
हृन्मन्त्रसम्पुटस्थं च कृत्वा वै पितृधर्मिना ॥ ३ ॥
आनीय सह सूत्रेण नये त्त्रेण साम्यताम् ।
अभ्यर्च्यार्घ्यादिना वेष्ट्य कवचेनात्मना मनः ॥ ४ ॥

ॐ हुं अदन्यै [ स्व ] हुं स्वाहेत्यनेना [हु] कृतिसप्तकम् ।
हुत्वास्त्रमन्त्रजप्तेन सितेन रजसा ततः ॥ ५ ॥
सन्ताड्यं शैशवं कायं विशेत्तदवधिं तथा ।
विश्लेषयाणुकं त्र्यात्पदं वीर्यपदानुगम् ॥ ६ ॥
तं ज्ञात्वा नवता [ चके ] नाथ त्वाद्यन्तेन विकृष्य च ।
स्वबुद्ध्यानुगतं कृत्वा ध्यात्वा नक्षत्रगोळवत् ॥ ७ ॥
सन्ताड्याभ्यन्तरे सूत्रे हंसार्णेन सबिन्दुना ।
नदीप्रणवगर्भेण रूढशक्ति च विग्रहे ॥ ८ ॥
वासनामय मित्येव मातिवाहिकसंज्ञकम् ।
सूत्रात्मकं वपुः कृत्वा आत्मशक्त्या विभावितम् ॥ ९ ॥
बलमन्त्रेण संरुद्धं तदर्थं सुहुया ततः ।
उक्त्वा ओमात्मने स्वाहा द्विषट्कपरसंख्यया ॥ १८० ॥
आदाय भाविनो बन्धा न्व्यापकान् शुद्धभोगदान् ।
ज्ञानादय स्समाश्रित्य येऽत्र तिष्ठन्ति सर्वदा ॥ १ ॥
स्वस्थानेषु स्वमन्त्रेभ्य स्तां स्तत्रैव च योजयेत् ।
यथाक्रमेणार्चितानां कृत्वा तेषां च तर्पणम् ॥ २ ॥
अथ संस्कारचक्रस्य तत्वबृन्दाश्रितस्य च ।
सर्वगस्यापि वै विद्धि स्थितिं नियतलक्षणाम् ॥ ३ ॥
तत्वव्याप्ति च्छलेनैव शरीरे पांचभौतिके ।
गुल्फजानुकटीवक्षः कर्णभ्रूकावटावधि ॥ ४ ॥
बुद्ध्यन्तानां धरादीनां क्रमा दवनिसप्तकम् ।
अहंकार स्तदुत्थास्तु ये भेदा विविधा अपि ॥ ५ ॥
चित्तजा अपि येचान्ये तिष्ठन्ति मनसा सह ।
सकाळोत्था स्तथा बौद्धा स्तत्पूर्वा स्तत्परे च ये ॥ ६ ॥
अनेकभेदभिन्ना स्तु श्रिता आश्रित्य ते धियम् ।
द्विसप्तभुवनं विश्व मनेकरचनान्वितम् ॥ ७ ॥

शतकोटिप्रविस्तीर्ण मष्टधोन्युद्धृत्य सेवितम् ।
स्थिरं धराश्रितम्भूयो बोद्धव्यं सर्वदैवहि ॥ ८ ॥
चतुष्कं जाग्रदाद्यं य त्पदाना मप्सु वर्तते ।
मन्त्रकोटिसहस्राणां विविधानां महामते ॥ ९ ॥
योगसिद्धिसमेतानां संस्थिति स्तैजसे पदे ।
चातुरात्मीयतत्वानां ज्ञेयः कैवल्यदेहिनाम् ॥ १९० ॥
शान्तोदितस्वरूपाणां सन्निवेशो मरुत्पदे ।
अनेकशक्तिभूतानां ज्ञानादीनां च लांगलिन् ॥ १ ॥
कालाना माश्रयो व्योम या सा मूर्ति र्न लक्ष्यते ।
संस्थिता श्चादयो वर्णाः पदे षष्ठेतु मानसे ॥ २ ॥
अस्मिन्मात्रानुरक्तानि कीर्तितेस्मिन् षडध्वनि ।
क्षिपंस्तु चाहरंस्त्वेवं शुद्ध्यर्थं लीलयेव हि ॥ ३ ॥
स स्थितः कर्मतत्वानि बुद्धिशक्तिपदे प्रभुः ।
निरस्तदोषं कृत्वा प्रा क्समाविश्य तदैवहि ॥ ४ ॥
स्वां शक्ति मुपसंहृत्य शान्ति मभ्येति शाश्वतीम् ।
मधुसूदनपर्यन्तं पाताळशयना दथ ॥ ५ ॥
सप्तकं सप्तकं षट्कं सम्पश्ये त्क्ष्मादिपञ्चके ।
मनस्यवस्थितं ह्येवं शक्तीशा त्रितयं हि यत् ॥ ६ ॥
बुद्धौ कमलनाभात्मा देव स्सर्वेश्वरः प्रभुः ।
पुन स्स्वांसिद्धै र्युक्तानां सर्वेषां पार्थिवे पदे ॥ ७ ॥
द्विसप्तभेदभिन्नेतु बोद्धव्या संस्थिति श्शुभा ।
तीव्रमन्दादिकं बुध्वा भावं भक्तिसमन्वितम् ॥ ८ ॥
आलम्बनवशा त्कुर्या त्सर्वेषां स्वपदे स्थितिम् ।
एषा वैभवदीक्षाया मधिवासनकर्माणि ॥ ॥ ९
क्रम उक्त स्त्वथेदानीं मपरायां निबोधतु ।
आपदा न्नाभिदेशं च महाभूतै र्धरादिकैः ॥ २०० ॥

व्याप्तं चतुर्थी वाग्वह्नै स्तदूर्ध्वं नभसा पुनः ।
पूरितं हृदयान्तं च तदुद्देशा च्छिखावधि ॥ १ ॥
विभाव्य मनसा व्याप्त मनेनैव क्रमेण तु ।
स्थित स्संकर्षणान्ता श्चा प्यनिरुद्धादय स्तु वै ॥ २ ॥
समाक्रम्याध्वषट्कन्तु बुद्ध्यालीनास्तु बुद्धिगः ।
समादायात्मतत्वं च प्राग्वदभ्येत्य मूर्छि [ तिं ] ताम् ॥ ३ ॥
व्यापिका मूर्तय स्त्वेताः पृथक्भक्तिपरायणैः ।
तद्धाकारै रसंख्यै स्तु संभृताः क्ष्मावनीषु च ॥ ४ ॥
प्राक्संख्यासु च तिष्ठन्ति सर्वा स्सर्वासु सर्वदा ।
स्मृत्वा ह्यभेदभावेन षट्कर्मे [?] माह्रवत्पुरा ॥ ५ ॥
ततस्तु क्ष्मादिना तेन सर्वं व्याप्तं विचिन्तयेत् ।
चतुरात्मान मव्यक्तं शब्दमूर्तिं निराकृतिम् ॥ ६ ॥
गुणमात्रै र्विभिन्नं च सव तत्रैवभावयेत ।
अप्राकृतेणाथ वपुषा स्वस्वभावमयेन च ॥ ७ ॥
संक्रान्तेन तु वै बुद्धौ सर्वदेवोदितेन तु ।
स्वशक्त्या वै ह्यनिच्छातो जीव मादाय सोर्ध्वगम् ॥ ८ ॥
स्वसामर्थ्यं स्वशक्त्यातद् शान्तात्मास्ते विळाप्यच ।
शुद्धाशयानां भक्तानां तत्पदैकाभिळाषिणाम् ॥ ९ ॥
तत्सामर्थ्यानुविद्धानां सर्वत्र व्यक्तिमेतिच ।
अतस्तुयदसम्बेद्यं ह्येयंपरिमितन्त्वपि ॥ २१० ॥
तत्तदात्मनाभ्येति सर्वदाभावितात्मनां ।
इत्यादौसर्वसामान्यो नित्योविद्याख्य आश्रयः ॥ १ ॥
बोद्धव्यस्सोपितदनु ह्य सामान्यं तदागतः ।
आमोक्षादगभावंच जीवानांस्वयमेवहि ॥ २ ॥
वज्रवत्सूक्ष्मरूपेण सम्पूर्णनमहामते ।
दीक्षाकालेतु शिष्याणां परिज्ञेयं यथोदितम् ॥ ३ ॥

एवमेवविजानीया द्भूयस्सौत्रेतु विग्रहे ।
सप्तधातुविभज्यादौ सन्धिंवैकुंकुमादिना ॥ ४ ॥
चित्रीकृत्यचतुर्दंशा त्प्रणवाद्यन्तगैस्ततः ।
स्वनामपदसंयुक्तो प्रथर्नीयस्स्वकारणैः ॥ ५ ॥
एवंमामिमयैर्भागै र्हृदापूर्णान्तिमेकृते ।
नीत्वावैमण्डलस्थस्य विभोस्तंसन्निवेदयेत ॥ ६ ॥
वर्मणाच्छादितंकृत्वा निधायकलशाग्रतः ।
सशिष्योथार्चनंकुर्या त्पुनर्विश्वात्मनोविभोः ॥ ७ ॥
प्रदक्षिणैःप्रणामैस्तु नानास्तुतिपदैस्सह ।
तत्रोपलिप्तभूभागे मण्डलान्तर्गतंबहिः ॥ ८ ॥
स्थानभेदस्थितंकृत्वा नेत्रहृन्मन्त्रमन्त्रिते ।
पंचगव्येवनौदन्त धावनेविनियोजितम् ॥ ९ ॥
भुक्तोज्झितेदन्तकाष्टे कुर्यात्सिद्धिविचारणम् ।
सौम्यवारुण ईशाने यदिपूर्वादिगाननम् ॥ २२० ॥
तत्सिद्धिसूचकंविद्धि विपरीतमतोन्यथा ।
तद्वंसनायजुहुया द्वीर्यमन्त्रेणवैशतम् ॥ १ ॥
धूपानुलेपनादीनि रजांसिवटिकादयः ।
साज्यानिचतिलादीनि योग्यान्यन्यानिलांगलिम् ॥ २ ॥
उद्धृत्योत्तरादिक्कृत्वा वर्मजप्तेनवाससा ।
अभुक्तेनाहतेनैव त्वाच्छाद्यसंचितेनच ॥ ३ ॥
समभ्यर्च्यास्त्रमन्त्रेण पुष्पधूपानुलेपनैः ।
क्षान्त्वास्थलस्थितन्देव मग्नौवाकलशेन्यसेत ॥ ४ ॥
अथशुद्धेचभूभागे हृन्मन्त्रितकुशास्तरे ।
कृत्वाप्राङ्मस्तकंशिष्यं बद्धजप्तांशुकेनतु ॥ ५ ॥
हृदावकुण्ठिततनुं मुख्यमन्त्रमनुस्मरन् ।
स्वापयेत्स्वप्नलाभाय ततोहृन्मन्त्रितैस्तिलैः ॥ ६ ॥

सिद्धार्थकयुतैस्तस्य निदध्यात्परिखांबहिः ।
सबहिःपक्षमन्त्रेण प्राग्वद्दिक्ष्वष्टकंहियत ॥ ७ ॥
प्रदक्षिणंनतत्त्रापि सितसूत्रेणवर्मणा ।
चतुरावेष्टयित्वातु मण्टपान्निष्क्रमेद्बहिः ॥ ८ ॥
दन्तकाष्ठादिकंकर्म विनिष्पाद्यस्वयंस्वपेत् ।
कुतलेदर्भशय्यायां कृत्वादक्षिणदिक्छिरः ॥ ९ ॥
सम्स्पृशन् स्वांघ्रियुग्मेन शिशुंशयनसंस्थितम् ।
भगवन्तंहिमनसा प्रार्थयन्नपवर्गदम् ॥ २३० ॥
ओमादीशजगन्नाथ सर्वज्ञहृदयेशय ।
तत्राहंयोजयाम्येनं कर्मिणन्त्वत्परायणम् ॥ १ ॥
प्राप्तानुज्ञस्तु शिष्याणां कुर्याद्वैतत्रयोजनम् ।
यत्रयत्रचतत्तेषा मवश्यं शाश्वतम्भवेत् ॥ २३२ ॥

इतिश्रीपांचरात्रे श्रीसात्वतसंहितायां अधिवासदीक्षाविधि
रष्टादशः परिच्छेदः ॥ १८ ॥

## अथ एकोनविंशः परिच्छेदः ।

श्रीनारदः ।

अधिवासाभिधानेयं पूर्वदीक्षाच्युतेन वै ।
कथितासीरिणे विप्रा स्तेनात श्रोदितः पुनः ॥ १ ॥

संकर्षणः ।

देव दीक्षाविधानं च त्वद्वक्त्रकमला दहम् ।
श्रोतु मिच्छामि संक्षेपा द्वैष्णवानां हिताय च ॥ २ ॥

भगवान् ।

एकानेकस्वरूपां वै दीक्षां संसारिण शृणु ।
आसाद्य यां समायान्ति देहान्ते भि [ हि ] तं पदम् ॥ ३ ॥
कैवल्यफलदाप्येका भोगकैवल्यदा परा ।
भोगदैव तृतीया च सर्वेषां सर्वदैव हि ॥ ४ ॥
आचार्येणानता स्वर्गाः कार्या स्वसम्यक्फलाप्तये ।
भक्तिभावानुविद्धानां शिष्याणां भावितात्मनाम् ॥ ५ ॥
वृद्धानां मंगनानां च बालानां भावितात्मनाम् ।
विनाचारसमूहेन दुःशकेन च ता हिताः ॥ ६ ॥
पुरा धिया विचार्यैव ह्युपसर्गेन वै सह ।
तदीय माशयं ज्ञात्वा सम्पाद्यैका महामते ॥ ७ ॥
अथातीतेर्धरात्रेतु उत्थाय शयना द्गुरोः ।
कमण्डलुं समादाय बहि राश्रम्य संविशेत् ॥ ८ ॥
संस्मरे दृश्रत श्चाङ्गं हुतभुग्राशिसन्निभम् ।
तदन्त स्संविशे देवं स्नानमात्रं कृतं भवेत् ॥ ९ ॥
निद्रामोहमलं येन शश्व द्यापाति संक्षयम् ।
शंकू न्वै घटिका स्तत्र रजांस्यक्षतेरण च ॥ १० ॥
समादाय च संस्कृत्य निष्पिष्यादे [धै] र्महीतले ।
शुष्कगोमयसंघृष्टे मण्डलं चतुरोदिसम् ॥ ११ ॥
भद्रत्वपरिरक्षार्थं न्यस्याः कोणेषु शंकवः ।
कमलभ्रमसिद्ध्यर्थ मेकं मध्ये निवेशय च ॥ १२ ॥
ईषन्नयाति वैषम्यं तद्गात्रिसन्धे यदा ।
महानूनाधिके दोष स्तच्छिष्यस्य ततो गुरोः ॥ १३ ॥
अत स्तद्रक्षणीयं च यत्नेन महता सदा ।
निर्धत्य नित्यं प्रत्यूषे पुरा वै स्नानपूर्वकम् ॥ १४ ॥
शिष्य माहूय सम्बोध्य स्वप्नमासि शुभाशुभम् ।
चतुर्मूर्तिवपूहन्तु यथा निःश्वसितन्तु वै ॥ १५ ॥

पश्ये त्पङ्क्तिनिविष्टं च उपविष्टन्तु चोत्थितम् ।
तन्मध्या द्भगवत्तत्व मेकं वा भिन्नलक्षणम् ॥ १६ ॥
प्रादुर्भावसमूहं च तल्लांछनगण श्च यः ।
दैवीयं वनितावृन्दं सर्व मेकतमाथवा ॥ १७ ॥
भवोपकरणव्रात मशेषं वा पृथक्स्थितम् ।
रुद्रेन्द्रचन्द्रसूर्याम्बु हुतभुग्वातलक्षणम् ॥ १८ ॥
पंचरात्रविदो विप्रा आराधनपरायणाः ।
त्रयी मुद्घोषयन्तश्च निगदन्तश्च वा द्विजाः ॥ १९ ॥
यतय श्शुद्धसत्वाश्च सद्ब्रह्मपदसंस्थिताः ।
नगस्रक्चन्दनाद्यानि सुगन्धानि तरूत्तमः ॥ २० ॥
उद्यानवनितारामं वापीहर्म्यमहालयम् ।
फलबीजोषधी सांबु कुम्भो वा पाकनिर्गतः ॥ २१ ॥
गोगजाश्च नदीयानं कन्या चालंकृता शिशुः ।
मंगलयगीति र्मधुरा भेरी वंशश्च वल्लरी ॥ २२ ॥
ससारसं सरः पद्मैः पूर्णं चित्रं सितं ततम् ।
हेमादिधातवो रत्न जालं गोसम्भवानि च ॥ २३ ॥
नवो नेत्र स्सितं शुद्धं वस्त्रवृन्द मनाहतम् ।
राजा पुरोधा स्सामन्तो राजपत्नी च दर्पणम् ॥ २४ ॥
तुरगश्चैव सद्वृष्टि र्महामेघोदयो दिवि ।
शोणितश्चार्द्रमांसानि खप्लुति र्मदिरादयः ॥ २५ ॥
सत्पक्षिमृगसंघात स्सुरार्चा चामरं सितम् ।
एवमादीनि चान्यानि विद्धि सिद्धिप्रदानि च ॥ २६ ॥
स्वप्नानि यान्यनिष्टानि तानि मे लेशत श्शृणु ।
म्लानता क्षितिकम्पश्च उपरागोतिभीषणः ॥ २७ ॥
नीहार उल्कापातश्च निर्घात श्चित्तभंगकृत् ।
गर्तप्रवेशो दृष्यन्नं श्विन्नमांसस्य भक्षणम् ॥ २८ ॥

नर्तनं रथविध्वंस आज्यं स्वांगाद्विजच्युतिः ।
खरोष्ट्रं चोत्कटं हास्यं कपिऋक्षाकुलं वनम् ॥ २९ ॥
स्थानं धूमाकुलञ्चैव मलिताम्बरवेष्टनम् ।
शुष्कत्वं सरिदादीनां प्रतिस्रोतस्त्वमेव च ॥ ३० ॥
पोतयानध्वजछत्र तरुभंगोप्यसिद्धिकृत् ।
अवतारो नगाद्भूमा नग्नत्वं प्रेतदर्शनम् ॥ ३१ ॥
वसाकज्जलतैलाज्यलेपो खरकर्दमे स्थितिः ।
महिषो हि नरः कृष्णो दक्षिणाशागमः क्षुधा ॥ ३२ ॥
लुञ्छनं नखकेशाना मस्थिभंगादिकं द्रुतम् ।
एवमादीनि चान्यानि अशुभानि महामते ॥ ३३ ॥
प्राप्ते शुभाशुभे स्वप्ने प्यभिसन्धाय वै हृदि ।
औत्सुक्या दशिवध्वंसि पूजाहोमं समाचरेद् ॥ ३४ ॥
अथोक्तविधिना देव मवतार्य क्रमा व्रजेत् ।
तर्पयित्वा यथान्यायं पूर्णान्त श्चार्चये त्ततः ॥ ३५ ॥
ईशकोणेथवा सौम्ये पदे यागगृहस्य च ।
मण्डले पूर्वनिर्दिष्टे वृत्ते वा चतुरश्रके ॥ ३६ ॥
स्नातं स्रग्वस्त्रभृच्छिष्यं कृतन्यासं निवेदयेत् ।
निरीक्ष्य ताञ्च संप्रोक्ष्य दर्भै रालभ्य पूर्ववत् ॥ ३७ ॥
संस्कृत्य मूर्तिव त्किन्तु अनुगृह्य धरागतम् ।
आपदा न्मन्त्रहस्तेन परामृश्याथ मूर्धनि ॥ ३८ ॥
मन्त्रहस्तं ज्वलद्रूपं दद्या द्यो दुःखबीजजित् ।
त मादाय करा द्देव धामसन्निकटं व्रजेत ॥ ३९ ॥
कृतात्मनो वामभागे भूप स्सञ्छाद्य लोचने ।
प्रक्षेपये त्तथा साध्यं मञ्जलिं मुक्तलोचनम् ॥ ४० ॥
संपश्ये त्परमं धाम मान्त्र मच्छफलप्रदम् ।
तस्मि न्नवसरे कुर्या न्नाम तस्य यथोचितम् ॥ ४१ ॥

नमस्कारेण मन्त्राणां कार्ये प्राप्ते ह्यनुग्रहे ।
तद्दीप मर्घ्यपुष्पाद्यं यत्किंचिद्यागसाधनम् ॥ ५५ ॥
सुसंस्कृत मसिद्धं वा भक्त्या कर्मण्यतां व्रजेत् ।
अतोन्येषान्तु भक्तानां विहिता यागसाधने ॥ ५६ ॥
सम्यक्सत्वनिवृत्तिः सा ग्दर्शनं प्रोक्षणान्वितम् ।
मूर्तौ वा मण्डलाग्रेतु पुष्पक्षेपं महामते ॥ ५७ ॥
नक्तं वा परिपीडं च व्रतार्थं त्वेकमेवहि ।
एवं संस्कारसंशुद्धं कृत्वा वर्णगणं पुरा ॥ ५८ ॥
सांगेन विभुना कुर्यां त्सप्रायश्चित्ततर्पणम् ।
सदशांशसहस्रन्तु यथा चानुक्रमेण तु ॥ ५९ ॥
गत्वाभ्यर्च्य च कुम्भेशं सूत्र मादाय तत्स्थितम् ।
ऋजुभूतं शिशुं कृत्वा तद्वत्सूत्रं प्रचार्य च ॥ ६० ॥
व्यक्तरूपं च मन्त्रेशं संस्मरे दग्निमध्यगम् ।
पश्ये च्छिष्यौ शिशुं सूत्रे स्वात्मन्यध्वान मञ्जसा ॥ ६१ ॥
तत्राध्यात्मस्वरूपं च संस्मरे न्मन्त्रदेहगम् ।
अधिदैवस्वभावं च तत्स्वात्मन्यवतार्य च ॥ ६२ ॥
अधिभूतमयं सूत्रे त्रिविधं शिष्यविग्रहे ।
मूलमन्त्रावसानेतु सनमस्कं परात्मने ॥ ६३ ॥
पदं कृत्वातु जुहुया दाहुतीनां चतुष्टयम् ।
तथा सूक्ष्मात्मने चोक्त्वा तत स्स्थूलात्मने तु वै ॥ ६४ ॥
सर्वात्मनेच तदनु ततोध्वनिचयं हितम् ।
आपदाग्रा च्छिखान्तं च सर्वं ध्यात्वा स्वदेहगम् ॥ ६५ ॥
यथोद्दिष्टं क्रमेणैव विभिन्नं त्रिविधं त्वपि ।
रचनासन्निवेशो यः क्ष्मादीनां चाधिभूतता ॥ ६६ ॥
बोद्धव्य मधिदैवत्वं सामर्थ्यं यस्य यत् स्वकम् ।
तदधिष्ठातृमन्त्राणा मध्यात्मत्वं विधीयते ॥ ६७ ॥

अथ मार्गद्वयं त्यक्त्वा द्वादशान्तं समाश्रयेत् ।
मूलमन्त्रमयो भूत्वा सम्व्रजे त्स्वधिया ततः ॥ ६८ ॥
ब्रह्मद्वारपदं शैष्यं तत स्तन्मध्यवर्त्मना ।
पार्थिवं पद माक्रम्य कुर्या त्तच्छक्ति मात्मसात् ॥ ६९ ॥
बीजभूतां च हृन्मन्त्र संरुद्धां सन्धिविग्रहाम् ।
नानाण्डबीजसंयुक्ता मनेकरचनान्विताम् ॥ ७० ॥
एव मादाय वै सर्वा बुद्धिनिष्ठास्तु शक्तयः ।
पृथक्पृथक्क्रमेणैव तस्मिन् हृन्मन्त्रसम्पुटे ॥ ७१ ॥
स्वेनाध्यात्मगुणेनैव परेण व्यापकात्मना ।
तद्देहं धारयन्तश्च स्मरे त्तमुभयात्मकम् ॥ ७२ ॥
कालं भोगक्षयान्तं च तत्कालात्तु महामते ।
कृत्वैवं भूतशक्तीनां संहारं शिशुविग्रहात् ॥ ७३ ॥
सौत्रं देह मथाक्रम्य सम्य क्तेनैव वर्त्मना ।
मोक्षसं स्तद्व्रजे त्तत्र व्यञ्जयेत्तु धियादिवत् ॥ ७४ ॥
आदायाध्यात्ममन्त्रांश्च भूतभूतान्विता नथ ।
नित्यै र्ब्रह्मलक्षणै श्शुद्धै स्स्वमन्त्रै स्स्वास्थितानपि ॥ ७५ ॥
अथ सूत्रा द्विनिष्क्रम्य प्रयाया दनलाश्रयम् ।
तत्रावयवसन्धानां मन्त्रसाम्यं समाचरेत् ॥ ७६ ॥
समाहृतानां मन्त्राणां परे सर्वज्ञलक्षणे ।
व्यापके सर्वसामान्ये कृत्वा स्वे स्वे पदे स्थितिम् ॥ ७७ ॥
स्वशरीर मथासाद्य ब्रह्मद्वारेण देशिकः ।
स्रुव मादाय सन्तर्प्य मन्त्रबृन्दं यथोदितम् ॥ ७८ ॥
तत्वबृन्दसमेतं च स्वनाम्ना प्रणवादिना ।
भूयस्संसृष्टियोगेन द्विषट्कपरिसंख्यया ॥ ७९ ॥
पूरकेन समाकृष्य शिष्यं हृत्कमलाद्धृदि ।
अथ व्यक्तिनिरस्तं च क्ष्माबीजं परलक्षणम् ॥ ८० ॥

ज्ञशक्त्या ज्ञानसंरुद्धं कृत्वादायानला हृदि ।
प्रणवासनविश्रान्तं विरिंच्याब्जे तु शैशवे ॥ ८१ ॥
स्मृत्वाथ शिष्यचैतन्य मेकमेव द्विरूपधृक् ।
शक्तिमच्छक्तिभावेन शक्तित्वेनतु संस्मरेत् ॥ ८२ ॥
क्ष्मातत्वान्तर्गतंकुण्डे शक्तिमत्त्वेन तत्पुनः ।
रेचयित्वा स्वनाम्नाच विग्रहे मध्यवर्त्मना ॥ ८३ ॥
नियोज्यतत्समाधौतं जपध्यानैक लक्षणे ।
तदेवपार्थिवंबीजं हृदावै होमकर्मणा ॥ ८४ ॥
सम्यक् तस्योपकारार्थं नेतव्यं सूक्ष्मदेहताम् ।
स्वाहान्तं भोगसिद्ध्यर्थं नमोन्तं मोक्षसिद्धये ॥ ८५ ॥
भोगमोक्षार्थयेचापि तदेवोभयलक्षणम् ।
कर्मणामवसानेतु सम्पादय पदंन्यसेत ॥ ८६ ॥
एवन्तु विग्रहेसूक्ष्मे तद्धृत्पद्म गतस्यच ।
शिरसाचाधिकारात्तु तस्यापाद्य यथास्थितम् ॥ ८७ ॥
शिखामन्त्रेणतद्भोगं निर्वर्त्यशतसंख्यया ।
वर्मणातत्फलप्राप्तिं तल्लयत्वमपिस्मरेत् ॥ ८८ ॥
सुतृप्तिमथनेत्रेण कुर्यात्तेनैवसंस्थितिम् ।
तस्यागश्चास्त्रमन्त्रेण विश्लेषेण युतोभवेत् ॥ ८९ ॥
मूलेनाथगृहीत्वातत् कुर्याच्चैवात्मसात्पुनः ।
तद्वच्छक्ति तदीयांच कुण्डाद्व्यापकलक्षणाम् ॥ ९० ॥
क्ष्मातत्वस्याथवा [ सा ] द्व्यस्य ह्यसा [ ना ] धारस्यशान्तये ।
पूर्वसंख्यन्तुचास्त्रेण कृत्वाहोमं महामते ॥ ९१ ॥
स्रुवमाज्येन सम्पूर्य स्कन्धसूत्रात्तु पार्थिवम् ।
विकर्त्यपूर्णयासार्द्धं विलप्याग्नौ स्वकेपदे ॥ ९२ ॥
मूलमन्त्रेणसहसा हृत्पद्मप्रेरितेनतु ।
स्वदेहाद्रेचकेनाथ मेर्यशक्तिचशैशवम् ॥ ९३ ॥

तयाक्रान्तं मयस्थं च संस्मरे द्व्यक्षिरिक्तया ।
कबिन्दुनेवाब्जपत्र माद्याध्वानंच भावनम् ॥ ९४ ॥
शिष्यदेहेनिरुद्धस्य व्यक्तिकोडी कृतस्यच ।
स्वशक्तिपरिपूर्णस्य क्ष्माबीजस्यस्वथोपरि ॥ ९५ ॥
विरेच्यशक्तिमन्तश्च व्यस्तधर्मेणपूर्ववत् ।
तत्क्षणेबीजसंस्थन्तु अध्वानन्तुयथास्थितम् ॥ ९६ ॥
प्रकाशयन्तंकृपया तन्नाथन्तस्यसिद्धये ।
विरस्तम्भावयेच्छिष्यं चिन्तयेत्तदिदान्धिया ॥ ९७ ॥
इदन्तत्पार्थिवन्तत्वं सुधादैदुःखपंजरम् ।
भावतायं गतंचास्य सुमहत्त्वं च सांप्रतम् ॥ ९८ ॥
कथमत्रत्वहंचासं यस्येमेनततादृमाः ।
विमुक्तःपंजराद्बद्ध स्सुखमास्तेविहंगमः ॥ ९९ ॥
ऊर्ध्वपातीतदारूढ स्त्वेवम्मन्त्रबलाच्छिशुः ।
समूहमर्थविज्ञाप्य तत्प्रभुत्वेनयास्थितः ॥ १०० ॥
सन्निरुद्धो भवेत्त्वस्य सर्वतस्त्वर्यदैवहि ।
युष्मत्प्रसाद सामर्थ्या द्यथावत्पार्थिवोगुणः ॥ १ ॥
देहान्तं गन्धतन्मात्रं भवेदात्मीनमस्यवै ।
सम्यक्त्वंप्रतिपन्नस्य शासनेपारमेश्वरे ॥ २ ॥
हेधराधिपतेनाथ अस्याद्य भञ्जुतियया ।
ध्वलितामोक्षविघ्नानां भवितव्यंचकार्मिणः ॥ ३ ॥
इतिविज्ञाप्यचाज्ञाप्य आपाद्याहुतयःक्रमात् ।
वहशक्त्यासमाकृष्य भूयस्तत्पूरकेणतु ॥ ४ ॥
तद्देहेचामयंबीजं साधारंपूर्ववन्नयसेत ।
कुण्डमध्येनुसन्धाय जीवशक्तिंच पूर्ववत् ॥ ५ ॥
विरेच्य शक्तिमां स्तत्र नियोज्य स्तदनन्तरम् ।
तत्समाधौ यथा पूर्वं कुम्भकेन महामते ॥ ६ ॥

अथान्यं देह मापाद्य होमध्यानादिना परम् ।
तत्राधिकारपूर्वन्तु सर्वं निवर्त्य तस्य वै ॥ ७ ॥
अन्येन सूत्रस्कन्धेन सह पूर्वां निपात्य च ।
आमत्वपदसंयुक्तं तेनाक्रान्तं स्मरे त्तथा ॥ ८ ॥
तत्स्थं मन्त्रसमूहन्तु सह तत्पतिना तु वै ।
पूर्ववच्छ्रावयित्वा च रस माज्ञाप्य गन्धवत् ॥ ९ ॥
मनोवसानं नीत्वैवं तं वर्णाध्वोर्ध्वगोचरम् ।
निष्टांगेन महाबुद्धे तेजसास्त्रेण चेच्छया ॥ ११० ॥
समुद्धृत्याथ वै भागवत वक्तव्यं बुद्धिगोचरे ।
षडध्वमुक्तमूलेन प्राप्तसंज्ञं च तं शिशुम् ॥ १ ॥
तत्वकंचुकनिर्मुक्तं शान्तात्मन्येकतां गतम् ।
स्मृत्वा शक्त्यात्मना भौतु लब्धलक्षं पदे परे ॥ २ ॥
ऐश्वरेणतु बीजेन प्रोक्तसत्वान्वितेन च ।
तत स्संवेद्य निर्मुक्ते समाधौ विनियोज्य च ॥ ३ ॥
नवेत्ति यत्र संलीनं सानन्दं द्वैतमात्रकम् ।
आहुतीनां शतं कृत्वा तदापादनकर्मणि ॥ ४ ॥
नीत्वा समानतां सर्वं तेनैव स्वधिया खिलम् ।
सह संवेद्य जालेन वाक्प्रबन्धं यथा स्थितम् ॥ ५ ॥
निस्तरंगमयो भूत्वा दद्या त्पूर्णाहुतिं पराम् ।
अथास्थितां प्राप्य गुरुः प्रदद्या दाहुतीः पुनः ॥ ६ ॥
बीजनाथेन शिष्यस्य त्वपमोक्षनिवृत्तये ।
पदै रोंकारसंरुद्धैः पदावस्थितमानसः ॥ ७ ॥
सर्वज्ञो भव चोक्त्वैवं जुहुयात् द्वादशाहुतीः ।
भवैवमेव भगव न्निरवद्यो निराश्रयः ॥ ८ ॥
सर्वेश्वर स्सर्वशक्ति स्सुसम्पूर्णो च्युतो वशी ।
व्यापी निरुद्धषाड्गुण्यो निर्विकारो निरञ्जनः ॥ ९ ॥

नित्यो नित्योदितज्ञानो नित्यानन्द स्तुनिष्कळः ।
अनाद्यन्तो ऽनिधनो वासुदेवो विभूतिमान् ॥ १२० ॥
भूत्वैवश्च ततः कुर्या त्पूर्णया पुनरेवहि ।
स्थितं वैभवदीक्षाया म्मुमुक्षो रैश्वरे पदे ॥ १ ॥
यत्रस्थो धाम चाभ्येति ह्यचिरा त्पारमेश्वरम् ।
ईश्वरेच्छावशेनैव देहपाता न्महामते ॥ २ ॥
भोगेच्छोः पद्मनाभीय उभयेच्छोः पदद्वये ।
शक्तिमच्छक्तियोगेन त्वथ बुद्धिमयेध्वनि ॥ ३ ॥
निवेश्यो देहपातान्तं काल मुद्धृत्य तत्पदात् ।
अन्तरूढो यथा काष्ठा त्पावकश्च पृथक्कृतः ॥ ४ ॥
न भूय स्सह काष्टेन साम्य मेति तथा पुमान् ।
योजितो ध्वान्तरे भूयो नैति तन्मयतां ततः ॥ ५ ॥
समाधिमच्युतिं कृत्वा विनिवेश्यात्मनोग्रतः ।
यथावद्रूपदेहस्य स्तस्याध्वाच सितासितः ॥ ६ ॥
संस्थितो य स्त्वभेदेन भिन्नरूपः परात्मनि ।
वेद्यवेदकनिर्मुक्त मच्युतंब्रह्मयत्परं ॥ ७ ॥
तच्छब्दब्रह्मभावेन स्वशक्त्यास्वयमेवहि ।
मुक्तयेखिळजीवाना मुदेतिपरमेश्वरः ॥ ८ ॥
तदव्यक्ताक्षरंविद्धि तन्त्रीशब्दोयथाकळः ।
पृथग्वर्णात्मनायाति स्थितयेनेकधास्वयं ॥ ९ ॥
नोयान्तिनिश्चयंयत्र चातुरात्म्यादनुग्रहात ।
कृतेवेदविदोविप्रा स्त्वेतस्मिन् प्रथमेक्षरे ॥ १३० ॥
सशब्दमूर्तिर्भगवा नभ्येतिचकलात्मना ।
तद्गृह्योयुज्यतेयेन तन्निष्ठानां हि कर्मिणां ॥ १ ॥
नषाड्गुण्यमळोत्थाच यावन्मूर्तिं निरञ्जनम् ।
बद्केनान्यथामूर्तं तद्गृहीतुं नियुज्यते ॥ २ ॥

तत्वाःकलामयास्सर्वे प्रभवाप्ययलक्षणाः ।
पूर्वोक्ता वासुदेवाद्या अद्धयक्षान्तायथोदिताः ॥ ३ ॥
तेभ्योविनिर्गतामन्त्रा स्त्वणिमादि गुणैर्युताः ।
षट्कलांगलवैर्युक्ता येषुसंख्यानविद्यते ॥ ४ ॥
व्याप्तितन्तै स्स्वनिर्माणं तस्याद्यं पदसंज्ञकम् ।
कर्मिणामात्मलाभार्थं मोहार्थंतत्क्षयायच ॥ ५ ॥
द्विस्सप्तभुवनंविश्वं गुणत्रयमयंहियत् ।
तदशुद्धंजगन्नित्यं भोग्यंप्राप्यं पृथक्स्थितम् ॥ ८ ॥
इत्यध्वषट्कमुद्दिष्टं हेयोपादेयलक्षणः ।
भुवनाध्वापदाध्वाच विनातुर्यपदेनतु ॥ ९ ॥
हेयशेषमुपादेयं कर्मिणान्तदपेक्षया ।
व्यपेक्षया प्युपेयश्च हेयपक्षे प्रयातिच ॥ १४० ॥
किन्तुतत्प्राप्त्युपायंवै निस्तरंबेपरेपदे ।
विवेकपदसंस्थस्य दीक्षयासंस्कृतस्यच ॥ १ ॥
विचार्यमाणएवंहि विश्रामोयत्रवैस्फुटम् ।
जायतेतत्परंब्रह्म वासुदेवाख्यमव्ययम् ॥ २ ॥
अम्बरंपरमाणूनां ब्रह्मनामास्पदंयथा ।
तथानाद्यप्रबुद्धानां जीवानांहि निकेतनम् ॥ ३ ॥
विज्ञेयम्भुवनानांच पदानामन्तरंहियत् ।
विनेश्वरेच्छया तेषां मन्त्रावै क्रीडयन्तिच ॥ ४ ॥
मायीयेध्वद्वयेतस्मिन् सुखदुःखमयैःफलैः ।
ईश्वरेच्छानुविद्धानां भक्तानांपरमेश्वरे ॥ ५ ॥
गुरूणांदीक्षितानांच्या प्याराधनरतात्मनाम् ।
भवन्त्यध्वद्वयोर्ध्वस्था मन्त्राश्चाज्ञाप्रतीक्षकाः ॥ ६ ॥
नयन्तिकर्मणस्सम्यक् मायीयाध्वद्वयाद्बलात् ।
स्वस्थानमणिमादीनां भोगानां प्रापयेतुवै ॥ ७ ॥

विरतस्यचतद्भोगात् स्वशक्त्या प्रेरयन्तिच ।
स्वव्यापारवशेनापि तत्वाध्वन्यमृतोपमे ॥ ८ ॥
यन्त्राणीमानिमन्येत तृणानीवचसंस्थितः ।
अनुग्रहपरास्तस्य तत्वाद्यक्षादयोमलाः ॥ ९ ॥
नयन्त्यध्ययतांसम्यक् सत्कलाध्वनिशाश्वते ।
सषाड्गुण्यमयोब्रह्म वासुदेवोऽध्वमूर्तिभृत् ॥ १५०॥
नित्येस्वात्मनिसम्बन्धे शब्दब्रह्माभिधेध्वनि ।
करोति योजनान्तस्य यत्रस्थ स्स्वयमेव हि ॥ १
प्राप्नोति तत्परिज्ञानात् सुशान्तं भगवत्पदम् ।

संकर्षणः ।

देववर्णाध्वविज्ञानं वद किं लक्षणं मम ॥ २ ॥
प्राप्नोति यत्परिज्ञाना दध्वी सद्वासुदेवताम् ।

श्रीभगवान् ।

पञ्चाध्वकोशमुक्तस्य लब्धसत्तस्य चात्मनः ॥ ३
सोनुभूतिपदं याति धरासन्तानरूपधृत ।
भिन्नवर्णमय श्शब्दः पूर्वलक्षणलक्षितः ॥ ४ ॥
सचातुरात्म्यनिचयो विज्ञेयोहि तदात्मना ।
प्रभवाप्ययेयोगेन शब्दभास्वरलक्षणः ॥ ५ ॥
लकारान्तस्त्वकाराच्च हकारा दन्त एव हि ।
प्रभवे द्वादशान्तस्तु भकार श्चतुरात्मनाम् ॥ ६ ॥
अकार स्त्वव्ययेनैव तुल्यतातोनयो स्स्मृता ।
वर्णे व्यूहसमूहेस्मिन् ज्ञेयं ज्ञानसमाधिना ॥ ७
विश्राम उदयो व्याप्ति रराध्वासुच देवताः ।
अनेकैका परिज्ञेया मूर्ति वै त्वेवमेव हि ॥ ८ ॥
युक्ता विश्रामपूर्वेण चतुष्केण समासतः ।
दण्डवत्सन्निवेशेन संस्थिता ह्येव मेवहि ॥ ९ ॥

द्विषट्कं धारणानां च द्वादशाधात्मलक्षणम् ।
सोपानभूतं यत् क्रान्त्वा द्वादशान्तं विशेत्परम् ॥ १६० ॥
नीत्वैवं व्यक्तिभावेन हृत्पद्मोदरसंस्थितम् ।
वर्णाध्वानं दीक्षितस्य शब्दब्रह्मेति यास्थितिः ॥ १ ॥
संसेच्य हुतभुग्भूमिं प्राणीतेनोदकेनतु ।
सह शिष्येण चात्मानं तेनैवाच्छिद्रसिद्धये ॥ २ ॥
पूर्ववद्धूतिना कृत्वा लक्ष्म चाग्निं प्रणम्य च ।
समुत्थाय ततो याया त्तं गृहीत्वाच्युतालयम् ॥ ३ ॥
पूजयित्वा जगन्नाथं निवेद्य नियमा च्छिशोः ।
स्वविशेषान् समासेन सान्तरान्योग्यतावशात् ॥ ४ ॥
यथावदुपदेष्टव्यं तत स्तस्यार्चनं हृदि ।
मुद्रासमन्वितो मन्त्रो न्यासध्यानपुरस्सरः ॥ ५ ॥
इति कर्तव्यता शास्त्र संक्षिप्ता च सविस्तरा ।
तत्समक्षं तत स्तेन सर्वं कार्यं यथास्थितम् ॥ ६ ॥
गुर्वर्चनं ततः कुर्यात् आत्मना ह्ययनादिना ।
पूरयित्वांभसा पाणि मर्घ्यपात्रात्तु दक्षिणम् ॥ ७ ॥
षडंगमन्त्रसंजप्तं क्षेप्तव्यं तस्य मस्तके ।
मण्डलं प्रणवेनाथ पाणौ सूर्यप्रभं स्मरेत् ॥ ८ ॥
तत्राभिन्नं न्यसे त्प्राग्व द्वैभवं देवतागणम् ।
कृत्वा धियार्चितं दद्यात साशिषं तस्य मूर्धनि ॥ ९ ॥
यथोक्ताच्च यथाभीष्ट मचिरादेव पुत्रक ।
तवास्तु वैभवी सिद्धि र्मोक्षलक्ष्मसमन्विता ॥ १७० ॥
इति वैभवदीक्षाया लक्षणं समुदाहृतम् ।
तत्प्रयुक्तस्य सामान्यं सर्वमन्त्रगणस्य च ॥ १ ॥
येन येन हि मन्त्रेण दीक्षा कार्याहि कस्यचित ।
तस्य तस्य तदीयानां पूर्वोद्दिष्टेन वर्त्मना ॥ २ ॥

कार्यो्त्रावयवानान्तु विनियोगो यथोदितः ।
समूहवद्धृदादीनां ज्ञानान्तानां समाचरेत् ॥ ३ ॥
सह तत्वगणेनैव सर्वं मध्यात्मरूपता ।
समभ्यूह्य ततः कुर्यात्प्राग्वदभ्यर्चनन्तु वै ॥ ४ ॥
नेत्रकर्मणि हृद्बीजं पञ्चांगानां विधीयते ।
निरंगानांतु मन्त्राणा मंगमन्त्रोक्तकर्मणाम् ॥ ५ ॥
प्रणवो विनियोक्तव्य स्सहकर्मपदेनतु ।
सम्पाद्य विधिनानेन व्यूहदीक्षार्थिनां सदा ॥ ६ ॥
किन्तु त्रै तत्र योक्तव्यं प्रत्येकास्मिन् हि कर्मणि ।
चतुष्कं वासुदेवाद्यं बीजानां यत्पुरोदितम् ॥ ७ ॥
एवमेवाद्यमन्त्रस्तु निश्शेषः कर्मसंग्रहे ।
योक्तव्यो ब्रह्मदीक्षायां षोढाभक्त्वाच पूर्ववत् ॥ ८ ॥
स्वरूपेण यथावस्थ मुक्ते ष्ववसरेषु च ।
किन्त्वेकवचनेनात्र देवानां प्रार्थना मता ॥ ९ ॥
योजना त्वधिवासोक्ता विज्ञातव्या समासतः ।
नित्यदीक्षाद्वयस्यास्य नान्यन्मोक्षा हते फलम् ॥ ८०१ ॥
तत्रापि चातुरात्मीया दीक्षा त्वाब्जमलेक्षण ।
थला ददाति षाड्गुण्य भोगामि भावितात्मनाम् ॥ १ ॥
फलं स्रक्चन्दनादीनां होमद्रव्यस्य चापि यत् ।
कृत्या सह चाभ्येति विलयं ब्रह्मदीक्षया ॥ १८२ ॥

इति श्रीपांचरात्रे श्रीसात्वतसंहितायाम्
दीक्षाविधि र्नाम

एकोनविंशः परिच्छेदः ॥ १९ ॥

# अथ विंशः परिच्छेदः ।

नारदः ।

दीक्षालक्षणमुक्त्वैवं सिरिणश्चाधिचक्रभृत ।
यथावच्चमुनिश्रेष्ठाः पुनरेवाब्रवीदिदम् ॥ १ ॥
अथमण्ड [ र्ण ] स्यदष्ट [ प्त ] स्य शास्त्रज्ञस्ययथार्थतः ।
तप्ताभ्यां शंखचक्राभ्या मंकितस्य भुजद्वये ॥ २ ॥
सम्यग्धृतोर्ध्व पुण्ड्रस्य दत्तनाम्नश्च मन्त्रिणः ।
समाराधनसक्तस्य पुत्रत्वञ्चगतस्यच ॥ ३ ॥
सिद्ध्यर्थसर्वमन्त्राणा मधिकारायवेतुवा ।
तत्कालंगुरुणाकार्यं यच्छिष्यस्याभिषेचनम् ॥ ४ ॥
भगवद्भक्तियुक्तानां पंचकालरतात्मनां ।
संहितापारगाणांच आचार्याणांचसन्निधौ ॥ ५ ॥
यतीनांबद्धलक्षाणां साधकानां महात्मनाम् ।
अथकुर्याद्गुरुस्सम्य क्चतुरश्रन्तुमण्टपम् ॥ ६ ॥
सर्वोपकरणोपेतं मध्येभद्रासनान्वितम् ।
तस्मिन्कुर्यादनन्ताद्यं सन्धानन्त्वासनोदितम् ॥ ७ ॥
पूजयित्वार्घ्यपुष्पाद्यै स्ततोदेवस्यसम्मुखम् ।
बद्धपद्मासनंशिष्यं तत्रारोप्यकृतांजलिः ॥ ८ ॥
कान्ताभिर्गीयमानन्तु स्तूयमानश्चवन्दिभिः ।
शंखाद्यैर्ध्मायमानन्तु पठ्यमानन्तुमंगळैः ॥ ९ ॥
जपमानंपरम्मन्त्रं ध्यायमानमिवाच्युतम् ।
अष्टांगेनार्चयित्वातु कुम्भमादायवैष्णवम् ॥ १० ॥
सतत्रस्थेनमन्त्रेण सम्यक्सिद्ध्यपेक्षया ।
सहस्रावर्तितंकृत्वा शतावर्तितमेववा ॥ ११ ॥

सिद्धयेद्रुतहेमाभं स्मृत्मातमभिषिच्यच ।
स्वाहान्तम्मन्त्रमुच्चार्य प्लुतंहृत्कमलोदरात ॥ १२ ॥
एवमुक्त्वानमोन्तन्तु ध्यात्वातंस्फटिकामलम् ।
उद्गीर्यंकर्णरन्ध्रेण तस्यहृत्पद्मगंस्मरेत् ॥ १३ ॥
चिच्छक्तिविग्रहंब्रह्म स्वाह्लादानन्दलक्षणम् ।
समारोप्यधियासम्य क्स्वाधिकारन्तुचाखिलम् ॥ १४ ॥
प्रतिपाद्यार्चितंशुद्धं दिव्यभागमसंचयम् ।
शुभमाराधनाधार मक्षसूत्रंचकिंकिणीम् ॥ १५ ॥
स्रुक्स्रुवौयोगपट्टंच शंखचक्रेकमण्डलुम् ।
चमसंसार्घ्यपात्रंच दर्भान्कृष्णाजिनन्नलम् ॥ १६ ॥
पादुकेपादपीठंच च्छत्रमासनदर्पणे ।
मायूरंव्यजनंशुक्लं चामरंभगवद्ध्वजम् ॥ १७ ॥
यथार्हंदण्डसहितं काषायेक्षौमवाससी ।
समुत्थाप्यासनात्सर्वं माहत्यस्नानजंजलम् ॥ १८ ॥
विनिक्षिप्यशुचौस्थाने दैवमभ्यर्च्यवैततः ।
तादर्थ्येनतुसन्तर्प्य पूर्णांतंचाग्निमध्यगम् ॥ १९ ॥
क्षान्त्वापूर्वोक्तविधिना सकुण्डान्मण्डलान्तरात् ।
अर्घ्यपात्रसमूहाच्च बलिदानंसमाचरेत् ॥ २० ॥
सोदकेनचभूताना मोदनेनास्त्रमुच्चरन् ।
बलिम्मण्डलतःकृत्वा यागागाराच्चबाह्यतः ॥ २१ ॥
कृत्वान्तर्बलिदानन्तु प्रादक्षिण्येनवैपुरा ।
अथऊर्ध्वइदंचोक्त्वा शेषन्तन्मण्डलेबहिः ॥ २२ ॥
नमोस्त्वच्युतभूतेभ्य स्सर्वेभ्यस्सर्वदैवहि ।
सदिक्पतिभ्यस्सास्त्रेभ्य श्शान्तिर्नोस्त्वस्यवैशिशोः ॥ २३ ॥
पूजाद्यमुपसंहृत्य दत्ताशिष्टेनपूर्ववत् ।
वृत्तमण्डलमध्येतु सितपद्मोदरेततः ॥ २४ ॥

दत्तशिष्टैर्यजेदेवं सर्वदेवगुरुंप्रभुम् ।
तर्पयित्वाग्निमध्येतु कुर्यात्तस्यविसर्जनम् ॥ २५ ॥
तदीयमथनिक्षिप्य स्नात्वादेवाजलान्तरे ।
करकंवारिसम्पूर्ण मपरंशुभलक्षणम् ॥ २६ ॥
तत्रेष्टावीर्यमन्त्रेण मध्येमन्त्रास्त्रमुत्तमम् ।
मध्वम्बुपयसापूर्ण मादायविनिवेश्यच ॥ २७ ॥
तदस्त्रतोर्घ्यकलशं तन्मध्येस्त्रंचचक्रगम् ।
समभ्यर्च्ययथान्यायं कृत्वाष्टशतमन्त्रितम् ॥ २८ ॥
वषट्पदनिरुद्धेन मूलमन्त्रेणतम्पुनः ।
दद्यात्तदन्तस्तार्णेन प्रागवत् पीयूषधारिणम् ॥ २९ ॥
निर्निद्रीकरणंकुर्यात् सर्वेषांमन्त्रवारिणा ।
तदम्बुधारादानेन ध्यानोच्चारयुतेनच ॥ ३० ॥
संविभज्याथवैतेषां मन्त्रपानं सुधामयम् ।
सुधाद्यस्त्रवरंपश्चा त्स्वमन्त्रं चक्रगंन्यसेत् ॥ ३१ ॥
आदायतत्तोयकुम्भं अस्त्रमन्त्रमुदीरयन् ।
भ्रामयेत्पूर्ववद्धारा मथमध्ये निधायतम् ॥ ३२ ॥
सम्पूर्णमुदकेनैव कृत्वाफलसमन्वितम् ।
गुरुयागमतःकुर्या च्छिष्यःप्रयतमानसः ॥ ३३ ॥
भगवद्यागवद्भक्त्या कर्मणामनसागिरा ।
यागोपयुक्तंसम्भारं तस्मैसर्वंनिवेद्यच ॥ ३४ ॥
सशिरःपाणियुग्मन्तु कृत्वावैचतदंघ्रिगम् ।
क्षान्तव्यस्सुप्रयत्नेन श्रद्धापूतेन चेतसा ॥ ३५ ॥
पंचरात्रविदस्तद्व द्यतींश्च स्नातकादिकान् ।
सम्पूज्यविधिवद्दद्या त्तेषांशक्त्याचदक्षिणाम् ॥ ३६ ॥
संवाहनपरात्कालो लब्ध्वानुज्ञान्तु गौरवीम् ।
भ्रातृभिस्सहचाश्नीयात बहुभिःपूर्वदीक्षितैः ॥ ३७ ॥

तथान्यैर्भगवद्भक्तैः स्सुहृत्सम्बन्धिबान्धवैः ।
व्रजन्तंसहशिष्यैस्तु कालेह्यन्यत्रतत्रवा ॥ ३८ ॥
तदिच्छयाह्यनुव्रज्य निवर्तेताथवैयदा ।
कृत्वातुपादपतनं बहुधासप्रदक्षिणम् ॥ ३९ ॥
आमोक्षात्सर्वसिद्धीनां भक्तानां भावितात्मनाम् ।
परागतिर्गुरुर्यस्मात् प्रसाद्यस्स्मृतएवसः ॥ ४० ॥

इतिश्रीपांचरात्रे श्रीसात्वतसंहिताया मभिषेकविधि र्नाम विंशः परिच्छेदः ॥२० ॥

## अथ एकविंशः परिच्छेदः ।

नारदः ।

भगवानथविश्वात्मा चोदितस्तालकेतुना ।
द्विजप्रधानायत्तन्म आकर्णयतसांप्रतम् ॥ १ ॥

संकर्षणः ।

नियमाः किं स्वरूपास्तु दातव्यादीक्षितस्यच ।
गुरुणाप्रतिपन्नस्य शासनेस्मिन् जगत्प्रभोः ॥ २ ॥

श्रीभगवान् ।

प्रत्येकस्मिन्हिनियमे निर्गतेतु गुरोर्मुखात् ।
प्रब्रूयाद्बाढमित्येवं शिष्यश्शोकाग्निशान्तये ॥ ३ ॥
नाक्रम्यागौरवीच्छाया दैवी यानगतात्वपि ।
गुरुवद्गुरुवर्गश्च द्रष्टव्यो नित्यमेवहि ॥ ४ ॥

शयनासनयानाद्यं तदीयमभिवादयेत् ।
अतन्द्रितस्सदाकुर्या द्व्यापारं तद्गृहेखिलम् ॥ ५ ॥
नासने तत्समक्षंच वस्तव्यं नचदक्षिणे ।
संयन्त्रित स्संयतवाक् तदाज्ञां सम्प्रतीक्षते ॥ ६ ॥
तत्सन्निधौतु नान्येषां प्रत्युत्थानं समाचरेत् ।
कुर्यात्संशय विच्छित्तिं नतदादेशतोविना ॥ ७ ॥
व्याख्यानमागमानांच योगाभ्यासश्चधारणा ।
एवमादिकमन्यच्च स्वगृहे न गुरोर्गृहे ॥ ८ ॥
न शंखचक्रपद्मांके भोक्तव्यं भाजनेतुवै ।
तल्लक्ष्मचोपलंकाष्ठं लोष्टंवाफलकादिकम् ॥ ९ ॥
क्रमणीयंनपादेन कल्पयन्नैवासनात्र्थतः ।
भगवच्छासनज्ञाना माराधनरतात्मनां ॥ १० ॥
यथोचितंयथाशक्ति पूजाकार्यासदैवाहि ।
प्रासादंदेवदेवीय माचार्यं पाञ्चरात्रिकम् ॥ ११ ॥
अश्वत्थश्च वटन्धेनुं सत्समूहं गुरोर्गृहम् ।
दूरात्प्रदक्षिणीकुर्या न्निकटात्प्रतिमांविभोः ॥ १२ ॥
दण्डवत्प्रणिपातैस्तु नमस्कुर्याच्चतुर्दिशम् ।
नयानपादुकारूढो नसोपानत्कपादभृत् ॥ १३ ॥
विनिक्षिप्तमनाभूत्वा संविशेद्भगवद्गृहम् ।
नव्याख्यावसरेकुर्या त्प्रत्युत्थानाभिवादने ॥ १४ ॥
नाभक्तानां नमूर्खानां नास्तिकानां विशेषतः ।
दातव्यस्संप्रवेशश्च नोपहासरतात्मनाम् ॥ १५ ॥
नापूजितं समुद्वाच्यं शासनं पारमेश्वरम् ।
समक्षं नान्यभक्तानां नतत्सन्देह शान्तये ॥ १६ ॥
प्रकाशनीयं तल्लोभा न्नचान्येन कुतोभयात् ।
सुगन्ध फलपुष्पाद्य मपूर्वं मुचितंचयत् ॥ १७ ॥

अभोज्यं गुरुदेवाग्नि निवेदन विवर्जितम् ।
तस्करात्पतिताच्चण्डा द्दम्भलोभसमन्वितात ॥ १८ ॥
मात्रावि [ लुब्धाद्धि ] त्तं न गृह्णीयात् अभक्तादुपचारतः ।
गृहीत्वाभगवद्भिम्बं वृत्त्यर्थमटतीहयः ॥ १९ ॥
नगरापणवीथीषु तस्यदेवलकस्यच ।
दर्शनं स्पर्शनंचैव कुर्यात्संभाषणंनाहि ॥ २० ॥
गायेत्तुभगवद्गाथां योग्रामे नगरान्तरे ।
तम्प्रभुस्तावकंचैव पूजयेच्चैव [?] सर्वदा ॥ २१ ॥
विष्णुव्रतपरंचैव विष्ण्वायतनवासिनं ।
विष्ण्वालाप कथासक्तं विष्ण्वायतनमार्जकम् ॥ २२ ॥
श्रावकंवैष्णवानांच विष्णुधर्मपरायणम् ।
पर्येष्टिकृद्वैष्णवानां मान्योवै विष्णुवत्सदा ॥ २३ ॥
प्रातरुत्थाय चिन्वीयात् स्वारामात्स्वयमेवहि ।
पूजार्थं मन्त्रमन्त्रेण पुष्पादीन् प्रयतस्सदा ॥
याया द्रण्य मथवा निर्बाधं हि तदार्जने ।
अकण्टकद्रुमोत्थाश्च कण्टकद्रुमजा अपि ॥ २५ ॥
हृद्या स्सुगन्धाः कर्मण्या ग्राह्या स्ववर्णसितादयः ।
उग्रगन्धास्त्वकर्मण्या स्सवप्रसिद्धा स्तथैव च ॥ २६ ॥
चतुष्पथशिवावास श्मशानावनिमध्यगाः ।
क्षता अशनिपाताद्यैः क्रिमिकीटसमावृताः ॥ २७ ॥
वर्जनीयाः प्रयत्नेन पत्रपुष्पफलादयः ।
अम्बुजानि सुगन्धीनि सितरक्तानि कानिचित् ॥ २८ ॥
योक्तव्यानि पवित्राणि नित्य माराधकेन तु [ नेतुवै ] ।
सांकुराणि च पत्राणि भूगतान्येव मेवहि ॥ २९ ॥
विहितान्यर्चने नित्यं यथर्तुप्रभवानि च ।
नगृहे करवीराद्यैः कुसुमै रर्चनं हितम् ॥ ३० ॥

विशेषत स्सकामस्य सिद्धिभूतियुतस्य च ।
अतोन्यथा न दोषोस्ति दोष उन्मत्तकादिभिः ॥ ३१ ॥
सद्योहृतानां विहित स्त्व म्लानानां यदा क्रयः ।
प्रदान मम्बुसिक्तानां तेषां कार्यं नचान्यथा ॥ ३२ ॥
निर्दोषतां प्रयान्त्याशु मन्त्रिणा मवलोकनात् ।
भवन्ति भक्तिपूतानि हृन्मन्त्रनिरतात्मनाम् ॥ ३३ ॥
न कांस्यपात्रे भोक्तव्यं न तत्र विनिवेदयेत् ।
देवाय मधुपर्काद्यं तथा वै सति सम्भवे ॥ ३४ ॥
मृण्मयायसपात्रेषु न धूप मपि निर्दहेत ।
धूपार्थं गुल्गुलु स्त्वाज्यो देयश्च सुरभिः परः ॥ ३५ ॥
सह घण्टारवेणैव दीपार्थं परिवर्जयेत् ।
मेदोमज्जातसीतैलं घृतं तैलविमिश्रितम् ॥ ३६ ॥
नाविकं मधुपर्कार्थे दधिक्षीरादिकं शुभम् ।
कौलुत्थः कौलयः कार्ष्णशाल्युत्थो नोदनोहितः ॥ ३७ ॥
नापक्वान्नं न मांसञ्च नारनाळविभावितम् ।
नचाराधनकालेतु समुत्तिष्ठे त्त्वरान्वितः ॥ ३८ ॥
आसमाप्तिक्रियां चैव उपरोधेन केनचित् ।
आधारा द्भगवद्बिम्बा द्भद्रपीठा ज्जलच्युतिः ॥ ३९ ॥
न कार्या कण्टकै र्लोहैः मृदुकूर्चादिना विना ।
नस्नाया न्न स्वपे न्नश्नो न मौनं चाचरे द्गुरोः ॥ ४० ॥
नोच्छिष्टं संस्पृशेत् किंचि न्नाश्नीया द्भगवद्गृहे ।
सन्निकर्षे नचाग्नेस्तु न गृहे मद्यसंकरे ॥ ४१ ॥
भक्तानां कृतदीक्षाणां व्यंगंशा [शा] स्त्रार्थमे [ए] वच ।
नकुर्या त्तैर्जिगीषुस्सन् [ अन्येषां धर्मशास्त्रं च ]
लोभनिर्मुक्तयाधिया ॥ ४२ ॥
शिष्याणां विष्णुभक्तानां नित्यं कुर्याच्च संग्रहम् ।
मानमात्सर्यकार्पण्य लोभमोहादयो ऽ गुणाः ॥ ४३ ॥

वर्जनीयाः प्रयत्नेन [ नेतव्या स्ता नवं सर्वे ]
यावज्जीवावधि क्रमात् ।
अकृत्स्ना दुपसन्नानां देशान्तरनिवासिनाम् ॥ ४४ ॥

इष्टोपदेशः कर्तव्यो नारायणरतात्मनाम् ।
यो नवेत्त्याच्युतं तत्वं पञ्चरात्रार्थ मेव च ॥ ४५ ॥
तथा सद्वैष्णवीं दीक्षां नानाशास्त्रोक्तलक्षणाम् ।
न तेन सह सम्बन्धः कार्यो भिन्नक्रमेण तु ॥ ४६ ॥

न शास्त्रार्थस्य शास्त्राणां बुद्धिपूर्व उपप्लवः ।
आचर्तव्य इहाज्ञानात पारम्पर्यक्रमं विना ॥ ४७ ॥
प्रष्टव्यो भगवद्भक्त आप्तो लक्षणकोविदः ।
प्रसिद्ध आर्जवे वृद्धो नष्टं शास्त्रार्थलक्षणम् ॥ ४८ ॥
मुद्रामण्डलमन्त्राणां निस्सन्देहपरेण च ।
भवितव्यं गुरूणां च सकाशा त्सर्वदैव हि ॥ ४९ ॥

नच सर्वज्ञमन्त्राणां विना भावांशकेनतु ।
आनुकूल्यं गवेष्टव्य म्मुक्त्वा मण्डलदर्शनम् ॥ ५० ॥

नाभिचक्रेतु हृत्पद्मे कन्दमूले गळावटे ।
भ्रूमध्ये ब्रह्मरन्ध्रेच स्थाने ष्वेतेषु मन्त्रराट् ॥ ५१ ॥
स्मर्तव्य स्सूर्यसंकाशः प्रवासे शयने ध्वनि ।
मृगसूकरमांसानि नाद्यान्मीनोत्थितानि च ॥ ५२ ॥

न हंसकच्छपीयानि न शृंगाटफलानि च ।
न तथा पद्मबीजानि न वटाग्रं समारुहेत् ॥ ५३ ॥
छेद्यमानं न तत्पश्ये तद्दळं नांघ्रिणा स्पृशेत ।
पुण्यक्षेत्रं महातीर्थं सिद्धाश्रम मनुत्तमम् ॥ ५४ ॥
वैष्णवीं पर्षदं वापि व्यक्तिस्थानं तथाच्युतम् ।
आसाद्य मण्डलं कृत्वा चक्रं वा द्वादशारकम् ॥ ५५ ॥

निर्वाहणीयं विधिवत् चातुर्मास्यं महामते ।
गृहे संयमपूर्वं वा क्रमं कृत्वा तु कुञ्ज्यगम् ॥ ५६ ॥
चतुर्विधेन रजसा प्रतिमाया अथाग्रतः ।
संयुक्तानपि पूर्वोक्तैः एतांश्च समयान् सदा ॥ ५७ ॥
निर्वाहकाणां भक्तानां प्रयच्छेत्सततं गुरुः ।
ज्ञात्वा निर्वाहकं भक्तं तस्यादौ देशिकेनतु ॥ ५८ ॥
समुद्दिश्यास्तु ते सर्वे निर्वहत्यथ येषु वै ।
तेषु तेषु नियोक्तव्यो यथा न च्यवते पुनः ॥ ५९ ॥
धावन्ति समयघ्नस्य सविघ्नास्तु विनायकाः ।
विमुखा स्सिद्धयो यान्ति ह्यापदो हि भवन्ति च ॥ ६० ॥
ज्ञात्वैवं सावधानेन निर्वक्तव्यं हितान् प्रति ।
सार मादाय वै बुद्ध्या निर्मथ्य नियमोदधिम् ॥ ६१ ॥
कृपया गुरुणादेय मशठानांतु पंचकम् ।
भक्ति रग्नौ गुरौ मन्त्रे शास्त्रे तदधिकारिणि ॥ ६२ ॥
नियतं पंचकं चास्य यथावत्परिपालनात् ।
अनुष्ठानात्तु नान्येषां स्वातन्त्र्येण यथेच्छया ॥ ६३ ॥
भव्यानां मनसोभीष्टाः प्रवर्तन्तेहि सिद्धयः ।
ये ऽ निर्मलेन मनसा उपरोधात्तु कुर्वते ॥ ६४ ॥
पालनं समयानां च ते मज्जन्त्यसितेध्वनि ।
सुप्रसन्नेन मनसा यथैतत्परिपाल्यते ॥ ६५ ॥
तथा प्रसाद मभ्येति स्व आत्मातु हितैषिणाम् ।
नूनं कालुष्यमुक्तानां स्थिताना मिह सत्पथे ॥ ६६ ॥
समये साधकाचार्यपुत्रकाणां भवेत् शुभम् ॥ ६६½ ॥

इति श्रीपांचरात्रे श्रीसात्वतसंहितायां
समयविधि र्नाम
## एकविंशः परिच्छेदः ॥ २१ ॥

# अथ द्वाविंशः परिच्छेदः ।

संकर्षणः ।

लक्षणं ज्ञातु मिच्छामि चतुर्णां देव सांप्रतम् ।
विज्ञातव्यास्तु कै र्लिंगैः भेद स्तेषां तु किंकृतः ॥ १ ॥

श्रीभगवान् ।

दश्रीमान् श्रद्धधानस्तु मतिमान् सुदृढव्रतः ।
सत्यवाक् भगवद्भक्तो मिताशी संगवर्जितः ॥ २ ॥
गुर्वाराधननिष्ठस्तु स्थिरबुद्धिरतन्द्रितः ।
सद्वैष्णवकुले जात स्तु संस्कारै स्सुसंस्कृतः ॥ ३ ॥
पुरामाता पितृभ्यान्तु नीतस्सद्योग्यतापदम् ।
विमुक्तसंकरोदान्तः परत्रभयशंकितः ॥ ४ ॥
साधुसंगमसाकांक्ष श्शास्त्रार्था स्वादलम्पटः ।
तत्संचय व्यसनवा न्धार्मिकाणां पथि स्थितः ॥ ५ ॥
शुभकर्मरतो नित्य मदीनस्सत्ववान्क्षमी ।
धीरोदयापरश्चैव साधूना मुपकारकृत् ॥ ६ ॥
निर्मलाम्बरधारीच विमलांगस्सदैवहि ।
प्रियभाषी प्रसन्नास्यः परद्रव्ये ष्वलोलुपः ॥ ७ ॥
परदार स्पृहामुक्त स्सद्विवेक पदाश्रितः ।
क्षत्रविट् छूद्रजातीयो मद्यमांसे ष्वलम्पटः ॥ ८ ॥
शौचस्वाध्यायनिरत स्सन्तुष्ट स्सततोद्यतः ।
उच्छिष्टवर्जनपर श्चकृतघ्न तनुस्सदा ॥ ९ ॥
मानमात्सर्यकार्पण्य परित्यागपरोमहान् ।
दैवेपित्र्येसदोद्युक्तो दम्भाचार विवर्जितः ॥ १० ॥

निश्शेषाणा मकर्मण्य द्रव्याणां परिहारकृत् ।
मातु र्जनकनिष्ठानां सद्बन्धूनांच वत्सलः ॥ ११ ॥
उक्तनिर्वाहकश्चाभी र्नित्यंनीचासनप्रियः ।
सर्वेषामूर्ध्वतोनित्यं स्थितिकामपरायणः ॥ १२ ॥
वंशोद्धारैकरतया सुधियालंकृतस्सदा ।
गुरुप्रसादादन्यत्र स्वगृहेवागुरोर्गृहे ॥ १३ ॥
लब्धदर्शनमात्रो वै मन्त्रमूर्तेस्तुमण्डले ।
गुरुदृग्वीक्षणेनैव प्रोक्षणेनेवसंस्कृतः ॥ १४ ॥
बुद्ध्यतेतावताचैव कृतार्थोस्मीति सांप्रतम् ।
ततःप्रभृतिकालाच्च सुप्रसन्नाच्च देशिकात् ॥ १५ ॥
पाठपूर्वंहिशास्त्रार्थ मभ्यर्थयति योनिशम् ।
श्रुत्वाविचारयत्यर्थां नेकान्तेविजनेस्थितः ॥ १६ ॥
नाभिमानपदंयाति सुसम्पूर्णोपिचोदितः ।
शिक्षयत्यथनान्येषां लुब्धस्स्वार्थस्य सिद्धये ॥ १७ ॥
नोद्ग्राहयतिशास्त्रार्थ मभ्यर्थयतियोनिशम् ।
नविक्रियामवाप्नोति ह्याक्षिप्तोप्यथसंसदि ॥ १८ ॥
नमन्यतेतदासम्य ग्विजेष्यामीति वादिनः ।
कुण्डमण्डलमुद्रासु पीठबिम्बालयेषुच ॥ १९ ॥
समन्त्रेषुच बुद्धिस्थं नित्यंकुर्याच्च संग्रहम् ।
अयनादिषुकालेषु प्रत्यहं त्वस्यसम्भवात् ॥ २० ॥
देवमर्चापयेत्कुर्यात् स्वयंवामान्त्रमर्चनम् ।
गुर्वादिष्टो गुरूणांच कुर्यात्पादाभिवन्दनम् ॥ २१ ॥
कार्यातेषांनजिज्ञासा यथायात्म्यप्रसन्नताम् ।
प्रसाद्यविधिवत्पृच्छे दबुद्धमथविस्मृतम् ॥ २२ ॥
विज्ञातमथवाज्ञात माचार्यैःपरिचोदितः ।
कल्मषांतेषां स्वकांमुद्रां गुप्तांकृत्वा प्रकाशयेत् ॥ २३ ॥

संस्कृतश्रुतपाठाभ्यां स्वगुरुंप्रार्थयेत्ततः ।
भगवद्यागपूर्वन्तु पुत्रकाख्यंपरम्पदम् ॥ २४ ॥
असन्निधानात् स्वगुरोः प्रार्थयेत्तत्प्रतिष्ठितम् ।
तदभावात्तवैष्णान्यं क्रमात्सद्वैष्णवोद्दियः ॥ २५ ॥
नान्यदर्शनसंस्थन्तु गुरोर्यस्माद्वैष्णवात् ।
कर्मतन्त्रंसमन्त्रंच द्रव्यसंघातजम्फलम् ॥ २६ ॥
नूनंवैफल्यमायाति तस्मात्तंपरिवर्जयेत् ।
द्रव्यमन्त्रक्रियाभाव भेदात्फलमनश्वरम् ॥ २४ ॥
जायतेकर्मिणांशश्व द्भेदाद्वैश्यकर्मिणाम् ।
सर्वत्रसमबुद्धीना मात्मन्यभिरतात्मनाम् ॥ २५ ॥
लोकाचारवियुक्तानां यज्ञविग्राहिणान्तुवै ।
ज्ञात्वैवंसहवैयस्य सम्बन्ध स्सफलोभवेत् ॥ २६ ॥
सर्वदासउपास्तव्य इहामुष्मिकसिद्धये ।
लिंगैरेतैःपरिज्ञेय स्सहजोत्थैरकृत्रिमैः ॥ २७ ॥
आचार्यैस्समयीनाम शिष्योजात्याच्चतुर्विधः ।
एवंपुत्रकपूर्वाये परिज्ञेयास्तुतेत्रयः ॥ २८ ॥
किन्तुतस्यविशेषोय स्तमिदानींनिबोधतु ।
विज्ञातागुरुणायस्य विनियोगात्कृतार्थता ॥ २९ ॥
स्वल्पमद्ध्योत्तमाधेन शिक्षितेनागमेनच ।
तस्यानुग्रहबुध्यातु आभू [ हू ] तस्याच्युतालये ॥ ३० ॥
कृत्वानिरीक्षणाद्यञ्च देवधाग्नि वदेत्स्वयम् ।
तुष्टोमन्त्रमयंसम्यक् सार्घ्यपुष्पाक्षतांजलिः ॥ ३१ ॥
ततःप्रभृतिकालाच्च ध्यानंन्यासादिकंविना ।
पूजनंमन्त्रमात्रेण वह्नितर्पणवर्जितम् ॥ ३२ ॥
योग्यतापदसिद्ध्यर्थं दत्तम्विम्बेप्सुवास्थले ।
सामान्यविधिनाचोक्तो गुरुणाचार्चयाच्युतम् ॥ ३३ ॥

सतथेतितदुक्तश्च मत्तस्वेमुदितस्सदा ।
आलोचयंस्तु शास्त्रार्थं स्वमुद्रामुद्रितन्तुवै ॥ ६४ ॥
शक्त्यानिरीक्षमाणश्च योगक्षेमादिकं गुरोः ।
तदाराधननिष्ठस्तु तच्चित्तस्तत्परायणः ॥ ३५ ॥
क्षमाक्षिप्तस्तदादेशा न्मन्त्रमुद्राद्धयंधिना ।
कीर्त्यर्थंस्वगुरोर्ब्रूयात् ज्ञातंशास्त्रार्थ मुत्तमम् ॥ ३६ ॥
विचार्यस्वधियासम्य ग्वैष्णवानां हि संसदि ।
यथानैतिजनानांच मध्ये मात्सर्यभूमिताम् ॥ ३७ ॥
सशिष्यःपुत्रकोनाम स्वपुत्रादधिकस्सदा ।
साधकाख्येविशेषेय स्त मिदानींनिबोधमे ॥ ३८ ॥
पूर्ववं लब्धदीक्षस्तु मन्त्राराधनतत्परः ।
स्नानादिना खिलेनैव देवभूतेन कर्मणा ॥ ३९ ॥
सिद्धये स्वात्मन श्चैव लोकानां सा [ रा ] धनाय च ।
वने वा यतनोद्देशे स्वगृहे वा मनोरमे ॥ ४० ॥
मन्त्रसेवार्घ्यदानं च कुर्या न्मन्त्रव्रतं महत् ।
परमः पालनीय श्च तेनैव समय स्सदा ॥ ४१ ॥
यदतीवच संलब्धं यच्छक्त्यानन्द मात्मनि ।
तदाश्चर्यं न वक्तव्यं पूजापूर्वं गुरो विना ॥ ४२ ॥
आत्मीयमुद्रासंयुक्तो नित्योद्युक्त स्स्वकर्मणि ।
श्रद्धया य स्सबोद्धव्य स्साधको भगवन्मयः ॥ ४३ ॥
लिंगैः पूर्वोदितै र्युक्त स्त्वभियुक्तो विशेषतः ।
अनुग्रहार्थं गुरुणा भक्तानां विनियोजितः ॥ ४४ ॥
पदानि पदमन्त्राणां सार्थकानि च वेत्ति यः ।
वाच्यवाचकभावेन सांगनांगवशेन वा ॥ ४५ ॥
करविग्रहकल्हार चक्रन्यासार्थ मेव च ।
समेन विषमेणैव सकृ च्छिन्नादिकेन च ॥ ४६ ॥

तेषा मर्थवशा च्चैव विनियोगं हि वस्तुषु ।
ध्यानदैवतविज्ञाना द्व्यापकत्वन्तु चाध्वनि ॥ ४७ ॥
निर्लिंगं देवतानां च शब्दब्रह्मत्व मेवहि ।
यथावदनुजानाति स्ववर्णैः प्रागुदीरितम् ॥ ४८ ॥
सांकर्य मागमानां च वेत्ति वाक्यवशात्तु यः ।
तत्र वै त्रिविधं वाक्यं दिव्यं च मुनिभाषितम् ॥ ४९ ॥
पौरुषं चारविन्दाक्ष तद्भेद मवधारय ।
यदर्थाढ्य मसन्दिग्धं स्वच्छ मल्पाक्षरं स्मृतम् ॥ ५० ॥
तत्पारमेश्वरं वाक्य माज्ञासिद्धंहि मोक्षदम् ।
प्रशंसकं हि सिद्धीनां सम्प्रवर्तक मप्यथ ॥ ५१ ॥
सर्वेषां रंजकं गूढं निश्चयीकरणक्षमम् ।
मुनिवाक्यन्तु तद्विद्धि चतुर्वर्गफलप्रदम् ॥ ५२ ॥
अनर्थक मसम्बद्ध मल्पार्थं शब्दडम्बरम् ।
अनिर्वाहक माद्योक्तं वाक्यं तत्पौरुषं स्मृतम् ॥ ५३ ॥
हेयं चानर्थसिद्धीना माकरं नरकावहम् ।
प्रसिद्धार्थानुवादं यत संगतार्थं विलक्षणम् ॥ ५४ ॥
अपिचे त्पौरुषं वाक्यं ग्राह्यं तन्मुनिवाक्यवत् ।
एव मादेय वाक्योत्थ आगमो यो महामते ॥ ५५ ॥
सन्मार्गदर्शनं कृत्स्नं विधिवादं च विद्धि तम् ।
तत्प्रामाण्यात्तु यत्किंचित् समभ्यूह्य यथार्थतः ॥ ५६ ॥
पूर्वापराविरोधेन निर्वाहयति सर्वदा ।
भक्तानां चोदित स्त्वेवं पदवाक्यप्रमाणवित् ॥ ५७ ॥
स्वमुद्रालंकृतश्चापि य स्सदा चक्रधृक्चरेत् ।
स देशिको निबोद्धव्य स्सर्वै स्सर्वाधिको गुणैः ॥ ५८ ॥
वेदयत्यन्यथात्मानं योन्यस्मिन् योजितं पदे ।
कृत्वापेक्षान्तु हृदये स याति नरकेधमः ॥ ५९ ॥

नो भाजनं स्यात सिद्धीनां क्रमत्यागे कृते सति ।
स्व माचारं स्वकां जातिं स्वगोत्रं स्वगुरो र्गृहम् ॥ ६० ॥
स्वपदं च स्वसंस्कारं प्राङ् निषिद्धेन वै विना ।
गोरय त्यचिरा द्यो वै पातित्य मुपयाति सः ॥ ६१ ॥
तस्मा च्छ्रेयोर्थिना नित्यं नाभिमानं न तत्क्षयात् ।
अधरोत्तरता सम्य गाचर्तव्या च कुत्रचित् ॥ ६२ ॥

संकर्षणः ।

मुद्राचतुष्टयं देव कीदृग्लक्षणलक्षितम् ।
ज्ञायते यत्परिज्ञाना देशिकान्तं चतुष्टयम् ॥ ६३ ॥

भगवान् ।

यत्पूर्वन्तुहरेः प्रोक्तं शिरोमुद्रादिपंचकम् ।
तदंगुष्ठविनिर्मुक्तं विद्धि न्यूनांगुलैः क्रमात् ॥ ६४ ॥
चतुष्टयं चतुर्णान्तु गुर्वन्तानां यथास्थितम् ॥ ६४½ ॥

इति श्रीपांचरात्रे श्रीसात्वतसंहितायाम्
अधिकारिमुद्राभेदविधि र्नाम

द्वाविंशः परिच्छेदः ॥ २२ ॥



## अथ त्रयोविंशः परिच्छेदः ।

नारदः ।

कामपालेनदेवेश स्त्वथब्राह्मणसत्तमाः ।
चोदितोयत्तदधुना कथयामिसमासतः ॥ १

संकर्षणः ।

ज्ञातोविभवदेवानां देवबीजगणोमया ।
अधुनाज्ञातु मिच्छामि तत्पिण्डनिचयोह्ययः ॥ २ ॥

श्रीभगवान् ।

यथाक्रमोदितानांच देवानांविनिबोधतु ।
पिण्डमन्त्रगणंमत्त स्सावधानेनचेतसा ॥ ३ ॥
नाभेरष्टमबीजंयत् स्थितन्तत्सप्तमोपरि ।
तदधश्चोत्तरंचाक्षा दरान्तेनविभूषयेत् ॥ ४ ॥
अथोत्तरंचाक्षदेशा दादायतदधोन्यसेत् ।
बीजंनेमेर्द्वितीयंयत् पद्मयांमद्ध्येतदासने ॥ ५ ॥
आधारषष्ठंसंरूढं कुर्याद्वैनाभिसप्तमम् ।
अरात्षष्ठस्यचोर्ध्वेतु नाभिपूर्वन्तुविन्यसेत् ॥ ६ ॥
सप्तमंचाष्टमंचापि ह्युपर्युपरिवैक्रमात् ।
अथाष्टमंनाभिदेशा दारूढंसप्तमोपरि ॥ ७ ॥
तदधोमध्यमंचाक्षनवमंपरिकीर्तितम् ।
भूयोरात्पंचम [ त ] स्योर्ध्वे दद्यान्नाभितृतीयकम् ॥ ८ ॥
बाह्यात्तृतीयन्तन्मूर्ध्नि पिण्डोयंदशमस्स्मृतः ।
द्वितीयंनाभिदेशाच्च तत्तृतीयंतदूर्ध्वगम् ॥ ९ ॥
नेमेराद्यन्तमूर्ध्वेतु स्मृतमेकादशंत्विदम् ।
अधोनाभिचतुर्थस्य सप्तमंविनिवेश्यच ॥ १० ॥
तदधोनेमिपूर्वन्तु एतद्द्वादशमंस्मृतम् ।
नेमेस्त्रिदशमादाय तदधोयोजयेत्क्रमात् ॥ ११ ॥
सप्तमं च चतुर्थं च पुन र्नाभे र्महामते ।
अरा ष्षष्ठासना स्सर्वे पिण्डमेत्त्रयोदशम् ॥ १२ ॥

नाभे श्चतुर्थ मादाय तदूर्ध्वे सप्तमं न्यसेत ।
नवमं चापि तन्मूर्ध्नि एत द्विद्धि चतुर्दशम् ॥ १३ ॥
नेमे श्चतुर्थसंख्यस्य ऊर्ध्वाधोभ्या न्निवेश्य च ।
वर्ण नाभिद्वितीयं तत् तत्पंचदशमं स्मृतम् ॥ १४ ॥
यद्विंशसंख्यकं बाह्या दादाधाराख्यमण्डलात् ।
शान्तिमेन च षष्ठेन वृत्तमायादनन्तरम् ॥ १५ ॥
नेमेस्सप्तमवर्णस्य ऊर्ध्वाधोभ्या न्निवेश्यच्च ।
नाभिदेशा द्वितीयं य द्विद्धि सप्तदशन्तु तत ॥ १६ ॥
नवमं नाभिदेशाच्च सप्तमस्योपरि न्यसेत् ।
यथाष्टमं नाभिदेशा त्कुर्या त्सप्तममूर्ध्वगम् ॥ १७ ॥
द्वितीयमपि तस्याथ तस्मा द्वै नाभिमण्डलात ।
अस्य त्रयोदशा दूर्ध्वे न्यूनविंशतिमन्तु तत् ॥ १८ ॥
नाभे श्चतुर्थं तस्योर्ध्वे तत्तृतीयं तदूर्ध्वगम् ।
तत्रैव सप्तमं य द्वै विद्धि विंशतिमं त्विदम् ॥ १९ ॥
द्वितीयस्याष्टम न्नाभे वर्णस्योर्ध्वे नियोज्य च ।
अरा त्षष्टं च तस्याधः कुर्या त्तदनु लांगलिन् ॥ २० ॥
नवमं नाभिदेशाच्च तृतीयस्योपरि न्यसेत् ।
द्वितीयं तदधः कुर्या त्त्रयोविंशतिमं स्मृतम् ॥ २१ ॥
अष्टमं सप्तमं नाभे द्वितीयं प्रथमं ततः ।
क्रमेण योजये च्चैव अरा त्षष्टस्य मूर्धनि ॥ २२ ॥
नेमे स्सप्तम मादाय तदधो नाभिसप्तमम् ।
तत्तृतीयं च तस्याधः चतुर्विंशतिमं स्मृतम् ॥ २३
नाभे स्तृतीयं तस्योर्ध्वे द्वितीयं तस्यचोपरि ।
निवेश्य नेमिपूर्वन्तु षड्विंश मधुनोच्यते ॥ २४ ॥

अरा त्पष्ठासनं कुर्यां द्वर्णनाभितृतीयकम् ।
तदूर्ध्वं सप्तमं चैव अतोन्य मवधारय ॥ २५ ॥
न्यूनं षड्विंशतिं नेमे स्तस्योर्ध्वाधोगतं न्यसेत् ।
सप्तमं नाभिवर्णेभ्य स्स्वरवर्गाच्च पंचमम् ॥ २६ ॥
नेमे राद्यद्वितीयं च आदाय तदधो न्यसेत् ।
मध्यमक्षा न्महाबुद्धे रष्टाविंशतिमं स्मृतम् ॥ २७ ॥
नवमं सप्तमं नाभे स्तृतीयं च तृतीयकम् ।
अथोत्तरस्थ मक्षाच्च आदाय तदधो न्यसेत् ॥ २८ ॥
तृतीयं च द्वितीयं च नाभिदेशा दनन्तरम् ।
नाभिद्वितीय मादाय सप्तमं तुर्यमेव च ॥ २९ ॥
तृतीयस्याथ वै नाभे र्बाह्या दाद्यं तु मूर्धगम् ।
अक्षमस्याथ वै नाभे रध ऊर्ध्वं द्वितीयकम् ॥ ३० ॥
दद्या तदन्वरा त्पष्ठं तस्यैवाधोगतं तु वै ।
अरा त्पष्ठस्य चोर्ध्वंतु नाभिपूर्वं च तत्परम् ॥ ३१ ॥
विनिवेश्याष्टमं चापि षट्त्रिंश मवधारय ।
सप्तमं च तृतीयं च चतुर्थं नाभिमण्डलात् ॥ ३२ ॥
योजयित्वा तदूर्ध्वं चाप्यराणां त्रिदशं न्यसेत् ।
अथवा नवमं नाभे स्तृतीयं च द्वितीयकम् ॥ ३३ ॥
तत्सप्तत्रिंशकं विद्धि नाभिदेशा दथाहरेत् ।
अरा त्पष्ठासनं पूर्वं द्वितीयं च तदूर्ध्वतः ॥ ३४ ॥
नवमं चापि तस्योर्ध्वं पिण्डास्त्वद्यादिमं विना ।
अरान्ताद्येन वै मूर्ध्ना सर्वे कार्या ह्यलंकृताः ॥ ३५ ॥
नमोन्ताः प्रणवाद्याश्च युक्ता स्संज्ञापदै स्स्वकैः ।
अरान्ताद्यं विना यस्य य ऊर्ध्वं वर्धते स्वरः ॥ ३६ ॥
अधोवानाभिपूर्वेण सहसा केवलं हितम् ।
अपास्य च ततः कुर्यां त्सर्वेषां पूजनाय च ॥ ३७ ॥

स्वेन स्वेनतु पिण्डेन बिह्मवच्चांगकल्पनम्।
नमः प्रणवसंज्ञास्याः जातिं कर्मवशा त्पुनः॥ ३८ ॥
आतदुक्तात्तु यजनात मोक्षनिष्ठ स्समाचरेत्।
बीजपिण्डपदोत्थानां विनियोगन्तु चाखिलम्॥ ३९ ॥
किन्त्वेषां वैभवी मुद्रा देवाराधनकर्मणि।
तदंगमुद्रा श्चांगानां योज्या मन्त्रै स्स्वकै स्सह॥ ४० ॥
... ... ... ... स्त्रैह्ममन्त्रोदितं मया।
दीक्षापूर्वं हि मन्त्राणां चातुर्वर्ग तथासनम्॥ ४१ ॥
लक्षणं पदमन्त्राणा मथेदानीं निबोधतु।
यै विना लब्धसत्ताना मर्चनं हि न जायते॥ ४२ ॥
विश्वातीताय विमलपदं विद्याविधायिने।
पद्मनाभाय वै विश्वव्यापिने तदनन्तरम्॥ ४३ ॥
चतुर्विंशाक्षरं विद्धि एतत्संख्यं परं श्रृणु।
ज्योतीरूपाय पंचार्णं पदं गगनमूर्तये॥ ४४ ॥
ध्रुवाय दद्या त्तदनु परमन्त्रयक्षरं ततः।
पदप्राप्तिचतुर्वर्णं हेतवे त्र्यक्षरं त्विति॥ ४५ ॥
अनन्ताय पदं दद्या त्ततो परिमिताय च।
सर्वाश्रयाय तदनु तदन्ते धृतशक्तये॥ ४६ ॥
एतद्विंशतिसंख्यं च द्वाविंशं क्रमत श्श्रृणु।
नमो भगवते कृत्वा वासुदेवाय वै ततः॥ ४७ ॥
सर्वशक्त्यात्मने नन्तमूर्तयेतु पदं त्विति।
विद्ध्या [ द्या ] त्मने महाशब्दं पुरुषाय पदं ततः॥ ४८ ॥
मोहमायापदं चैव ततो विध्वंसिने तु वै।
सदोदिताय शब्दं तु सर्वशक्ति पदं ततः॥ ४९ ॥
नियोक्तव्यं चतुर्वर्णं सप्तविंशाक्षरं स्मृतम्।
पदं वेदविदे विश्वव्यञ्जकाय ततो भवेत्॥ ५० ॥

तदन्ते विश्वपतये ततो वै परमात्मने ।
एष विंशतिभि र्वर्णैः शृणु सप्तदशाक्षरम् ॥ ५१ ॥
ज्ञानात्मने पदं कुर्यात संविच्छब्द मतः परम् ।
पदं प्रकाशाशयाय शान्तरूपाय वै ततः ॥ ५२ ॥
अनन्तशक्तयेसर्व व्यापिनेतदनन्तरम् ।
जगन्मयायतदनु विश्वरूपायवैपदम् ॥ ५३ ॥
एकविंशतिभिर्वर्णै रयमुक्तोपरंशृणु ।
सत्वसत्वपदमादाय गुहाशयपदंततः ॥ ५४ ॥
ततःपरमहंसाय ततोमानसचारिणे ।
न्यूनविंशत्यक्षरश्चैवा थातोयज्ञमूर्तये ॥ ५५ ॥
पदमादायतदनु विश्वान्तर्वर्त्तिनेतुवै ।
ततोभुवनशब्दन्तु वराहायपदंत्वथ ॥ ५६ ॥
विभूतिस्वामिनेचेति चतुर्विंशाक्षरस्त्वयम् ।
नमोभगवतेदद्या ततोवै [ वासवादये ] वामबाधिये ॥ ५७ ॥
जडजलेन्धनपदं प्रदीप्तपदमेवतु ।
वीर्यायफट्तदन्तेतु एतस्संख्यस्त्वयंस्मृतः ॥ ५८ ॥
सर्वान्तश्चारिणेदद्यात प्रसन्नपदमेवच ।
मूर्तयेथतदन्तेवै दद्याद्धर्मात्मनेपदम् ॥ ५९ ॥
षोडशाक्षरमेतद्वै अतोगुह्यतमंशृणु ।
सर्वविद्येश्वरायाथ दद्याद्वाक्पतयेततः ॥ ६० ॥
पदम्पदपदादाय ? [ विदेद्द्यात् ] ततोवाग्विभवेत्विति ।
न्यूनविंशाक्षरोह्येष स्तवपरंकथयामिते ॥ ६१ ॥
योगैश्वर्यप्रदायाथ योगनिद्रारसेतिच ।
निरतायपदंदद्या द्भगवानूजलशायिने ॥ ६२ ॥
त्रिरष्टवर्णसंख्यश्च अयमेकाधिकस्तुवै ।
भगवत्पदमादाय अनन्तबलशक्तये ॥ ६३ ॥

तेजोमयायभुवन भूतेथद्व्यक्षरंपदम् ।
तदन्तेविनियोक्तव्यं पदंवैकच्छपात्मने ॥ ६४ ॥
षड्विंशार्णमिमंविद्धि मन्त्रंमन्त्रविदांवर ।
यज्ञांगदेहायाद्याय महापदमतःपरम् ॥ ६५ ॥
वराहायततोदद्यात् पुराणपुरुषायवै ।
दद्यात्ततःप्रजाशब्दं तदन्तेपतयेपदम् ॥ ६६ ॥
चतुर्विंशाक्षरंमन्त्र मेतन्मन्त्रविदांवर ।
नमोभगवतेकृत्वा नारसिंहायवैततः ॥ ६७ ॥
तेजोनिधेपदंदद्यात् पदंहनहनेतिच ।
ततोविकर्मजाद्यंवै शब्दंपश्चाक्षरंभवेत् ॥ ६८ ॥
दुष्कृतंहितदन्तेवै सप्तविंशाक्षरस्त्वयम् ।
आदायामृतमूर्तेवै ततोज्ञानबलात्मने ॥ ६९ ॥
सर्वेश्वरायभगव न्नूनविंशाक्षरस्त्वयम् ।
आदायपुण्डरीकाक्ष पदंवैपरमेश्वर ॥ ७० ॥
ततस्सकलशब्दन्तु सुखसौभाग्यवैपदम् ।
निधयेवांछितपदं ततस्सिद्धिप्रदेतिवै ॥ ७१ ॥
पदश्चाखिलदुःखेति ततस्तुशमनाय्ये ।
आनन्दसुन्दरपदं ततोलक्ष्मीपदंन्यसेत् ॥ ७२ ॥
पतयेशब्दमुच्चार्य पंचाशार्णस्त्रिरुज्झितः ।
सदसत्पदमादाय मूर्तयेतदनन्तरम् ॥ ७३ ॥
विश्वोत्तमायतदनु ततोमृतनिधेतुवै ।
षोडशार्णस्त्वयंमन्त्र उक्तःकान्तात्मनोविभोः ॥ ७४ ॥
पुरुषोत्तमायशब्दं ततस्सिद्धिप्रदेतिवै [ ततोप्रतिहतेतिच ] ।
शक्तयेचपदंदद्यात् सर्वेश्वरपदंततः ॥ ७५ ॥
समग्रोग्रभयेत्यत्र निवारणपदन्ततः ।
सप्तविंशाक्षरोमन्त्र उक्तश्चातःपरंशृणु ॥ ७६ ॥

नियन्त्रेपदमुद्धृत्य तदन्तेविश्वहेतवे ।
परब्रह्मसमेतश्च स्तेतवे ओमनन्तरम् ॥ ७७ ॥
मन्त्रोद्विरष्टवर्णश्च कथितोवच्म्यतःपरम् ।
पदमप्रतिमेत्यादौ प्रभावन्तदनन्तरम् ॥ ७८ ॥
महाविभूतेतदनु महामायापदन्ततः ।
अथदर्शकशब्दन्तु तदन्तेतालकेतवे ॥ ७९ ॥
चतुर्विंशाक्षरोमन्त्र स्स्वयमुक्तस्समासतः ।
शान्तात्मनेपदंदद्या त्तदन्तेयमविन्यसेत् ॥ ८० ॥
नियमाश्रयायदद्या त्परमर्धिप्रदायच ।
नारायणायशब्दंवै पूर्वसंख्यासमंस्मृतम् ॥ ८१ ॥
भवभंगपदंचैव कारिणेतदनन्तरम् ।
ततोभगवतेशब्दं दत्तात्रेयायवैततः ॥ ८२ ॥
वर्णाश्रमपदंचाथ धर्मशब्दमतःपरम् ।
परिग्रहायप्रणव मष्टाविंशाक्षरस्स्मृतः ॥ ८३ ॥
सर्वलोकमयायेति सर्वज्ञायपदन्ततः ।
सर्वेश्वरायन्यग्रोध शयनायपदंत्वथ ॥ ८४ ॥
त्रयोविंशत्यक्षरश्च स्वयमन्यंनिबोधतु ।
भूतशब्दमथादाय भावनायतदन्ततः ॥ ८५ ॥
शब्दंविश्वात्मनेचाथ विमलेतिपदन्ततः ।
दद्याद्विदितशब्दंवै तदन्तेविभवायच ॥ ८६ ॥
षड्विंशार्णस्स्वयंमन्त्रः परमस्मान्निबोधतु ।
भूतशब्दमथादाय व्यापिनेतदनन्तरम् ॥ ८७ ॥
पदंसहस्राचिंषेतु दद्यात्पंचाक्षरंशुभम् ।
त्रिविक्रमायाथपदं ततोपरिमितेतिच ॥ ८८ ॥
प्रभावायपदंदद्या त्त्रयोविंशाक्षरःस्मृतः ।
नरनाथायशब्दन्तु पुरुषप्रवरायवै ॥ ८९ ॥

आत्मध्यानपरायेति णायवैद्व्यक्षरन्ततः ।
एकविंशाक्षरोमन्त्र स्ततोन्यमवधारय ॥ ९० ॥
नारायणायशब्दन्तु दद्यान्निरतिवैपदम् ।
शयानन्दमयायेति पदन्निरभिमानवै ॥ ९१ ॥
पदासक्तायतदनु पञ्चविंशाक्षरस्त्वयम् ।
परायपदमादाय ततोथैपरमात्मने ॥ ९२ ॥
योगेश्वरायहरये मन्त्रोयंषोडशाक्षरः ।
सप्तार्णपदमादाय प्राङ्नमःपरमात्मने ॥ ९३ ॥
कृष्णायशब्दंतदनु कमलं‍त्र्यक्षरन्ततः ।
दळशब्दन्तुवितत नेत्रायचदनन्तरम् ॥ ९४ ॥
ब्रह्मिष्ठायब्रह्मणैवै अष्टाविंशाक्षरस्ततः ।
भगवन्पदमादाय युगान्तदहनेतिच ॥ ९५ ॥
दीप्तयेथपदंदद्यात् संसारपदमेवहि ।
बन्धविच्छेदकर्त्रेवै द्वाविंशार्णस्त्वयंस्मृतः ॥ ९६ ॥
पदंचतुर्मूर्तयेवै चतुर्गतिमयायच ।
शरशार्ङ्गभृतेदद्या च्छरदिन्दीवरत्विषे ॥ ९७ ॥
ततोभगवतेदद्या दभिरामपदन्ततः ।
शरीरायपदंचैव त्वष्टत्रिंशाक्षरस्स्मृतः ॥ ९८ ॥
दद्याद्विदितशब्दंवै परमार्थपदन्ततः ।
ततोवेदविदेशब्दं विदुषेव्यापकायच ॥ ९९ ॥
स्वामिस्तदनुवैदद्या द्व्यक्षरंचापरम्पदम् ।
अयंविंशतिभिर्वर्णै रुक्तस्त्वन्यमतःशृणु ॥ १०० ॥
दद्याद्गरुडशब्दन्तु तदन्तेवाहनेतिच ।
सर्वशास्त्रोद्यतेत्येवमतश्शु [ शमयाशु ] भमयेतिच ॥ १ ॥
ततोधुनधुनादाय कर्मबन्धांस्ततोवदेत् ।
धर्मपाहिततोदद्या ज्जह्यधर्मंतदोवदेत् ॥ २ ॥

चतुर्विंशाक्षरोमन्त्र एषवक्ष्याम्यतःपरम् ।
संहारमूर्तयेशब्दं कालवैश्वानरार्चिषे ॥ ३ ॥
पाताळशयनायेति त्वज्ञाननिगळेतिवै ।
निचयंहनवीप्सातः प्रणवन्तदनन्तरम् ॥ ४ ॥
पञ्चत्रिंशाक्षरोह्येष सर्वसिद्धिकरस्स्मृतः ।
प्रणवालंकृतास्सर्वे नमस्काराविभूषिताः ॥ ५ ॥
संस्मृताःपूजिताश्चैव ध्याताजप्ताविशेषतः ।
तन्नास्तियन्नयच्छन्ति भक्त्याऽत्रकर्मणांभुवि ॥ ६ ॥
अथलांछनमन्त्राणां शास्त्राणांलक्षणंशृणु ।
सहस्रदीधितिपदं दद्याच्छुरितवैततः ॥ ७ ॥
विग्रहायदशार्णंच त्र्यधिकंमकुटस्यच ।
आदायवांछितपदं ततस्सिद्धिप्रदायवै ॥ ८ ॥
महाचिन्तापदंदद्या न्मणयेतदनन्तरम् ।
त्रिद्धिपंचदशार्णंच दशार्णमपरंशृणु ॥ ९ ॥
[ सर्वलक्षणशब्दन्तु ततस्सम्पत्प्रदायवै ।
ततश्चिन्तापदंदद्या न्मणयेतदनन्तरम् ] ॥ ११० ॥
सौभाग्यशब्दमादाय जननित्र्यक्षरन्ततः ।
सर्वप्रदेतुतदनु अयंमेवंदशाक्षरः ॥ १ ॥
प्राणात्मनेथसत्याय विद्धिसप्ताक्षरंत्विह ।
कालकर्त्रेथचक्राय फडष्टार्णःप्रकीर्तितः ॥ २ ॥
विश्वात्मनेपदंदद्या त्ततोविश्वप्रदायच ।
नवाक्षरमिदंविद्धि परमष्टाक्षरंशृणु ॥ ३ ॥
समादायपदंविद्ये ततोविद्येश्वरार्चिते ।
प्राक्शब्दमूर्तयेकुर्या च्छंखायाष्टाक्षरःस्मृतः ॥ ४ ॥
पदंरसानिधेकुर्यात् भीष्मशब्दमतःपरम् ।
भीषणायतदन्तेवै दशाक्षरमिदंस्मृतम् ॥ ५ ॥

प्राग्भुवनाधिपतये स्तम्बभूतायवैपदम् ।
त्रयोदशाक्षरंविद्धि ततोन्यमवधारय ॥ ६ ॥
पदमिन्द्रियकोशाय इष्वस्त्रायदशाक्षरम् ।
कल्पान्तानिळघोषाय विद्युल्लासितवैपदम् ॥ ७ ॥
प्रभायषोडशार्णन्तु नवाक्षरमतश्शृणु ।
महामायापदं दद्या द्वन्धवर्ण द्वयं ततः ॥ ८ ॥
ध्वंसिने पद मादाय एतत्संख्यम्पदंश्शृणु ।
सर्वाघ्रग्रसनादाय पराय तदनन्तरम् ॥ ९ ॥
सन्तापकायशब्दन्तु दर्पविध्वंसिनेततः ।
एकादशाक्षरं विद्धि नवाक्षरमथोच्यते ॥ १२० ॥
अज्ञान खण्डनपदं परायतदनन्तरम् ।
त्रैलोक्यमोहनपदं मूर्तयेतु नवाक्षरम् ॥ १ ॥
आकर्षणपरपदं महामाया मयेतिवै ।
द्वादशाक्षर संख्यस्तु नवाक्षर मथोद्धरेत् ॥ २ ॥
प्रागखण्डित शब्दन्तु तदन्ते विनियोज्यच ।
पराक्रमायशब्दन्तु सप्ताक्षरमतश्शृणु ॥ ३ ॥
दर्पप्रशमकन्तु पञ्चार्णं विनिबोधवै ।
तेजोमाळिनिचेत्येत द्वाविंशत्यनुकीर्तिताः ॥ ४ ॥
प्राग्वदाद्यन्तसंरुद्धाः स्वनामपदभूषिताः ।
संख्यानिष्ठाक्षरस्यान्ते दद्यात्संज्ञा पदं सदा ॥ ५ ॥
चक्रवज्राख्र मन्त्राणां कुर्यान्नामा वसानकम् ।
क्रमाच्चतुर्दशानान्तु शत्त्यन्तानाश्चफट्पदम् ॥ १२६ ॥

इति श्रीपांचरात्रे श्रीसात्वत संहितायां
विभवदेवता मन्त्रोद्धारविधि र्नाम

त्रयोविंशः परिच्छेदः ॥ २३ ॥

# अथ चतुर्विंशः परिच्छेदः ।



श्रीनारदः ।

विप्रप्रधाना श्श्रुत्वैवं मन्त्राणां लक्षणं स्फुटम् ।
चोदितो भगवानेवं पुन र्वै तालकेतुना ॥ १ ॥

संकर्षणः ।

ब्राह्मणः क्षत्रियो वैश्य श्शूद्रोवा भगवन्मयः ।
नित्याराधनका मस्तु यदि मन्त्रमयं वपुः ॥ २ ॥
कर्तु मिच्छति लक्षार्थं तत्र किं लक्षणो विधिः ।

श्रीभगवान् ।

चित्रमृत्काष्ठशैलोत्थं सल्लोहमय मेव वा ॥ ३ ॥
भेदाभिन्नं द्विजातीनां हितं बिम्बं फलार्थिनाम् ।
तदभिन्न मकामानां मार्गं चाप्यविरोधकृत् ॥ ४ ॥
अत्र चित्रमयं विद्धि भित्तिकाष्ठाम्बराश्रितम् ।
पूर्वं वर्णक्रमेणैव चतुर्धाचाम्बरोत्थितम् ॥ ५ ॥
तच्च कार्पासकौशेय क्षौमशाणमयन्तु वै ।
मृज्जमेवं सिताद्युत्थं वार्क्षं विविध मेव च ॥ ६ ॥
आश्वत्थं ब्रह्मवृक्षोत्थं श्रीपर्णी सुरदारुजम् ।
बा[ सा ]लताल मयं चैव शाशव[शैंशुपं]न्ती न्दुसारजम् ॥ ७ ॥
एवं द्वयं द्वयं विद्धि द्विजादीनां यथाक्रमम् ।
अतोन्ये दृढमूला श्च सारवन्तो हि याज्ञिकाः ॥ ८ ॥
साधारणा श्चतुर्णान्तु प्रतिमाद्ये च कर्मणि ।
सामान्यं मुक्तिमुक्त्यर्थं मश्म मृण्मयवत्स्मृतम् ॥ ९ ॥

तारहाटकताम्रोत्थ मारकूटमयं तथा ।
एवं हि भूमयो वस्त्रपाषाणा धातवो द्रुमाः ॥ १० ॥
वज्रादयो खिला रत्ना स्सितरक्तादिलक्षणाः ।
असामान्याः फलेप्सूनां लाभालाभवशा त्पुनः ॥ ११ ॥
सम्यक् स्वमूर्तिमन्त्रैस्तु जपहोमार्चनादिना ।
नये त्सामान्यभावित्वं तथा तत्कारणार्चनात् ॥ १२ ॥
यजेत् सेन्द्रां धरां शैल मृदापादनकर्मणि ।
एवं पटद्रुमार्थन्तु वरुणं सवनस्पतिम् ॥ १३ ॥
सरत्नानां च धातूनां सम्बन्धैर्केन्दुपावकान् ।
रत्नाश्रयेण धातूत्थे [ त्वर्थे ] नार्च्यादेशेन वै विना ॥ १४ ॥
तथार्चनासनेनैव चक्रपद्ममयादिना ।
नराली प्रतिमा शस्ता ध्यायिनां ध्यानसिद्धये ॥ १५ ॥
केवला लघुमाना च प्रमाणावयवोज्झिता ।
वर्णाश्रमगुरुत्वाच्च स्वामित्वा दखिलस्य च ॥ १६ ॥
भूतादिदेवरूपत्वात उक्त माद्येषु वस्तुषु ।
नृप श्चार्हति वै नित्यं सविशेषपदे स्थितः ॥ १७ ॥
किं पुन र्यो फलाकांक्षी भक्तिश्रद्धापर स्सदा ।
बुध्वैवं चित्रबिम्बार्थी यत्नेनेदं समाचरेत् ॥ १८ ॥
गुह्यकान् गृहदेवांस्तु हृदाच्यार्घ्यादिना पुरा ।
मलभस्मतुषांगार केशकीटनखा स्तृणम् ॥ १९ ॥
मूलकण्टकचर्मास्थि सामान्ये श्माह्निभित्तिका ।
भवत्यनर्थदावश्य मतः प्राक्चतुरंगुलम् ॥ २० ॥
विहाय मृद्दलं भित्ते रीर्घाद्बिम्बात्तु चाधिकम् ।
उक्तदोषविमुक्ताथ पंचगव्येन साम्भसा ॥ २१ ॥
मर्दितया मृदा भूय स्तद्भित्त्यंशं प्रपूर्य च ।
शस्त्रेण काष्ठफलकां मृगचर्मसमां पुरा ॥ २२ ॥

छविं विहाय शुद्धयर्थं तुरी मुक्तन्तु वै घटम् ।
प्रक्षाळय सलिलेनैव त्वस्त्रजप्तेन सप्तधा ॥ २३ ॥
हृन्मन्त्रेणतु सास्त्रेण मूर्ति मन्त्राचितेन च ।
तीर्थोद्देशा न्नदीतीरा त्पुण्यक्षेत्राच्च पर्वतात् ॥ २४ ॥
अपास्य दोषसंकीर्णा मूर्ध्वा दादाय मृत्तिकां ।
सावचूर्ण्याथ संशोष्या सूपलिप्ते धरातले ॥ २५ ॥
शाण मौर्णं श्च कार्पासं सूत्रं चालवि [ ससूत्रं चावि ]जं तथा ।
कृत्वा पाषाणभिन्नं प्रा ग्योज्यं तत्र सवालुकम् ॥ २६ ॥
ईषद्रोमययुक्तेन भूरिक्षीरघृतादिना ।
भावये त्पंचगव्येन खादिरेण कषेण च ॥ २७ ॥
सिद्धार्थकालसिस्नेह तिलोत्थेन च वै सह ।
क्लेदयेच्च त्रिसप्ताहं भाण्डे कृत्वा यसादिके ॥ २८ ॥
मारुतानलसूर्येन्दु दर्शनेन विनैवहि ।
तया समाप्यं तद्बिम्बं शुभकाष्ठान्तरीकृतम् ॥ २९ ॥
वस्त्रवच्चैव लोहानां कृत्वा प्रक्षाळनं ततः ।
मार्जनं भूतिना भूय स्तथा तन्मन्त्रितेन च ॥ ३० ॥
भक्त्या प्रवर्तमानस्तु बिम्बसाधनकर्मणि ।
सर्वत्र चास्त्र मन्त्रस्य कुर्या न्निर्विघ्नशान्तये ॥ ३१ ॥
पूजनं हवनं भूत बलिदानं सदक्षिणम् ।
सम्यक् [ न्मृद् ] ग्रहणकालेतु एत त्सामान्य मेव हि ॥ ३२ ॥
सच्छैलदारुग्रहणे विशेष स्त्वधुनोच्यते ।
सर्वत्रारम्भकालेतु निमित्त मुपलक्ष्य च ॥ ३३ ॥
विशेषा द्ध [ र्च ] नया त्रायां तच्छुभेन शुभोदयः ।
अशुभेन निमित्तेन यात्रा विघ्नवती भवेत् ॥ ३४ ॥
विरामेणतु जप्येन शान्तिस्वस्त्ययनादिना ।
निवर्तनेन तद्भन्या दहते शुभकृद्यतः ॥ ३५ ॥

मन्त्र मभ्यर्च्य यात्राया मभ्यर्थ्याज्ञां विनन्द्य च ।
नैवेद्यशेषभुग्वाम चारस्थ स्संयतेन्द्रियः ॥ ३६ ॥
प्राङ्मुख स्संस्मरे न्मन्त्रं समुत्थायामृतोदये ।
परिज्ञाय पुरा मूर्ति तन्मूर्त्यन्तर मेव वा ॥ ३७ ॥
याया त्तदीयं दिग्भागं तदभावात्तु चान्यदिक् ।
सहायै रप्रमत्तैस्तु शिल्पिभि स्सह संवृतः ॥ ३८ ॥
लाजदध्यक्षतैः कुम्भै र्याया त्पुष्पपुरस्सरैः ।
सौमनस्यं महोत्साह स्त्वंगस्पन्दश्च दक्षिणः ॥ ३९ ॥
शुभा वाणी ध्वनि श्शांख स्तन्त्री वाद्यं फलादयः ।
गोगजाश्वद्विजाः कन्या नवभाण्डं च मृद्दधि ॥ ४० ॥
आर्द्रमांसान्यलंकारो मदिराग्नी घृतं पयः ।
सिद्धान्नं शालिबीजादि दर्भा स्सद्रुममञ्जरी ॥ ४१ ॥
छत्रवस्त्रध्वजायानं रोचना कुंकुमं मधु ।
दर्पणं चामर श्चैव धातव श्शस्त्रवर्जिताः ॥ ४२ ॥
रत्नानि वैबुधं बिम्बं मधु मत्तो ह्यकातरः ।
जीवन्मत्स्या निमित्तश्च मनसो यदखेददम् ॥ ४३ ॥
तत्सर्वं दर्शने श्रेष्ठं तद् खेदद मशोभनम् ।
स्वगृहद्वारदेशाच्च पथि सप्तपदावधि ॥ ४४ ॥
क्रममाणे निमित्तं च फलं यच्छत्यनेन हि ।
निर्गत्य नगरा द्ग्रामा त्क्रोशार्ध क्रोश मेव वा ॥ ४५ ॥
गृह्णीया च्छाकुनं चिह्नं नकुलादिमयं त्वतः ।
पूर्णा त्सार्थाधिका त्क्रोशाद् हितकृन्मृगदर्शनम् ॥ ४६ ॥
दिङ्मुखे निर्मले सिद्धि व्रजे च्च विशेषतः ।
असकृच्चाम्बरं स्वच्छं सुदीप्ता भास्करादयः ॥ ४७ ॥
महत्सुखावहस्स्निग्धः प्रदक्षिणगतिस्स्थिरः ।
दिव्याद्युत्पातनिर्मुक्त स्सकालस्सिद्धिसूचकः ॥ ४८ ॥

हंसश्शुको भरद्वाजः कोकिळः खंजरीटकः ।
मयूरो भ्रमर श्चक्र वाकाद्याः खेचरा श्शुभाः ॥ ४९ ॥
भूचरानकुलास्सौम्या स्सिताहि र्गृहगोधिका ।
गन्धाखुर्जम्बुकश्चैव सर्वेषां दर्शनं शुभम् ॥ ५० ॥
मृगाणां हरिणास्सिंहो व्याघ्रश्शशकचित्रकाः ।
सिद्धिसंसूचकास्सर्वे सर्वेषां विहितन्तुवै ॥ ५१ ॥
प्रदक्षिणं विशेषेण व्यत्यये जम्बुक श्शुभः ।
द्विजादिकं [ दीनां ] रुतं स्निग्धं सिद्धिकृतत्त्वसौख्यदम् ॥ ५२ ॥
समुत्पन्ने निमित्ततु धातुसंक्षेपकर्मणि ।
प्रतीक्षितुं नयुज्येत यदाशान्ति तदाचरेत् ॥ ५३ ॥
पूर्वोक्तां चित्तशुद्ध्यर्थं सविशेषां सदक्षिणाम् ।
प्रविश्यविधिवत्क्षेत्रं निरीक्षेत स्वतेजसा ॥ ५४ ॥
पश्येच्छिलांगुणवतीं तरुंवाकर्मणिक्षमम् ।
वर्जयेदतिवृद्धाश्च परीक्षीणत्वचंतथा ॥ ५५ ॥
सभङ्गांदावदग्धांच निश्शब्दां रूक्षविग्रहाम् ।
सवालुकांच सच्छिद्रां बिन्दुयुक्तांपुटोद्वहाम् ॥ ५६ ॥
आखुदर्दरमीनाहि मार्जारशशकोपमाम् ।
सुवर्णपरवर्णांतथ सिराजालेन सन्ततां ॥ ५७ ॥
प्रागुक्तरूपस्याभावा दमीषांग्रहणंहितम् ।
पारावतशुकाब्जाभा मधुमाञ्जिष्ठमाषभा ॥ ५८ ॥
गुर्वीह्यद्याशुभास्निग्धा अतोवान्याभिशस्यते ।
सुहृद्ये भूतळे मग्ना जलाशयतलस्थिता ॥ ५९ ॥
छन्नातरुवरेणैव वनराजिष्ववस्थिता ।
वेष्टितावल्लिबृन्देन तथैवोषधिभिर्वृता ॥ ६० ॥
ऊर्ध्वगाजानदेशाच्च एकपिण्डीकृताभृगोः [ मृदुः ] ।
मोक्षदाचलवक्त्रावै भोगदासुतलानना ॥ ६१ ॥

दिङ्मुखीचोभयकरी प्राङ्मूर्धाभूतिरायुषे ।
अतोन्यमस्तकाकीर्ति यशोवृद्धिकरीमता ॥ ६२ ॥
वंशवृद्धिदमारोग्य शान्तिकृत्कंयदाप्यदिक् ।
पुष्टिमुन्नतिसन्मेधां यच्छत्युत्तरमस्तका ॥ ६३ ॥
एवंपुरापरिज्ञाय पृष्ठोरुचरणंशिरः ।
बलात्मनास्ववीर्येण प्रोद्धृत्यसहाशिल्पिभिः ॥ ६४ ॥
प्राङ्मुखंचोत्तरस्थांवै प्राग्भागेचोत्तराननम् ।
स्थलेवतार्यमन्त्रेश मिष्ट्वास्रक्चन्दनादिना ॥ ६५ ॥
ध्यात्वाशिलान्तस्संरुद्धं सम्पूज्यजुहुयात्ततः ।
उक्तदिग्द्वितयस्यैक देशेकुण्डेथवास्थले ॥ ६६ ॥
दत्वापूर्णाहुतिंध्यान जपयुक्तःक्षपेदहः ।
निशागमेर्चनंकुर्या द्बलिभिर्भूततर्पणम् ॥ ६७ ॥
नैवेद्यशेषमश्नीया न्मन्त्रविन्यस्तविग्रहः ।
तद्दक्षिणेनदर्भेषु प्राक्छिराःप्रस्वपेज्जपन् ॥ ६८ ॥
पूर्वव त्स्वप्नलाभार्थ मुत्थाय रजनीक्षये ।
कुर्या त्स्वकृत्यं जुहुया दशुभस्वप्नशान्तये ॥ ६९ ॥
अभिनन्द्य शुभं स्वप्नं हृदयावर्जकं स्फुटम् ।
पर्वतं च स्व मात्मानं स्थाने तदुपलं स्थलम् ॥ ७० ॥
स्फटिकामलसंकाशं पश्ये द्वा तप्तहेमवत् ।
निर्धूमांगारकूटाभं तदाशु लभते शुभम् ॥ ७१ ॥
सशस्त्र मथ चादाय मुद्गरं चास्त्रमन्त्रितम् ।
प्राङ्मुखश्चतुरो वारां स्ताडये न्मस्तकावधेः ॥ ७२ ॥
पाददेशाच्च वा मध्या द्वेक्ष्य च फलं पुरा ।
चतुरश्रायतां कृत्वा भिन्नां पीठेन यन्त्रगाम् ॥ ७३ ॥
आनाय्य वा पृथक्पीठां छन्नां कर्मालयं शुभम् ।
विन्यस्य वै पुरा तेन विधिना चोद्धरे च्छिलाम् ॥ ७४ ॥

पीठार्थं भिन्नवर्णां च तद्रूपां वा यथेच्छया ।
अंगांगिभाव गुणव द्दृषदां तु महामते ॥ ७५ ॥
काष्ठलोहमणीनां वा प्यलाभे सति वै शुभम् ।
सति लाभे न वै कुर्या द्वैषम्यं व्यत्ययं च वा ॥ ७६ ॥
तत्काल मेव चाहृत्य रत्नाधारां शिलां शुभाम् ।
पुंस्त्रीनपुंसकोत्थाभि शिलाभि स्स्यात्तथा [त्रितयं] हितम् ॥७७॥
बिम्बाख्यं विद्धि चाभावात् सर्वं बिम्बो पलात्तु वै ।
निषिद्धं भगवद्बिम्बं रत्नपीठमयोपलात ॥ ७८ ॥
लक्ष्म्याद्या देवताकारा स्स्वोपला स्सर्वसिद्धिदाः ।
या हता ऽ नलबिन्दून्वै स्वनाद मभिमुंचति ॥ ७९ ॥
पुमानिति शिला सा वै निस्तेजा स्सस्वना ऽ बला ।
आदिमध्यावसानेषु नाग्नि र्यस्या नच ध्वनिः ॥ ८० ॥
नपुंसकेति सा ज्ञेया स्वपदस्था फलप्रदा ।
शिलाग्रहण मित्युक्तं दारुग्रहण मुच्यते ॥ ८१ ॥
आपर्वतान्तस्संचारो निर्व्रणं सरळं बृहत ।
रोग मुक्तं न सिंहाद्यैः प्राङ्नखै स्सक्षतीकृतम् ॥ ८२ ॥
नानिलाशनिदावाग्नि हतवीर्यं न वाह्यगम् ।
सलक्षणेतु सुस्निग्धे भूभागे चोन्नते स्थितम् ॥ ८३ ॥
प्रागक्तमधिवास्यादौ परेहन्यर्चयेत्ततः ।
तदाश्रिता मविज्ञात स्वरूपां देवतां पठन् ॥ ८४ ॥
इहाश्रितात्मने तुभ्यं नम स्सर्वेश्वराय च ।
क्षमस्वावतरान्यत्र सन्तिष्ठात्र चिदात्मना ॥ ८५ ॥
अथास्त्रोदकशुद्धेन विलिप्तेन घृतादिना ।
जपन् मन्त्रवरं वौषट् छिन्द्या द्वै क्रकचादिना ॥ ८६ ॥
प्राच्या मुदीच्या मैशान्यां पतत्यभिमुखं यदि ।
परिज्ञेयं शुभं कुर्या दन्यपातेर्चनादिकम् ॥ ८७ ॥

अनाद्या देवभागं चा प्यनादेयेन वै विना ।
बिम्ब मिच्छति वै कर्तुं वार्क्ष चैवाति विस्तृतम् ॥ ८८ ॥
अनेकभुजवक्त्रास्त्रभूषितं तत्तरूस्थितैः ।
भिन्नै रवयवै मान युक्तै र्दु [ शि ] ष्टै र्न दूष्यति ॥ ८९ ॥
भक्ति श्रद्धा वशाच्चैव सर्व चार्ण मयं यतः ।
एवमेकतमस्यापि भक्तिपूर्वस्य वस्तुनः ॥ ९० ॥
संग्रहंच पुराकृत्वा कुर्यादाकारमीप्सितम् ।
तादर्थ्येनतुसामान्यं सौम्यमानं पुराशृणु ॥ ९१ ॥
ऋज्वाख्य मविकारंच व्यापकं त्वेकमूर्तिमत् ।
भूभागे सुसमेश्लक्ष्णे मानमुद्दीयतेनवै ॥ ९२ ॥
निरूप्यावयवानांच लक्ष्मविस्तृतिपूर्वकम् ।
अष्टाधिक शतांशोय स्स्वोन्नतेरंगुलश्चतत् ॥ ९३ ॥
द्वे अंगुलेकलानेत्रं गोळकं भावएवच ।
अंगुला दष्टभागोय स्सयवः परिकीर्तितः ॥ ९४ ॥
षट्कलंचपरिज्ञेयं तालं बिम्बादि कर्मणि ।
मुखांगनाभि मेढ्रक्ष्मा स्तालमाना स्त्वथोरुयुक् ॥ ९५ ॥
द्विकलेच तथाजंघे गुल्फंजानुर्गळंचकम् ।
त्र्यंगुलं त्र्यंगुलंज्ञेय मित्युन्मान मुदाहृतम् ॥ ९६ ॥
जटाधराणां बिम्बानां दीर्घह्रस्व वशेनतु ।
चतुष्कलंच त्रिकल म्मानम्मानाद्बहिः क्षिपेत् ॥ ९७ ॥
त्रिपंच सप्तशिखरो मौलिरष्टकलोन्ततः ।
निर्जटानां ललाटोर्ध्वे मकुटंवा सुशोभनम् ॥ ९८ ॥
तालेन ह्रासवृद्धीतु कार्येत्वत्र व्यपेक्षया ।
यथोदितेषु भागेषु एकैकेनां गुलेनतु ॥ ९९ ॥
आस्यनासा ललाटार्थं वदनांशंभजेत्त्रिधा ।
ततोग्रतः कळामानं घ्राणंस्या त्तिलपुष्पवत् ॥ १०० ॥

कळार्धेनतुविस्तार स्सोन्नतिस्तत्पुटद्वये ।
नासाग्र ग्रासनिर्मुक्तं गोजीमानं चतुर्यवं ॥ १ ॥
तच्चतुर्यवमानेन घ्राणाग्रेणान्तरीकृतम् ।
अर्धांगुळंचोत्तरोष्ठ मधरोष्ठन्तुचांगुळम् ॥ २ ॥
गोळकंचिबुकंविद्धि सृक्किण्यौ चतुरंगुळे ।
आद्यस्य नासिकांशस्य मध्यभाग समाश्रिते ॥ ३ ॥
कुर्यान्नेत्रश्रुतिच्छिद्रे तत्रनेत्रे कळान्तरे ।
कळायामसमन्दैर्घ्यात कळार्धेनतुविस्तृतम् ॥ ४ ॥
यदुत्पल दळाकारं द्वियवेनाधिकन्तुतत् ।
कुर्यात्पद्म दळाकारं नेत्रार्धं वृत्ततारकम् ॥ ५ ॥
तारादैर्घ्यत्रिभागेन त्वाद्यस्यान्यस्यवाधिका ।
यवैनै केन सार्धेन ज्योतिस्तत्पंचभागिकम् ॥ ६ ॥
त्रिभागेनापि विहितं तत्पद्मदळलोचन ।
द्विषड्यवंनेत्रकोशं विस्तारेणयवाधिकम् ॥ ७ ॥
सार्द्धांगुळद्वयंदैर्घ्यात् भ्रूलते द्विकलेस्मृते ।
मध्यतो द्वियवेबाल चन्द्रतुल्ये क्रमक्षते ॥ ८ ॥
तदन्तरं कळार्द्धंच तत्कोटी समसूत्रके ।
श्रोत्रद्वयंगुळविस्तीर्णे आयामेन द्विगोळके ॥ ९ ॥
द्वियवः कण्ठपरिधिः पर्वणीद्वे चतुर्यवे ।
मध्यन्ताभ्यां तथाविद्धि द्रोणीसार्द्धांगुळात्रवै ॥ ११० ॥
कळार्धेनतुतच्छिद्रं पाशमानं यथारुचि ।
अंगुळाद्विकळान्तस्तु वैषम्यमपि तत्रयत ॥ १ ॥
अन्तश्छिद्र विनिर्मुक्तं तद्विज्ञेयं चतुर्यवम् ।
सदळ करणोपेत मेवं श्रोत्रद्वयं स्मृतम् ॥ २ ॥
चतुष्कळं ललाटन्तु शिखरे द्वे द्विगोळके ।
उच्छ्राया स्त्र्यंगुळेचैव अग्रतोंगुळ विस्तृते ॥ ३ ॥

केशभूमेस्समुद्भूतं ललाटोपरिसंस्थितम् ।
कुर्या त्कलार्द्धमानन्तु वक्रश्चालकसंचयम् ॥ ४ ॥
कपोलपरिधिं कुर्या त्कर्णा त्कण्ठगतं समम् ।
तन्मध्ये वर्तुलौ गण्डौ परिच्छिन्नौ पुरोदितैः ॥ ५ ॥
शिरसःपरिणाहन्तु विद्धि षट्त्रिंश दंगुलम् ।
श्रोत्रकोटिद्वयाच्चैव मस्तकस्य यदन्तरम् ॥ ६ ॥
तत्षोडशांगुलंविद्धि वर्तिर्भ्यां पृष्ठतस्तथा ।
सार्द्धतालंपरिज्ञेयं ललाटात्कशुद्धान्तरम् ॥ ७ ॥
खरकम्बुसदृशीग्रीवा मूलमध्याग्रतोहिसा ।
परिधे द्वादशकला एकविंशांगुलाग्रतः ॥ ८ ॥
अष्टादशांगुलाचैव स्वांशात्त्र्यंशेनविस्तृता ।
तन्मूलं विस्तृतौस्कन्धौ तुंगौ वृत्तायतौ समौ ॥ ९ ॥
षडंगुलन्तद्वाहुल्यं बाहुमान मथोच्यते ।
स्कन्धोत्तमांगं त्रिकलं सन्ध्यन्तं षट्कलं स्मृतम् ॥ १२० ॥
स्कन्धेर्वैमणिबन्धान्तं मानं नवकलं स्मृतम् ।
मणेर्मध्यमशाखान्तो हस्तस्सप्तांगुलोमतः ॥ १ ॥
परिज्ञेयं कलाहीनं तन्मानम्मध्यमांगुले ।
तच्चतुर्यवहीनाच सानामातुप्रदेशिनी ॥ २ ॥
द्विकलाचपरिज्ञेया सांगुष्ठातुकनीयसी ।
द्विपर्वाचस्मृतोंगुष्ठ स्सर्वाश्चांगुलिविस्तृताः ॥ ३ ॥
सर्वासांमूलपर्यन्ता ह्रासयेच्चयवंयवम् ।
अग्रपर्वार्द्धमानेन कार्यालिंगोपमानखाः ॥ ४ ॥
मानमंगुष्ठमूलस्य परिधिश्चतुरंगुलम् ।
तच्चतुर्यवहीनंच ज्ञेयंत्रिष्वंगुलीषुच ॥ ५ ॥
मूलां [ न्यूनांगुले ] गुलेःकलासार्द्धा प्राग्वद्ध्रासश्च वेष्टनात् ।
अंगुष्ठमंगुलंचाया त्रिस्रोन्याष्षड्यवास्मृताः ॥ ६ ॥

अर्धांगुलं ततो न्यूना विद्धिमध्यं क्रमक्षतम् ।
नजलक्ष्मो [ चलक्षा ] पमंचाग्रात् सांगुलं द्विकलंकरम् ॥ ७ ॥
ईषन्निम्नतलंचैव लक्ष्मरेखाविभूषितम् ।
शाखामूलावधेःपाणौ बाहुल्यन्द्वेयवंगुलम् ॥ ८ ॥
चतुर्यवाधिकंचैव मणिबन्धावधेस्स्मृतम् ।
मध्येकलार्धहीनन्तु तद्बाहुल्यमुदाहृतम् ॥ ९ ॥
मणिबन्धावधेर्बाहु वेष्टनंषट्कलंस्मृतम् ।
स्कन्धेस्सप्तकलंविद्धि सांगुलंत्र्यवमप्युतम् ॥ १३० ॥
हीनमध्यांगुलेनैव मूलाद्वैनवगोळकम् ।
तथैवस्कन्धेरूर्ध्वन्तु विस्तारः प्रागवदत्र च ॥ १ ॥
अत्रापि पूर्ववत् दृष्टया कार्यान्तस्था क्षिति स्स्वयम् ।
तालं गळावधे स्त्यक्त्वा तन्मानेनान्तरीकृते ॥ २ ॥
स्तनद्वयं समं कुर्यां त्तद्वारा च समांसळा ।
निम्नं हृद्गोळकार्धेन ऊर्ध्वतो रत्नराज्युतम् ॥ ३ ॥
स्तनाभ्यां त्रिकलौ पार्श्वौ त्रियवं स्तनमण्डलम् ।
यवोन्नतं तथाचाग्रात् विस्तृतं तेन चूचुकम् ॥ ४ ॥
लोचनं त्रियवं सार्धं कक्षमान मुदाहृतम् ।
स्कन्धमानविनिर्मुक्तं पृ [ ष ] ष्ठमंसावधे स्स [श] मम् ॥ ५ ॥
द्रोणीनिकाशसदृशं मध्वराशे स्समांसळम् ।
कक्षान्तर्वेष्टनं विद्धि पंच तालं सुलोचनम् ॥ ६ ॥
विनांगुलद्वयेनैव द्वे ताले द्विगुणीकृते ।
यवत्रयसमायुक्ते विद्धि तत्कुक्षिवेष्टनम् ॥ ७ ॥
त्रियवोनकलामानं विज्ञेयं नाभिमण्डलम् ।
तन्मानःत त्र्यवोनन्तु तन्निम्नत्वं विधीयते ॥ ८ ॥
परिधि र्नाभिमध्येतु त्रिकालं स्स त्रिलोचनः ।
षड्गोळकंच तन्मानपरिद्व्यर्धं कटे स्मृतम् ॥ ९ ॥

करिकुम्भोपमौ पीनौ परितः पंच गोळकौ ।
स्फिजौ कौपीनराजीच द्व्यंगुळा मूलतः स्मृता ॥ १४० ॥
परितोंगुळमाना सा मेढ्रन्तु त्रिकळं स्मृतम् ।
चतुर्यवश्च तत्कोशं वेष्टनन्तु षडंगुळम् ॥ १ ॥
द्व्यंगुळौ वृषणौ दैर्घ्या न्मूलान्तसमविस्तृतौ ।
परितो द्वियवं [ द्व्यंगुळं ] विद्धि वायुरन्ध्रं सुवर्तुळम् ॥ २ ॥
ऊरुमानं परिज्ञेयं मध्यभूमे र्नवांगुळम् ।
षट्कळं मूलदेशाच्च अग्रान्तं त्रिकळं स्मृतम् ॥ ३ ॥
हीनमेकांगुळेनैव द्विकळं जानुमण्डलम् ।
विस्तारेणोन्नतत्वेन चतुर्यवसमन्तु तत् ॥ ४ ॥
जंघामूले परिज्ञेये वेष्टनं नवगोळकम् ।
द्विसप्तांगुळकं मध्ये सार्धपंचांगुळं [ कळं ] ततः ॥ ५ ॥
अत्रापि वेष्टना द्विद्धि तृतीयांशेन विस्तृतिम् ।
मध्यमूलावसानेभ्यो विस्तारमनुगुण्यतु ॥ ६ ॥
भुजाभ्यां मध्यदेशस्य तथांगुळिगणस्य च ।
ऊरुयुग्मस्य जंघाभ्या मापाद्याद्विपहस्तता ॥ ७ ॥
सताळभागमानं च दैर्घ्यं मे चारणं स्मृतम् ।
पार्ष्णीद्विगोळकततेतन्मध्ये सांगुळे कळे ॥ ८ ॥
त्रिकळं चाग्रत श्चैव बाहुल्येन कलासमम् ।
पद मंगुष्ठनिकरा त्त्रियवोनं प्रकीर्तितम् ॥ ९ ॥
बाहुळंञ्च कळामानं गुल्फदेशाच्च सांगुळम् ।
कनीयोंगुळिमूळाच्च गुल्फान्तं पिण्डिकांगुळम् ॥ १५० ॥
जंघावसानदेशाच्च वेष्टनं सप्तलोचनम् ।
कळाहीनं तदेवाग्रात परिणाहो विधीयते ॥ १ ॥
चरणं विधिनानेन कूर्मपृष्ठं समाप्य च ।
त्र्यंगुळेन च तद्दैर्घ्या दंगुष्ठस्य च दीर्घता ॥ २ ॥

पंचांगुलःपरिज्ञेयः परिधिस्तस्यलांगलिन् ।
यवद्वयाधिकाकार्या तद्दैर्घ्यात्तुप्रदेशिनी ॥ ३ ॥
अंगुष्ठायामतुल्याथ कार्यावैपादमध्यगा ।
मध्यांगुलेद्विरष्टांश हीनातदनुयास्थिता ॥ ४ ॥
तद्वत्तदनुगायाच त्रिपर्वास्तास्तु पूर्ववत् ।
संयुक्तानखजालेन कूर्मपृष्ठोपमेनच ॥ ५ ॥
द्विकलन्तुकला [ यवा ] ष्टोनं पादतर्जनिवेष्टनम् ।
चतुश्चतुर्यवोनंच तच्छेषाणां प्रकीर्तितम् ॥ ६ ॥
त्र्यंशेनवेष्टनाद्विद्धि सर्वासांचैवविस्तृतिम् ।
सर्वेसमांसळास्सौम्या स्समास्त्ववयवाश्शुभाः ॥ ७ ॥
दशनावळिवाह्यस्थे दंष्ट्रेसमयवोन्नते ।
यवद्वयोन्नतंमानं मध्यदन्त चतुष्टये ॥ ८ ॥
तत्पक्षगानांसर्वेषां मानंविद्धिचतुर्यवम् ।
त्रियवंद्विजविस्तार मग्रान्मूलाच्यवद्वयम् ॥ ९ ॥
तत्सार्धमध्यदेशाच्च सर्वेदन्तानिरन्तराः ।
लोमप्रदक्षिणावर्तं मयुग्जन्मोत्थितं शुभम् ॥ १६० ॥
सुनिश्चितंहितंचैत न्मानमव्यभिचारियत् ।
मनोहारित्वमेकत्र रूपलावण्यभूषितम् ॥ १ ॥
सर्वदाचानयोर्विद्धि अन्योन्यत्वेनसंस्थितिम् ।
ससौन्दर्यन्तुमानस्य क्वचिदाक्रम्यवर्तते ॥ २ ॥
लावण्यस्यक्वचिन्मानं समाच्छाद्यावतिष्ठते ।
यथातिरूपवान्लोके दरिद्रोप्येतिमान्यताम् ॥ ३ ॥
विरूपोप्यतिवित्ताढ्यो नारूपोनैवनिर्धनः ।
एवंद्वयोज्झितंबिम्ब मनादेयत्वमेतिच ॥ ४ ॥
आदेयमेकयुक्तंच नित्यंयस्मान्महामते ।
सम्यङ्मानेचसौन्दर्ये भक्तानुग्रहकाम्यया ॥ ५ ॥

मन्त्रसन्निधिशक्तिर्वै सफलाह्यवतिष्ठते ।
सासम्यक्प्रतिपन्नस्य विम्बेदृग्गोचरस्थिते ॥ ६ ॥
आमूर्ताह्लादयत्याशु ज्ञात्वैवं यत्नमाचरेत् ।
मानोन्मानप्रमाणाना मथसौन्दर्यसिद्धये ॥ ७ ॥
ऋजोस्सुसमपादस्य त्र्यंगुलंचरणान्तरम् ।
तद्द्वैविषमपादस्य अग्रात्तालसमंस्मृतम् ॥ ८ ॥
तत्पार्ष्णिद्वयमद्ध्यात्तु पारंक्षेप्यद्विगोळकम् ।
स्थित्यर्थंब्रह्मनाड्यावै तथामार्गद्वयस्यच ॥ ९ ॥
सूत्रेणसुसमेकुर्या द्देहोत्थेदक्षिणोत्तरे ।
समपादस्यविम्बस्य ललाटान्मेढ्रमस्तकम् ॥ १७० ॥
प्रसार्यसूत्रमाच्छाद्य तेननाभिहृदन्तरम् ।
घ्राणाग्रमळकानांच सन्धिर्यस्तिलकोर्ध्वगः ॥ १ ॥
एवंविषमपादस्य दक्षांगुष्ठाग्रगंनयेत् ।
गात्रसाम्यंसमापाद्यं क्षेत्रात्क्षेत्रगतेनच ॥ २ ॥
सूत्रेणसर्वविम्बानां वैषम्यविनिवृत्तये ।
चतुस्त्रिद्व्यश्रिपरितः परिशुद्धायतश्शुभा ॥ ३ ॥
अशुभापरिशुद्धातु बिम्बोत्थावयवीस्थितिः ।
ललाटमश्ववक्त्रस्य विस्ताराद्द्वादशांगुलम् ॥ ४ ॥
अष्टलोचनमायामा दग्रतश्चतुरंगुलम् ।
कलार्द्धसुषिरेघ्राणे रन्ध्रेभागान्तरीकृते ॥ ५ ॥
अष्टांगुलेतु हनुके सृक्विण्यौ द्व्यथ तत्समे ।
मध्यत श्श्रोत्रशुक्ती द्वे द्व्यंगुले द्विकलोन्नते ॥ ६ ॥
द्व्यंगुलं घ्राणवंशन्तु तदूर्ध्वं द्विकलं स्मृतम् ।
विद्धि वक्त्रविकासं च द्वियवं चाग्रतः क्रमात् ॥ ७ ॥
तमेवहि यवांशेन हन्वन्तं तनुतां नयेत् ।
घ्राणवंशस्य पक्षौ द्वौ मध्यनिम्नौ च संहतौ ॥ ८ ॥

यवद्वयेन सार्धेन दृग्घ्राणाभ्यां तु चान्तरं ।
अथोद्‌ळन्तु दृग्द्रोणे यवमानेन संचितम् ॥ ९ ॥
ललाटं साळकं प्राग्वत् दृङ्मध्यं सांगुला कला ।
नृसिंह्मस्य मुखे विद्धि परित श्चाष्टलोचनम् ॥ १८० ॥
ततोष्ठकण्ठदेशाच्च कुर्या त्कर्णद्वयोज्झितम् ।
तत्कर्णद्वयमानेन ललाटान्तं नये त्पुनः ॥ १ ॥
प्रमाणा त्प्रा क्प्रणीताच्च संरम्भाघ्रातलक्षणम् ।
प्रफुल्लविकसच्छिद्रं घ्राणं वंशान्वितं भवेत् ॥ २ ॥
तच्छिद्रपूर्वमानाच्चा प्यस्य वै त्रियवाधिकम् ।
सगोळ मुत्तरांगेषु सकलांशं च लोचनम् ॥ ३ ॥
अधरोष्ठः परिज्ञेयः स चतुर्यव मंगुलम् ।
सार्धं चतुष्कलं वक्त्रं शेषायामो हनो स्स्मृतः ॥ ४ ॥
तद्विकासः परिज्ञेयो नेत्रमानं यवाधिकम् ।
अग्रतो ग्रास मायाति सृक्विण्यन्तं हि चांगुलम् ॥ ५ ॥
सर्ववृत्तं तदर्धेन नेत्रयुग्मं सविस्मयम् ।
पूर्ववद्विस्तृतं श्रोत्रं कलार्धेन तदुन्नतेः ॥ ६ ॥
तुल्या चेन्दुकला युग्मयोगस्य भ्रूस्त्रिगोळका ।
तन्मध्यन्तु कलामानं शंखावर्तोपम म्महत् ॥ ७ ॥
भागमानं सटावृत्तं कार्यं तच्छिरसि स्फुटम् ।
दैर्घ्येण सार्धतालं च क्ष्माधरस्याननं स्मृतम् ॥ ८ ॥
विस्तारेण ललाटाच्च तन्मानं द्व्यंगुलोज्झितम् ।
सौम्यरूपस्य च विभोः प्रोद्यतस्य कलोज्झितम् ॥ ९ ॥
तच्चतुर्थांशमानेन पोत्रदेशस्य विस्तृतिः ।
तस्योपरिष्टा द्वाहुल्यं तत्समं चांगुलन्त्वधः ॥ १९० ॥
हनुद्वयस्य वै मानं सार्धं सप्तांगुलं स्मृतम् ।
शेषमाननरन्ध्रं तु सृक्विणीभ्यां यदन्तरम् ॥ १ ॥

तद्विकासश्च सार्धेन कलार्धेनाग्रदेशतः ।
स एवांगुलमानेन विज्ञेय स्त्रिवर्णाद्वयात ॥ २ ॥
घ्राणरन्ध्रश्च वक्त्रोक्ते दंष्ट्रे द्व्यर्ध [ त्वर्ध ] कलोन्नते ।
नासावंशं यथापूर्वं कदळीनाडिपृष्ठवत ॥ ३ ॥
श्रोत्रे वाजिमुखोक्तेतु कोटे स्सप्तकलान्तरे ।
तत्तुल्ये लोचने किन्तु प्रान्ततीक्ष्णे यवोज्झिते ॥ ४ ॥
एतेषां विहिता ग्रीवा ह्यंगुलिद्वितयेन तु ।
प्रत्येकदेशा त्संयुक्ता सौम्यमूर्त्युदिता च या ॥ ५ ॥
विनोच्छ्रायेण नृहरे र्यस्य गात्रस्य या प्रमा ।
सा सा सवेष्टना द्व्यासा त्कलार्धेनाधिका भवेत् ॥ ६ ॥
वक्षः कट्युदरांसस्फि क्कलामानाधिकानि च ।
तथैव नखपत्राणि देह श्चास्य समांसलः ॥ ६ ॥
सम्पूर्णो दक्षिणावर्तै र्लोमभि श्चातिकुंचितैः ।
त्रिचतुःपंचवक्त्रस्य विनैवोर्ध्वमुखेन तु ॥ ८ ॥
दक्षिणोत्तरवक्त्राभ्यां ह्रासं कुर्या द्विगोळकम् ।
विकास स्सिह्मवक्त्रोक्त उदग्वक्त्रस्य तत्र च ॥ ९ ॥
समो दृक्सन्निवेश स्तु चतुर्णां मोक्षसिद्धये ।
आरोग्यभोगकैवल्यप्राप्तये धांगुलेनतु ॥ २०० ॥
कुर्या त्सव्यापसव्याभ्या मधो दृक्सन्निवेशनम् ।
सह पूर्वानने चैव सम्यक्प्रत्यङ् मुखस्य च ॥ १ ॥
निष्ठा [ ष्का ] सा यामविस्तारघ्राणदृक् भ्रूश्रुतिष्वथ ।
ईषत्तिर्यक्क्षितिन्यस्त दृङ्मुखं दक्षिणं शुभम् ॥ २ ॥
तद्वच्च पोन्नदृग्वक्त्र मुत्तरं सर्वसिद्धिकृत् ।
स्वकार्यसूचना न्न्यूनं तन्मन्त्रस्य च सन्निधिः ॥ ३ ॥
अतोन्यथा समाश्रित्य शान्ति मास्ते च मन्त्रराट् ।
नित्यं तत्सन्निधानाच्च भूतवेताळराक्षसाः ॥ ४ ॥

आदर्शना त्पलायन्ते आविशन्ति च दर्शनात् ।
आदाय शिरसा मन्त्रिसमाज्ञां सम्प्रयान्ति ते ॥ ५ ॥
अत स्समाचरे द्यत्ना द्येन स्या द्बिम्बसन्निधिः ।
नाहि तत्सन्निधाना द्वै कश्चि दारभते शुभम् ॥ ६ ॥
वराहदंष्ट्रं खिन्नाक्षं तथा चिपिटनासिकम् ।
विधेयं पंचमं वक्त्रं पंचवक्त्रस्य वै विभोः ॥ ७ ॥
अस्याधरोत्तराभ्यां त्वप्योष्ठाभ्यां समता भवेत् ।
विभिन्नतांगुलार्धेन ताभ्यां तन्मध्यगा स्फुटा ॥ ८ ॥
कार्या दशनपाळी वै मूलमध्याग्रत स्समा ।
कलार्धेनोल्वणं वृत्तं तद्दण्डद्वितयं ततः ॥ ९ ॥
द्विकलं चाग्रतःश्मश्रु कलाचार्धकलाक्रमात् ।
सम्बन्धवेणिः पूर्वोक्त मानेन शुभकृद्भवेत् ॥ २१० ॥
सिंहसूकरवाज्या [ न्मु ] ख्यवक्त्राणां सौम्यतां नयेत् ।
प्रमाणं दृग्गता लक्षा द्व्यवहारमयात्तु वै ॥ १ ॥
विकास श्चाश्ववक्त्रोक्त स्सौम्यरूपस्य भूभृतः ।
तदाद्योक्तस्तु नृहरेः प्रागुक्तो य स्सचोदितः ॥ २ ॥
तथा चक्रांगभावित्वे विभो श्शक्रीश्वरस्य च ।
हारनूपुरवस्त्रस्रक्कटकांगदभूषिता ॥ ३ ॥
माल्योपवीतकेयूर मकुटाद्युपशोभिता ।
प्रतिमामन्त्रमूर्तीनां कृता भवति सिद्धिदा ॥ ४ ॥
यत्पुरा पंचधा प्रोक्तं वाहनं प्राणदैवतम् ।
तस्य बिम्बसमुत्थेन तालेन मुखमण्डलम् ॥ ५ ॥
द्व्यंगुलन्तु ललाटोक्तं जटाबन्धो द्विलोचनः ।
द्व्यंगुलेनोन्नतः कण्ठः उरः पंच कलं स्मृतम् ॥ ६ ॥
अष्टांगुलं तदुदरं कटिः पंचांगुलोन्नता ।
नवांगुलोन्नता वूरू जानुनी द्व्यंगुले स्मृते ॥ ७ ॥

अष्टांगुलोच्छ्रितेजंघे द्व्यंगुलेपादपिण्डके ।
शममेकंकलाहीन न्तद्ग्रीवायाश्चवेष्टनम् ॥ ८ ॥
बिम्बतुल्यापरिज्ञेया सर्वदास्यांगविस्तृतिः ।
तद्विभागाधिकंविद्धि वेष्टनंह्युदरस्यच ॥ ९ ॥
परिधिःकटिदेशस्य चतुर्नेत्राधिकस्तुवै ।
बिम्बोक्तन्तदशंविद्धि तदूर्वोर्मूलवेष्टनम् ॥ २२० ॥
तदेवजंघामध्यस्य जंघान्तस्यतदेवहि ।
पादंपंचकलायामं चतुरंगुष्ठविस्तृतम् ॥ १ ॥
त्र्यंगुलंपाणिदेशाच्च अंगुष्ठोर्धकलासमः ।
त्रिज्ञेयाअंघ्रिदैर्घ्या [ देशा ] च्चयवो [ वे ] नांगुलयःक्रमात् ॥ २॥
नाभिरन्ध्रंसुविस्तीर्णं द्व्यर्धलोचनविस्तृतम् ।
मध्यमांगुलिपर्यन्तं मणिबन्धान्नवांगुलम् ॥ ३ ॥
त्रिकलःपाणिविस्तार स्तन्नखानिशितोन्नताः ।
तद्बाहुमस्तकंविद्धि उच्छ्रायेणद्विलोचनम् ॥ ४ ॥
भुजोपभुजयुग्मंयत् तद्वितालसमंस्मृतम् ।
कलार्धेनाधिकंम्बिम्बं बाहोस्तद्बाहुवेष्टनम् ॥ ५ ॥
बिम्बोक्तांसद्वितीह्येव [ ? ] स्तनभूल्लोचनोल्वणा ।
वृत्तवैपुल्यमानेन लोचनेपद्मपत्रवत् ॥ ६ ॥
भ्रूयुगंनरसिंहोत्थं घ्राणाग्रंशुकचंचुवत् ।
कलार्द्धमानंदीर्घंच तद्वंशंगजपृष्ठवत् ॥ ७ ॥
स्वायामदीर्घंतत्पक्ष युगळंकुक्षिदेशगम् ।
तदेवदैर्घ्यार्धेन विस्तृतंहंसपक्षवत् ॥ ८ ॥
स्वपक्षमानाद्द्विगुणं तत्पुच्छंशतशाखकम् ।
सपक्षमिममायामं सात्यंतवयवान्वितम् ॥ ९ ॥
सर्वेषांविद्धिसामान्यं विशेषाख्यमथोच्यते ।
ऊरुद्वयान्नयेधास मंगुलानांत्रयंतथा ॥ २३० ॥

जंघाकाण्डोच्छ्रितेःकुर्यां जंघाभ्यांचात्रवेष्टनम् ।
बिंबाळयंमणिबन्धस्य सममूळांमहामते ॥ १ ॥
ज्वाळदेशात्तदर्धेन सहचार्धांगुलंनतु ।
पादिजाळपरिज्ञेयं विस्तारेणषडंगुलम् ॥ २ ॥
शेषंसत्योदितंसर्वं सर्वेषांविद्धिसर्वदा ।
किन्तुपादोज्झितौपक्षौ दैर्घ्यात्तद्दळविस्तृतौ ॥ ३ ॥
एषाश्चोड्डीयमानानां स्वायामापक्षविस्तृतिः ।
पंचारांचपरिज्ञेया स्थितानामर्धलक्षणा ॥ ४ ॥
एतदादायमानन्तु पुच्छभ्रूपक्षवर्जितम् ।
विद्धिवामनरूपस्य लक्षणंकिन्तुलांगलिन् ॥ ५ ॥
ललाटनासावक्त्रेभ्य स्समादायांगुलत्रयम् ।
मस्तकस्योपरिष्टात्तु जटाबन्धंप्रकल्पयेत् ॥ ६ ॥
जटावसानमायामं यथास्यात्पंचतालकम् ।
इत्युक्तंलेशतोबिम्ब लक्ष्मपीठमथोच्यते ॥ ७ ॥
बिम्बानामुपविष्टानां चतुरश्रन्तुतद्भवेत् ।
चतुरश्रायतश्चैव प्रोत्थितानांसदैवहि ॥ ८ ॥
वृत्तवृत्तायतत्वेन ह्यनयोरूपमन्यथा ।
यांगुलैः परमाणूथै राराधकमयैस्तुवा ॥ ९ ॥
यतेर्ज्ञातुसमायामं द्वाराद्वामन्दिरोत्थितात् ।
तन्मानेनतुपीठस्य दैर्घ्यमर्धेनविस्तृतिः ॥ २४० ॥
द्वारोर्ध्वाच्च निरन्तानि एकपूर्वाणि वै पुरा ।
सन्त्यज्य द्वादशांशा ह्वे अधः पीठोन्नति स्त्रिभिः ॥ १ ॥
शेषेणात्रांशसंघेन प्रतिमा चोत्थिता भवेत् ।
अथवा वाहनारूढा न्यूना वा मध्यमोत्तमा ॥ २ ॥
चतुर्भि र्द्वादशांशै स्तदुपविष्टस्य चोन्नतिः ।
विहिता चास्य सर्वत्र प्रतिमार्धेन विस्तृतिः ॥ ३ ॥

तत्त्र्यंशपरिलुप्ताच्च चतुर्थांशोज्झिताथवा ।
परिवारवशेनैव चातुरात्म्यस्यवैपुनः ॥ ४ ॥
अलुप्तांशंचविहितं पीठायामंचसर्वदिक् ।
चतुर्दिक्द्दग्गतस्यैव मेकदिग्द्दग्गतस्यच ॥ ५ ॥
तद्देवदैर्घ्यद्विगुणं लांछनैरावृतस्यच ।
सार्द्धंचानावृतस्यैव तद्बाहुल्यंपुरोदितम् ॥ ६ ॥
एकैकंलक्ष्मभेदेन तत्संख्यंविद्धिवैपुनः ।
अनन्तासनमाद्यंच द्वतीयंपक्षमन्दिरम् ॥ ७ ॥
कमलांकं तृतीयन्तु चतुर्थं चक्रभूषणम् ।
एवंहिसर्वसामान्यं पीठानांहिद्विरष्टकम् ॥ ८ ॥
भेदभिन्नं समासेन पुनरेवनिबोधतु ।
दिक्षुलक्ष्माणिपीठानां विद्धिकण्ठगतानिच ॥ ९ ॥
अन्योन्यसन्निवेशाच्च तेषां बह्वात्मनापुनः ।
चक्रांबुजाभ्यां तत्स्थाभ्यां लुप्ताभ्या मपिसत्क्षितेः ॥ २५० ॥
ताभ्यामन्योन्ययोगाच्च दिक्ष्वनन्त खगाश्रयात् ।
द्विद्व्यात्मनाद्व्यात्मनावा बहुत्वमवधारय ॥ १ ॥
पद्मेनोर्ध्वगतेनैव द्वयं चक्रेण तद्बहिः ।
एवं ह्यधोगतेनैव परिज्ञेयं द्वयं द्वयम् ॥ २ ॥
उपरिष्टात्तु पद्माभ्या मधश्चक्रं द्वयं द्वयम् ।
द्वितयव्यत्ययाच्चान्य त्परिज्ञेयम्महामते ॥ ३ ॥
अन्तर्बहिस्स्थितिवशा च्चक्र पद्म द्वयस्यच ।
व्यत्यया दनयो र्विद्धि ऊर्ध्वभागाच्चतुष्टयम् ॥ ४ ॥
अधोभागा देवमेव चतुष्कमपरन्तुवै ।
पीठाना मष्टक मिद मधस्ता दूर्ध्वत स्तु वा ॥ ५ ॥
युक्तमेकेनवैकुर्या च्चक्रेण कमलेन वा ।
चक्राकारास्तु विहिता ह्येकभ्रम समाश्रिताः ॥ ६ ॥

बहुवोहि दळास्तद्व दीषद्वैकर्णिकान्विताः ।
इतिलांछन संचारो बहुधाते मयोदितः ॥ ७ ॥
यस्मिन् प्रकृति भूतेतु पीठे तदधुना शृणु ।
कृत्वा द्विर्दशधा पीठं पुरा यामा त्समैः पदैः ॥ ८ ॥
एकेन चरणं जंघा कलशौ च त्रिभि स्त्रिभिः ।
कण्ठ [ र्ण ] वीधिमथैकेन षड्भिः कण्ठं [ र्ण ] तदूर्ध्वतः ॥ ९ ॥
भागेन कण्ठ [र्ण ] सूत्रन्तु शुक्तिकांशत्रयेण तु ।
उष्णीषं च तदूर्ध्वेंतु कुर्या दंशद्वयेन वै ॥ २६० ॥
निर्गमःस्वदळेनैव विहितश्च रणस्य च ।
चतुर्दिक्षु महाबुद्धे क्षेत्रतोभ्यधिकःस्मृतः ॥ १ ॥
सर्ववृत्तं घटं कुर्यात् पल्लवै र्वारकै र्युतम् ।
परितोंशद्वयेनैव कर्ण [ ण्ठ ] पीठं प्रवेशयेत् ॥ २ ॥
अन्तःप्रवेश मेकेन विध्यंशेन गळस्य च ।
कुर्या द्गळप्रवेशस्य समां सूत्रस्य निस्सृतिम् ॥ ३ ॥
शुक्ते रधःक [र्ण ] ण्ठ सूत्रभागा त्पादेन निर्गतम् ।
वदनान्तं समासेन शुक्ते स्संकोच माचरेत् ॥ ४ ॥
उष्णीषघटजंघाना मश्रिसाम्यं यथास्थितम् ।
घटवद्भूषये च्छुक्तिमरकै र्वाब्जपल्लवैः ॥ ५ ॥
तत्रोपरिष्टा त्परिधिं चतुरंशकसम्मितम् ।
सन्त्यज्य लिखनेत् द्रोणी मंशनिम्नां समन्ततः ॥ ६ ॥
विस्तृते मध्यभागेथ स्वत्रचंशेनतु निर्गमम् ।
तन्मानं चतुरश्रन्तु पीठक्षेत्रा द्विनिर्गतम् ॥ ७ ॥
तच्चाग्रत स्त्रिधा कृत्वा पक्षभागौ क्षय न्नयेत् ।
अनुपादेन चामूलात् सम्यङ् लांगलवक्त्रवत् ॥ ८ ॥
अग्रतो मूलदेशाच्च कृत्वादौ वै त्रिधा त्रिधा ।
भूय स्तान्निखने न्मध्या ज्जलं याति यथाद्रुतम् ॥ ९ ॥

सूकराननतुल्यन्तु भवत्येव म्महामते।
कुर्या द्वै शंखसदृश म्मकरास्योपमन्तु वा॥ २७० ॥
जलनिर्गम मेतद्वै पीठेषूदितलक्षणम्।
न कुर्या त्कर्मबिम्बाना मशमादिमितात्मनाम्॥ १ ॥
चित्रमृत्काष्ठजानां तु चपलानां विशेषतः।
सप्रणाळं भवे त्पीठ मासनं च प्रणाळकम्॥ २ ॥
भूरि नीरादिना स्नानं यत्र यच्छतिसाधकः।
प्रत्यहं सद्विना तत्र प्रत्यवायो भवे त्स्फुटम्॥ ३ ॥
एवमेव बृहद्बिम्बभूषितानां विधीयते।
धातुशैलोत्थितानां च निमित्तस्नपनार्थतः॥ ४ ॥
भद्रासनगते कर्मबिम्बे तस्य समाचरेत्।
सततं च यथालाभं दधिक्षीरघृतादिना॥ ५ ॥
तोयेन तन्नये यत्नात् भूभागं वा प्रतिग्रहम्।
यथा नाक्रम्यते पादै जन्तुभि स्तन्महर्धिदम्॥ ६ ॥
अतः प्रणाळं विहितं निषिद्ध मत एव हि।
तत्संस्थापनकालेतु देवानां दिग्विधेहि तम्॥ ७ ॥
प्राक्प्रत्यगाननानां च तदुदक् दिग्गतं शुभम्।
उदक्दक्षिणवक्त्राणां प्राग्भागे विहितं सदा॥ ८ ॥
तत्पुन र्भद्रपीठीय देवा द्वामेर्थसिद्धिकृत।
सदैवाराधकानान्तु विलोमा द्विपरीतदम्॥ ९ ॥
पीठवच्च परिज्ञेयं प्रासादस्य स उच्यते।
शुभे दिनेनुकूले च नक्षत्र पूजिते ग्रहे॥ २८० ॥
लग्ने स्थिरे स्थिरांशे च दृक्शुद्धे चोत्तरायणे।
दिव्या द्युत्पातसंशुद्धे सितपक्षे मलेम्बरे॥ १ ॥
आजलान्तं कृते खाते पूर्ववत्सम्प्रपूरिते।
विमुक्तदोषे भूभागे सर्वलक्षणलक्षिते॥ २ ॥

पूरणा दंशशेषेतु सूपळिप्ते धरातळे ।
चतुष्षष्टिपदे भूते प्रागवत्सूत्रेण सर्वदिक् ॥ ३ ॥
स्नात श्शुक्लाम्बर स्स्रग्वी कृतन्यास स्सुशान्तधीः ।
सर्वसाधनसंयुक्त श्चार्घ्यपात्रसमन्वितः ॥ ४ ॥
मङ्गळ्यकुम्भ मादाय ध्यायमानोच्युतं हृदि ।
सहचैकायनै र्विप्रै स्सदागमपरायणैः ॥ ५ ॥
तथा ऋङ्मयपूर्वैस्तु आमूलाद्भगवन्मयैः ।
विशे त्प्रासादभूभाग म्मध्ये कुम्भ न्निधाय तम् ॥ ६ ॥
कुर्या न्निरीक्षणं भूमे स्ताडनं प्रोक्षणं ततः ।
सेचनं पंचगव्येन सह चास्त्रोदकेनतु ॥ ७ ॥
ॐकाराद्यं पवित्रान्तं मन्त्राणां प्राक्चतुष्टयम् ।
पाठयेच्च सपुण्याहं ब्राह्मणान् कृतमण्डनान् ॥ ८ ॥
बहूवृचाचोत्र ( न् शाकुनं ) ना सूक्तं ततो भद्रं यजुर्मयान् ।
इडामयेति सामज्ञां श्शन्तायै रित्यथर्वणान् ॥ ९ ॥
ईशकोणा त्समारभ्य प्रागादौ प्रतिपङ्क्तिषु ।
द्वादशाक्षरमन्त्रेण स्वनाम्न तु पदे पदे ॥ २९० ॥
नतिप्रणवगर्भेण दैवतं देहलक्षणम् ।
यष्टव्यो वास्तुपुरुषो दधिस्रक्चन्दनादिना ॥ १ ॥
सात्विकेनोपहारेण अग्नौ सन्तर्पये त्ततः ।
कुर्या त्कुम्भप्रतिष्ठानं यथा तदवधारय ॥ २ ॥
पूर्ववत्तोरणाद्यैस्तु भूभाग मुपशोभयेत् ।
कर्णिका ( निर्णिक्ता ) लयस्वक्त्रस्य अग्रत स्तत्क्षिते र्बहिः ॥ ३॥
सर्वोपकरणोपेतं कुर्या न्मण्डप ( ल ) मुत्तमम् ।
कुण्डाष्टकान्तरस्थं च स्थलं तत्राष्टहस्तकम् ॥ ४ ॥
सपिण्डिका द्विहस्तास्तु कुण्डाः पूर्वोक्तलक्षणाः ।
त्रिहस्ता [ स्त ] पाचि[ रि ]ता वीधी स्यादेवं द्विजस त्तमः ॥५॥

पूर्ववत्प्रतिकुण्डेतु विनिवेश्यं च साधनम् ।
आत्मन श्चोत्तरे कुर्यात् कुण्डं चाथ समस्थले ॥ ६ ॥
दक्षिणे पूर्ववद्देव मवतार्य यजे त्क्रमात ।
स्थलायां स्थण्डिलस्योर्ध्वे उन्नतायां च पूर्ववत ॥ ७ ॥
तर्पयित्वा यथाकाम मुद्धृत्याग्निगणं ततः ।
दिक्कुण्डेषु विनिक्षिप्य संस्कृतेषु च पूर्ववत् ॥ ८ ॥
तथैवच विदिक्स्थेषु उद्धृत्याभ्यर्च्य वै क्रमात ।
ततःप्रभवयोगेन चतुर्दिक्षुनिवेशयेत ॥ ९ ॥
चतुरोवासुदेवादीन् नाम्नाएकायनान् द्विजान् ।
स्वाभिःस्वाभिरसंख्यन्तु तैः कार्यमभिधायच ॥ ३०० ॥
कर्मावसानंहवनं साज्यैस्तुतिलतण्डुलैः ।
एवमप्यययोगेन वाय्वादीशानगोचरम् ॥ १ ॥
ऋग्वेदाद्यांस्तु चतुर स्संस्कृत्यादौ तथान्यसेत ।
तैरप्यच्युत लिंगैस्तु स्वशाखोक्तै श्चपावनैः ॥ २ ॥
हवनंविधिवत्कार्यं भक्तियुक्तेनचेतसा ।
अथेशकोणमासाद्य ब्राह्मणैरपरैस्सह ॥ ३ ॥
प्राक्निर्दिष्टन्न्यसेत्तत्र स्नानोपकरणन्तुयत् ।
दशार्द्धगन्धपूर्तन्तु कलशेषु पृथ क्पृथक् ॥ ४ ॥
तानर्च्यार्घ्यादिनापश्चात् द्विषट्केनाभिमन्त्र्यच ।
समानीयशिलोपेतान् कलशान् पूर्वसम्भृतान् ॥ ५ ॥
उत्कृष्टधातुसम्भूतान् नवशैलमयांस्तुवा ।
समान् सपक्वान् सुघनान् न्मृण्मयांस्तदभावतः ॥ ६ ॥
द्वादशांगुलविस्तीर्णां स्तन्मानेनतुचोन्नतान् ।
द्विगुणान् सतिसामर्थ्ये नृपाणां हेमजान् हितान् ॥ ७ ॥
तत्संख्यं चतुरश्रन्तु द्वादशांगुलविस्तृतम् ।
तत्रचंशतुलयंबाहुल्यात शिलाबृन्दं समाहरेत ॥ ८ ॥

संस्थाप्यविधिवत्कुम्भान् पूर्वोक्तेनक्रमेणतु ।
कम्बुतुल्यमथैकंवा तत्कण्ठं त्र्यंगुलोन्नतम् ॥ ९ ॥
तद्गुणैरपिविस्तीर्णं तत्खातोष्टांगुलस्स्मृतः ।
परितःकर्णवर्जन्तु शंखोवासुषितोमहान् ॥ २१० ॥
विहितोहस्तमात्रस्तु अन्तश्शुद्धस्तुसाक्षतः ।
एवंहिसान्तराद्धाद्या त्समालभ्याधिवास्यच ॥ १ ॥
फलैर्हेमादिकैरत्नै स्सर्वौषधिमयैस्ततः ।
गन्धैर्बीजैस्तथाधान्यै र्विद्रुमाद्यैस्तुमौक्तिकैः ॥ २ ॥
नेत्रवस्त्रैरलंकारै र्भूषयेत स्रग्वरैश्शुभैः ।
द्वादशाक्षरमन्त्रेण एकैकस्यसमाचरेत् ॥ ३ ॥
मूर्तिसंसिद्धयेन्यासं प्रण ैस्तच्चिदात्मना ।
ततश्चार्घ्यादिकैर्भोगै र्बल्यन्तैर्विविधैर्यजेत् ॥ ४ ॥
शिलास्वेवं कृतेःपश्चा न्निनयेत्कुण्डसन्निधिम् ।
सशिलंकुम्भबृन्दन्तु आधारेषूपरिन्यसेत् ॥ ५ ॥
तदाधारशिलांपश्चात तत्रवामण्टपाद्बहिः ।
एवमेवचसंस्कृत्य भावयेत्प्रणवेनतु ॥ ६ ॥
ज्वलन्तींगोसहस्रेण खचितांसूर्यबिम्बवत ।
तत श्चाराध्यमन्त्रन्तु सन्तर्प्य शतसंख्यया ॥ ७ ॥
मध्ये तत्कलशं न्यस्य सांगं सपरिवारकम् ।
निश्शेषशक्तिगर्भन्तु व्यापकं ब्रह्मतत्ववित ॥ ८ ॥
अत ऊर्ध्वं तिर्यगाभि र्वागाद्याभिश्च शक्तिभिः ।
व्रतमूर्तिसमेताभि रभिन्नाभिस्तु तत्वतः ॥ ९ ॥
पाठये द्ब्राह्मणां स्तत्र आत्मव्यूहन्तु मन्त्रराट् ।
तथैवात्मानुवादं च प्रणवाद्यन्तगन्तु वै ॥ २२० ॥
तमर्चयित्वा विधिव त्तर्पयित्वा त्वनन्तरम् ।
दिक्स्थितानां च कुम्भानां वासुदेवादिकान्न्यसेत् ॥ १ ॥

पूर्ववच्चानिरुद्धाद्यान् विदिक्संस्थापितेषु च।
पाठये च्चातुरात्मीयं संज्ञामन्त्रचतुष्टयम् ॥ २ ॥
प्रभवाप्ययथयोगेन तत स्सूक्तन्तु पौरुषम्।
ऋग्वेदान् पाठये द्भक्त्या युंजते त्यपरान्यजुः ॥ ३ ॥
रथन्तराख्यं यत्साम सामज्ञान् भगवन्मयान्।
सहस्रशिरसं चेति मन्त्रां श्चाथर्वणां स्ततः ॥ ४ ॥
एकस्मि न्वा महाबुद्धे सर्वोक्तं कलशे हितम्।
तथैव हवनं कुण्डे मध्यमे विहितं स्वयम् ॥ ५ ॥
किन्तु क्रमेण वै मन्त्रान् पाठयेच्च यथास्थितान्।
एवं सम्पातहोमन्तु कृत्वा पूर्णान्तिकं ततः ॥ ६ ॥
महाशक्तिसमूहस्तु पर स्सामर्थ्यलक्षणः।
अभेदेन च मन्त्रादिमूर्तीनां य स्स्थित स्स्फुटम् ॥ ७ ॥
स सन्धेय शिलानां च स्वनाम्ना प्रणवेनतु।
ज्ञानभासा निवसति तथानन्तबला प्रभा ॥ ८ ॥
सर्वगा ब्रह्मवदना द्योतकी सत्यविक्रमा।
सम्पूर्णा चेति कथिता श्शक्तयो विश्वधारिकाः ॥ ९ ॥
या शिला कलशाधारसंज्ञातां विद्धि सर्वगाम्।
सामर्थ्यशक्तिसामान्यां निष्कलां पारमेश्वरीम् ॥ ३३० ॥
सन्तर्प्य मूलमन्त्राच्च शिखामन्त्रेण लांगलिन्।
अजस्य नाभावध्येक मन्त्रेणैकायनै स्ततः ॥ १ ॥
तादर्थ्येनतु होतव्यं मृन्मयैस्तु तथैव हि।
होतव्य मस्य वाग्मीयं गायत्रीभि रतो परैः ॥ २ ॥
होतव्यं ब्राह्मणै स्सम्य क्तद्ध्याने रुपलक्षकैः।
दत्वा पूर्णां स्वयं कृत्वा स्थलस्थस्यार्चनं पुनः ॥ ३ ॥
बलिदानश्च भूतानां समाचम्य ततो व्रजेत्।
प्रासादब्रह्मभूभागं न्यसे त्तत्र महाशिलाम् ॥ ४ ॥

संस्मरं श्चक्रमन्त्रन्तु सानन्तं प्रणवेन वै ।
बीजभूतं तदन्तस्स्थ मध्वषट्कं स्मरन्यजेत् ॥ ५ ॥
निश्शेषमन्त्रबृन्देन होमस्यार्थे रनन्तरम् ।
द्वारदिग्वीक्षमाणन्तु मध्ये मन्त्रघटं न्यसेत् ॥ ६ ॥
स्वदिक्ष्वन्यान्यथावस्थान् स्वैं स्वै मंन्त्रै र्निवेशयेत् ।
तत स्स्वशक्तिपाषाणै रेकैकं स्थगयेत घटम् ॥ ७ ॥
पूरये दस्त्रमन्त्रेण घटाना मन्तरं ततः ।
मृदु मृद्वालुकाभिस्तु सुधयाचलसिद्धये ॥ ८ ॥
संवेष्टय नेत्रवस्त्रैस्तु ऋग्वेदान् पाठये ततः ।
आत्वाहार्षेति सूक्तन्तु प्रतिष्ठा सामसामगान् ॥ ९ ॥
द्वादशाक्षरसंयुक्तं बलमन्त्रं पुनः पुनः ।
वक्तव्यं ब्रह्मनिष्ठैस्तु प्रणवान्तं सुभावितैः ॥ ३४० ॥
तदेकतनुतां यातं संस्मरे त्प्रणवेनतुं ।
मूर्त्या दिशन्ति निष्टं यन्नामरूपक्रियात्मकम् ॥ १ ॥
द्वादशाक्षरमन्त्रेण भूय स्सहृदयंगमैः ।
तत्राराध्यं स्वमूर्तिन्तु संयजे त्तेजसां निधिम् ॥ २ ॥
तत स्त्वां भगवन् भोगैः पाठये त्पांचरात्रिकान् ।
अर्चामि तेति ऋग्वेदा नर्चा सामच तद्विदः ॥ ३ ॥
ततः परिगृहीतेतु क्षेत्रे देवगृहीयके ।
द्वादशांगुलमानन्तु दिग्विदिक्ष्वष्टकं न्यसेत् ॥ ४ ॥
स्नापितं पूजितं सम्य क्शिलानां शुभलक्षणम् ।
तदन्त स्सन्निरोद्धव्या बुद्धिधर्मगुणाः क्रमात् ॥ ५ ॥
धर्माद्या श्चाग्निकोणात्तु याव दीशपदं पुनः ।
प्रागादा वुत्तरान्तं च अधर्माद्यं चतुष्टयम् ॥ ६ ॥
शिलाना मन्तरे भूमौ षट्कं षट्कं क्रमेण तु ।
न्यस्तव्यं पूर्ववर्णाद्य वर्णानां सावधानकम् ॥ ७ ॥

शब्दब्रह्मानुविद्धां च कृत्वैवं बुद्धिवागुराम् ।
सूत्रभूतां न्यसेत् सम्य क्प्रासादतलसंस्थिताम् ॥ ८ ॥
न्यसे त्प्राङ्गणभित्त्यर्थं तथैव हि शिलाष्टकम् ।
तासु संरोधये त्सम्य क्प्रागुक्तां स्तु दिगीश्वरान् ॥ ९ ॥
चक्रं तदन्तभूमीनां भ्रमद्वह्निस्फुलिंगवत् ।
क्षार्णेन चिन्तये द्व्याप्तं भूभागं चांगणीयकम् ॥ ३५० ॥
आभोगं तदध श्शेषं तदूर्ध्वे गगनेश्वरम् ।
बहिः प्रांकणभित्तीनां सास्त्रं सपरिवारकम् ॥ १ ॥
प्रागादा वीशकोणान्त मिन्द्राद्यं चाष्टकं न्यसेत् ।
तथाविधेषूपलेषु अन्तर्भूमिगतेषु च ॥ २ ॥
तत्स्वनाम्नार्चयित्वातु ऋग्वेदान् पाठये त्ततः ।
क्लीबो न विद्धानिति वै ये देवास्तु यजुर्मयान् ॥ ३ ॥
देवव्रतं च सामज्ञान् प्रविश्याभ्यन्तरं ततः ।
स्थित्वाग्रतो मन्त्रमूर्तं रध्वव्याप्ति मनुस्मरेत् ॥ ४ ॥
बीजत श्वांकुरीभूता पुरस्ता द्व्यक्ति मेति सा ।
प्रासादपीठपर्यन्तं कुम्भाधारोपलान्तु वै ॥ ५ ॥
भुवनाध्वा यथावस्थो भावनीयः पुरोदितः ।
गर्भोच्छ्रायाववधिं यावत् पादाध्वानं विलोकयेत् ॥ ६ ॥
मन्त्राध्वा शुकनासान्त स्तत्वाध्वावेदिकावधिः ।
कलाध्वाण्डगजा [ तुगळा ] न्तश्च वर्णाध्वाच तदूर्ध्वतः ॥ ७ ॥
समीकृत्य पुरा सर्वं प्रासादं प्रारभे त्ततः ।
तलानूनाधिकाञ्चैव सांगुलै रुचितैः करैः ॥ ८ ॥
द्विर्द्वादशकरं याव त्तालेनोनाधिकेन तु ।
शुभाय सिद्धये विद्धि गर्भं देवगृहस्य च ॥ ९ ॥
कृत्वा क्षेत्रांगुलानां च कराणां वा घनं पुरा ।
त्यजे त्तदष्टभि स्सम्य ग्यच्छेषं तद्विचार्य च ॥ ३६० ॥

एकाद्यष्टमपर्यन्ता ध्वजधूमम्रुगेश्वराः ।
श्वाच गोखरमातंग वायसा स्तु तत श्शुभाः ॥ १ ॥
एकत्रिपंचसप्ताख्या स्सर्वत्रैव विधीयते ।
गर्भषट्भाग मानेन तद्वाहि र्भित्तिविस्तृतिः ॥ २ ॥
तन्मानं परित स्त्यक्त्वा भित्ति रन्या विधीयते ।
एवमत्रक्रमेणैव सद्दभित्तिगणेनतु ॥ ३ ॥
गर्भाद्विगुणविस्तीर्णं क्षेत्रंदेवगृहस्यच ।
मन्दिरेत्वेकभित्तीये क्षेत्रमानंविधीयते ॥ ४ ॥
गर्भोक्तंतत्त्रिभागेन युक्तंयुक्तेन वर्त्मना ।
तत्रापिह्रासवृद्ध्यातु आयशुद्धिंविचारयेत् ॥ ५ ॥
एवंनिर्जगतीकंच भागपीठंविवर्जितम् ।
प्रासादक्षेत्रमानंच तद्युक्तमवधारय ॥ ६ ॥
षट्भागेनाधपादेन त्रिभागेनोभयात्मिका ।
विहिताजगतीभाग स्तत्क्रियाविस्तृतिर्भवेत् ॥ ७ ॥
अधिकार्द्धंचतुर्दिक्षु तत्पंचांशैस्तुवैत्रिभिः ।
तृतीयांशेनवैमध्ये निर्गमस्तुविधीयते ॥ ८ ॥
कोणात्कोणात्तुवैशेषं भागंभागंप्रवेशयेत ।
उच्चंगर्भसमंपीठं तत्पीठेनदळेनवा ॥ ९ ॥
पीठोक्तालयपीठस्य लक्ष्मस्थित्यंशकल्पना ।
चतुर्दिक्षुविधेयावै बहुधानन्तपूर्विका ॥ ३७० ॥
अथोच्छ्रयन्तुवैक्षेत्रा त्त्रिगुणंमन्दिरस्यच ।
कुर्याद्व्यर्धगुणंचैव द्विगुणंवायथेच्छया ॥ १ ॥
द्विरेकादशधाकुर्या त्तंचभागैस्समम्पुरा ।
विधेयंपीठवत्पश्चा देकांशेनमसूरकम् ॥ २ ॥
तदूर्ध्वंनिहिताजंघा गर्भमानेनचोन्नता ।
भवोपकरणीयाभि र्दैवताभिरलंकृता ॥ ३ ॥

जंघायामंशयुग्मेन उपयूनाधिकेनच ।
कार्यंशिखरपीठन्तु पूर्वलक्षणलक्षितम् ॥ ४ ॥
किन्तु प्रवेश निर्यासौ तत्रचार्धांशसम्मितौ ।
शिखरंचात्रविहितं भूमिकानवकान्वितम् ॥ ५ ॥
संकोच्यतत्पुरासूत्र मादायोन्नतिसम्मितम् ।
एकस्मादेकवर्णात्तु जंघोर्ध्वीयात् प्रसार्यच ॥ ६ ॥
संस्पृशेत् शिखरंपीठ मग्रसातं निरोध्यच ।
प्रासादाद्बहिरात्मत्र भूभागेत्वमलेक्षण ॥ ७ ॥
कर्णादूर्ध्वं नयेत्सूत्रं लांछमानं क्रमेणतु ।
शिखरोन्नतिपर्यन्तं चतुर्दिक्ष्वेवमेवाहि ॥ ८ ॥
पर्यटेल्लांछमानन्तु कर्णान्तर्णं महामते ।
यावत् कुमुदपत्राभा सास्याच्छिखरमंजरी ॥ ९ ॥
एवमालेख्यदृष्ट्यातु सम्पाद्यातन्तुपातत: ।
भूमिकाण्डप्रसिद्ध्यर्थं कार्यासादशथापुन: ॥ १८० ॥
उपरिष्टात्तुभागेन भवेदामलसारकम् ।
भूमयोभागमानास्तु ततस्तासांसमाचरेत् ॥ १ ॥
क्षयवृद्ध्याविधानन्तु त्यक्त्वास्थानंचभूमिकाम् ।
चतुस्त्रिद्व्येकसंख्यानि सममानांगुलानिच ॥ २ ॥
निजभूमेस्समारभ्य तानियोज्यान्यध:क्रमात् ।
पूर्वभूमेस्समारभ्य ह्यधस्थेभूमिकागणे ॥ ३ ॥
सर्वासांव्यवधानन्तु तद्विरष्टांशसम्मितम् ।
विभिन्नापीठरचना तासुकार्यायथास्थिता ॥ ४ ॥
सचक्रैर्विविधै:पद्मै: प्रादुर्भावैस्तुचाखिलै: ।
सर्वैर्वालांछनैर्मूर्तैं नृत्तगीतरसस्थितै: ॥ ५ ॥
नवांशेनोर्ध्वभागात्तु स्वपादेनविनिर्गतम् ।
उष्णीषमूर्धभूमे स्तु कार्यं वै रचनोज्झितम् ॥ ६ ॥

शिष्टं कृत्वा त्रिधा पीठं मण्डलस्थेन पूर्ववत् ।
द्वितीयेन ततः कण्ठं तृतीयेनोर्ध्वगेनतु ॥ ७ ॥
सुसमं श्रीयुतं कुर्या दण्डं धात्री फलाण्डवत् ।
नवधोष्णीषकं कृत्वा चतुर्भि र्वेदिकाभ्रमम् ॥ ८ ॥
त्रिभागपृथुलं कण्ठ मण्डं पंचांगसम्मितम् ।
पंचधा सप्तधा कृत्वा गर्भं वा नवधा पुरा ॥ ९ ॥
विहाय पक्षगौ भागौ मध्यभागगणेनतु ।
प्रासादनाडिका कार्या गर्भार्धेन विनिर्गता ॥ ३९० ॥
पादेन वा त्रिभागेन सस्तम्भाप्यथ केवला ।
उन्नता शिखरार्धेन साप्युत्पलदलोपमा ॥ १ ॥
कार्या शिखरपीठोर्ध्वं दिव्यकर्मविभूषिता ।
तत श्शुभतरं कुर्या न्मण्टपं स्तम्भसंयुतम् ॥ २ ॥
भूषितं विहगेन्द्रेण बलिमण्डलगेन च ।
चतुर्द्वारे तथा दिक्षु विधेयं मण्टपत्रयम् ॥ ३ ॥
प्रवेशत्रितयोपेतं मण्टपे मण्टपं भवेत् ।
कुर्या न्मण्टप मुक्तं वा यथाभिमतनिर्गमम् ॥ ४ ॥
रथोपरथकाद्यन्तु तेषां गर्भा द्विधीयते ।
निर्यासो दशमांशेन द्वादशांशेन लांगलिन् ॥ ५ ॥
अथवा षोडशांशेन ते कार्या नेमिवत्पुनः ।
चतुर्दिक्पक्षसंलिप्ताः पीठकर्मविभूषिताः ॥ ६ ॥
शिखरस्य चतुर्दिक्षु पीठोपरि समापयेत् ।
समं रथकयुक्त्यातु नासिकामंजरीगणम् ॥ ७ ॥
मध्यदेशाच्चतुर्दिक्षु कुर्याद्द्वारगणं समम् ।
त्रिचतुःपंचषट् भागे ततो गर्भा द्विधीयते ॥ ८ ॥
द्विगुणं चोन्नतत्वेन त्रिपंचनवशाखिकम् ।
युक्तं द्वास्थद्वयेनैव कुम्भभद्रशनैस्तु वा ॥ ९ ॥

विधिवत्स्थापनं तस्य मन्त्रपूर्वं समाचरेत् ।
संस्नाप्य मूलमन्त्रेण सम्पूज्यार्घ्यादिना हृदा ॥ ४०० ॥
शाखामूलगतां कुर्या द्धातुरत्नमयीं स्थितिम् ।
सर्वधारामयं मन्त्रं सन्निरोध्यहि तत्र च ॥ १ ॥
ज्ञानक्रियात्मकं ध्यात्वा शिखामन्त्रेण शाश्वतम् ।
दक्षिणोत्तरभागाभ्यां शाखायुग्मन्तु विन्यसेत् ॥ २ ॥
हृन्मन्त्रेण तदूर्ध्वेतु रुध्वाद्यं परमेश्वरम् ।
सन्निधीकृत्य सम्पूज्य गगनस्थे ह्युदुम्बरे ॥ ३ ॥
द्विविधं धातुजालन्तु रत्नं सिद्धार्थकां स्तिलान् ।
चन्दनाद्याहिगन्धा ये क्षीरं दधिघृतं मधु ॥ ४ ॥
शालय स्सर्वबीजानि सर्वौषध्य स्सविद्रुमाः ।
कृत्वा नेत्रेण नेत्रस्थान् द्वारोर्ध्वे विनिवेश्य तान् ॥ ५ ॥
इत्थं भोगाप्तये चैव त्विदत्थं मोक्षसिद्धये ।
चतुष्पा त्सकलो धर्म स्तत्रोर्ध्वे सन्निरोध्य च ॥ ६ ॥
चत्वारिश्रृंगाइतिं यत्पाठये इङ्मयां स्ततः ।
कर्महोमचयं कृत्वा पूर्णां मूलेन पातयेत् ॥ ७ ॥
एतद्बिम्बप्रतिष्ठानात् प्राग्व त्पश्चा त्समाचरेत् ।
सिद्धय [ स्थित्य ] पेक्षावशेनैव ह्यालयस्यतुवैविभोः ॥ ८ ॥
अनन्तभुवनंनाम सर्वकामापवर्गदम् ।
चतुष्प्रकारमेवंहि प्रासादंविद्धिपीठवत् ॥ ९ ॥
रचनासन्निवेशोत्थ भेदेनानेकधातथा ।
पतत्रीशमृगेन्द्रैस्तु निधिभूतोपमैर्घटैः ॥ ४१० ॥
शंखपद्मांकिताभिस्तु सोपानपदपङ्क्तिभिः ।
युक्तंद्वारवशेनैव तथापीठवशात्तुवै ॥ १ ॥
विस्तारःप्रतिदिक्संस्थ स्त्वरुणस्य विधीयते ।
गर्भोत्थक्षेत्रसंज्ञाच जगतीकस्यलांगलिन् ॥ २ ॥

ज्ञेयस्सजगतीकस्य तन्मानेनापिसर्वदिक् ।
एभ्यःपादादिकंकुर्यात् पादाद्यंशोज्झितन्तुवै ॥ ३ ॥
बुध्वाचायतनानांच संस्थितश्चांगने [ कणे ] पुरा ।
चतुरायतनंविद्धि प्रासादैःदिक्त्रयस्थितैः ॥ ४ ॥
आद्येनसहकोणस्थै स्तत्पंचायतनंस्मृतम् ।
विज्ञेयमष्टायतनं त्रिभिरन्यैस्तुदिग्गतैः ॥ ५ ॥
विनामद्ध्यस्थितेनैव दिग्गतैस्तु द्विभिर्दिभिः ।
तद्दशायतनन्तेन युक्तमेकाधिकं भवेत् ॥ ६ ॥
प्रवोळीपक्षगेनैव प्रासादद्वितयेनतु ।
द्वादशायतनंविद्धि सहमध्यस्थितेनतु ॥ ७ ॥
तदेवाधिकसंज्ञन्तु अतोऽन्योनन्तसंज्ञिकः ।
परस्परमुखौकुर्या त्प्रासादौद्वारदेशगौ ॥ ८ ॥
प्रासादाभिमुखाश्चैव दिक्त्रयेवस्थितास्तुये ।
कोणस्थाभ्यांचसाम्मुख्यं द्वाभ्यांद्वाभ्यां विधीयते ॥ ९ ॥
द्वाभ्यामभिमताभ्यांतु कुर्यादुचितदिङ्मुखम् ।
द्वौपरस्परवक्त्रौतु कोणदेशसमाश्रितौ ॥ ४२० ॥
द्वाराण्यनन्तायतने प्रासादानांमहामते ।
यथाभिमतदिक्स्थानि कर्तव्यान्यविशंकया ॥ १ ॥
नतत्रतेषांभवति वेधदोषःपरस्परम् ।
अंगभावगतत्वाच्च प्रधानायतनस्यवै ॥ २ ॥
अर्धेन च त्रिभागेन हितःपादेनचांगणात् ।
परण्डकस्यचोच्छ्राय स्तद्विस्तार स्तथोच्छ्रितेः ॥ ३ ॥
तच्चपीठोपमंकुर्यात् श्लक्ष्णंसोष्णीषमेववा ।
युक्तंकोटिगणेनाथ नानादेवान्तगेनतु ॥ ४ ॥
यदेकायतनंचेव त्वंगनन्तन्महामते ।
युक्तंलघुपरण्डेन केवलंवापरण्डकम् ॥ ५ ॥

यदाद्व्यायतनाद्यश्च द्वादशायतनान्तिमम् ।
एकदिग्वीक्षमाणंच चतुरश्रायतेंगने ॥ ६ ॥
वृत्तायतेवावितते प्रासादेचोक्तलक्षणे ।
यस्माद्देवालयानांच अंगनानांविशेषतः ॥ ७ ॥
चतुरश्रादिपीठानां नित्यमेवमहामते ।
अन्योन्यानुगतंत्वन्तु हितंसापेक्षकन्तुवै ॥ ८ ॥
भूमिभागवशेनैव तथैवार्चावशेनतु ।
नानाफलवशेनापि तथाशोभावशेनच ॥ ९ ॥
भूलाभश्चतुरश्रात्तु चतुरश्रायताद्धनम् ।
वर्तुळा त्सर्वकामाप्ति निर्वृति स्तु तदायतात् ॥ ४३० ॥
दृष्टादृष्टफलेप्सूनां लोकास्तु महदादयः ।
गच्छन्ति वैष्णवं स्थान मारोग्यं भूति मुत्तमाम् ॥ १ ॥
वैष्णवाना मकामानां च्युते रन्ते परं पदम् ॥ ४३१॥ ॥

इति श्रीपाञ्चरात्रे श्रीसात्वतसंहितायाम्
प्रतिमाप्रासादलक्षणविधि र्नाम

चतुर्विंशः परिच्छेदः ॥२४॥

---

## अथ पंचविंशः परिच्छेदः ।

---

श्रीनारदः ।

सर्वलोकगुरु विप्रा यदुक्तो विश्वधारिणा ।
तदिदानीं प्रवक्ष्यामि मन्त्रबिम्बनिवेशनम् ॥ १ ॥
भोगेप्सूनां च वर्णानां साम्प्रतं यदभीष्टदम् ।
कैवल्यदं शमाद्यैव चातुराश्रम्यसेविनाम् ॥ २ ॥

यज्ञधर्मरतानां च सहायं च फलैस्तु तद ।
प्राग्वद्देवगृहस्याग्रे दिक्लाभे [ ग्भागे ] सति मण्टपम् ॥ ३
चतुरश्रं चतुर्द्वारं दर्भमालान्तरीकृतम् ।
अन्यत्र तद्लाभेतु यथाभिमतदिङ्मुखम् ॥ ४ ॥
चतुर्दशकराच्चैव यावत्रिंशत्करावधि ।
षट्करान्तं पुन स्तस्मात् बिम्बमानव्यपेक्षया ॥ ५ ॥
कार्या मध्ये स्थला तेषां द्विसप्तांशै स्ततोष्टभिः ।
समन्तभद्रा सुश्लक्ष्णा च्छिलापक्केष्टकादिकैः ॥ ६ ॥
तालोन्नते स्समारभ्य सामान्येस्मिन् हि कर्मणि ।
उन्नतांगुलवृद्ध्यातु नीता तद्ध्रासतां क्रमात ॥ ७ ॥
द्वि[त्रि]ष्टकांशकैर्मध्ये सर्वासां मण्टपं [ ण्डलं ] भवेत् ।
चतुरश्रंचतुर्द्वारं च्चक्रांबुरुहभूषितम् ॥ ८ ॥
दक्षिणेशयनंसौम्ये कुण्डमग्नेस्तु पूर्ववत् ।
समेखलं द्विहस्तन्तु चक्रपद्माकितं शुभम् ॥ ९ ॥
तदध श्चतुरश्रं प्राग्दामेमेखलिकान्वितम् ।
अथ दाक्षिणादिग्भागे कुर्या द्वै चक्रचिह्नितम् ॥ १० ॥
वर्तुळं पश्चिमे सौम्ये कमलांकं मनोहरम् ।
शंखांकं सर्वकोणेषु मान मेषां यथोर्ध्वगे ॥ ११ ॥
सर्वैं दशान्तहस्तानां चतुर्णा मेकमेखलाः ।
मण्टपानान्तु किं त्वत्र ऊर्ध्वगं सर्वमेखलम् ॥ १२ ॥
अतोध स्संस्थिता स्सर्वैं एककुण्डास्तु मण्टपाः ।
तेषां समेखलं चाद्यं द्वाविंशत्यंगुलै र्भवेत ॥१३ ॥
ह्रासा द्वंगुलयुग्मस्य याव द्वै षोडशांगुलम् ।
स्यात षट्करे गृहे कुण्डं कार्या वा मेखलाधिका ॥ १४ ॥
अष्टहस्तोच्छ्रितः पूर्वः अधोर्ध्वकरवर्धिताः ।
न ह्रास ष्षट्करान्तानां न्यूनाना मुच्छ्रितै र्भवेत ॥ १५ ॥

त्रयोदशकराद्दीमां चतुर्णां पातये त्ततः ।
अष्टकं चांगुलानां तु सप्त पंच चतुः क्रमात् ॥ १६ ॥
एवं स्नानगृहाणान्तु विस्तार श्चोन्नते स्सह ।
किन्तु वै वालुकापीठै र्मध्यत श्चोपशोभिताः ॥ १७ ॥
द्वि स्त्रतुर्भि र्द्विसप्तां [ हस्तां ] शै र्विस्तृताः प्राग्वदुन्नताः ।
स्न नीया यागगेहा द्वा दिक्त्रयेऽभिमते शुभम् ॥ १८ ॥
अर्धमानसमं कुर्यात् सुपीठशयनान्वितम् ।
दग्दानभवनं कुर्या न्मंगल्यकलशै स्सह ॥ १९ ॥
सर्वेषां कर्मभूभागं कोणस्तम्भै र्विभूषितम् ।
सुनेत्रै र्वेष्टितं कुर्या च्चक्राद्यैः पूर्ववद्युतम् ॥ २० ॥
सुस्थिरं दृढपादं च स्नानाम्भो ग्रहणक्षमम् ।
अर्धेन वालुकापीठं दीर्घमात्रक्रमेण तु ॥२१ ॥
वर्धितं चाग्रहस्तेन ह्रासितं चतुरंगुलैः ।
स्वदैर्घ्या दर्धविस्तीर्णं कृत्वैवं सप्रणालकम् ॥ २२ ॥
तेन तद्वालुकापीठं भूषये न्मध्यगेन तु ।
यागागारस्य वै दिक्षु द्वारार्धं तत्र चान्तरे ॥ २३ ॥
शमार्धवृत्तियोगेन ह्रासोन्यत्र कलादिकः ।
तोरणानि बहिः कुर्यात दृढैः काष्ठै स्सुपूजितैः ॥ २४ ॥
पंच हस्तानि चार्धेन वर्धितानि करेण तु ।
न ह्रास मात्परं तेषा मन्यत्र करणे सति ॥ २५ ॥
न[ द ] शमा स्पंच हस्ताना मृते भूमौ प्रवेशयेत् ।
शमार्धं वर्धितानां च द्वे द्वे संवर्धये त्कले ॥ २६ ॥
दैर्घ्या त्प्रवेशशिष्टात्तु त्रिभागेन तदन्तरम् ।
सर्वे चक्रध्वजाः कार्याः वस्त्रस्रङ्मञ्जरीयुताः ॥ २७ ॥
सुधाद्यै र्वर्णकैः पीतै श्चन्दनाद्यै स्तु लेपिताः ।
भिन्नांग मेत दखिलं यथैकस्मिन् हि युज्यते ॥ २८ ॥

कर्मयागगृहे शश्च द्विभूते र्वा वने विना ।
पंच त्रिंशत्करं क्षेत्रं स्वतुल्यांशेन विस्तृतम् ॥ २९ ॥
तन्मध्येतु चतुर्हस्तं त्वापाद्यं स्थलसप्तकम् ।
स्थलानां व्यवधानन्तु कुर्या द्वै तालसम्मितम् ॥ ३० ॥
एकापायेन वै कुर्याद् द्विहस्तान्तं स्थलांगणम् ।
क्रमेणाष्टांगुला न्मानात् द्व्यंगुलं द्व्यंगुलं विना ॥ ३१ ॥
स्थलानां संकटनां च व्यवधानं द्विगोळकम् ।
एव मेव समुच्छ्राय स्सर्वेषां परिकीर्तितः ॥ ३२ ॥
परितो विहितं वीधे मांन मत्र स्वपीठजम् ।
एवं वासंकटे कुर्या दाद्योक्ता न्मण्टपद्वयात् ॥ ३३ ॥
मध्ये मण्डलपीठन्तु तस्य दक्षिणदिग्भवेत् ।
समीपे शयनस्थानं कुम्भानां स्थापनायनम् ॥ ३४ ॥
एवं हि वामनिकटे भोगानां मन्त्रतर्पणम् ।
ऋग्यजुस्सामपूर्वाणां श्रुतीनां हवनं परे ॥ ३ ॥
प्राग्दानं शयनस्थाने ह्यन्यस्मिन् शयने हितम् ।
प्रासादस्याष्टदिङ्मूर्ति शक्तिपानां यथोदितम् ॥ ३६ ॥
स्थण्डिले ऽ्वथ कुण्डेषु तादर्थ्येनाथवा स्वयम् ।
स्वकुण्डे हवनं कुर्याच्छ्रुतिर्वेदमये परे ॥ ३७ ॥
समस्तमूर्तिपीयं वा स्वय मेव समाचरेत् ।
सामग्रीविरहा द्योग्य मूर्तिपाना मभावतः ॥ ३८ ॥
यश्च यत्रोपयोज्यस्तु तत्रतं सम्प्रवेशयेत् ।
मन्त्राणा मुपदेष्टातु आत्मतुल्यो महामतिः ॥ ३९ ॥
योक्तव्यः कर्मदक्षस्तु सर्वे ष्ववसरेषुच ।
स्वयं वस्त्वनुसन्धाय हवनार्चनकर्मणाम् ॥ ४० ॥
आस्तेह्युत्पत्तिपूर्वाणां न्यासान्ताना मनन्यधीः ।
कृत्वा दीक्षाविधानोक्तं सहोमं कलशार्चनम् ॥ ४१ ॥

कुर्या त्सतोरणानां च ध्वजानां स्थापनं ततः ।
सितरक्तादिभेदेन प्रागादौ च ध्वजाष्टकम् ॥ ४२ ॥
निवेश्य मध्यवेद्यान्तु पुन रप्ययनत्तथा ।
यजे त्सत्यादिकं तत्तच्चतुष्कं ह्येव मेवहि ॥४३॥
उत देवा अवहित मृड्मयान् पाठये ततः ।
ऊर्ध्वं सह सुपर्णेन चक्रं तोरणगं यजेत् ॥ ४४ ॥
पाठयेत् द्वारपालीयं सामसामविद स्ततः ।
अथार्घ्यपुष्पहन्मूर्तिधरे र्यायात् समावृतः ॥ ४५ ॥
यत्र तिष्ठति विश्वेशः पीठब्रह्मशिलान्वितः ।
तत्रावलोकनं तेषां कुर्या त्सन्ताडनादिकम् ॥४६॥
चक्रास्त्रमन्त्रितै स्स्नानकलशै स्स्नापये ततः ।
सिद्धार्थकै स्तथा पंचगव्य मृद्भूतिवारिणा ॥ ४७ ॥
वल्मीक मृज्जलेनाथ चक्रांकौषधिवारिणा ।
संक्षाळयाभ्यर्च्य चोद्धर्त्य क्षाळये दस्त्रवारिणा ॥४८॥
तमर्घ्येणार्चयित्वा च तत स्तन्मन्त्रितान् करे ।
सिद्धार्थकान् दक्षिणेतु बध्वाये पाठये दृचम् ॥ ४९ ॥
रक्षोहणं तथा सर्वा न्नये त्प्रतिसरे मणीन् ।
सद्वस्त्रवेष्टितं कृत्वा समारोप्य रथोत्तमे ॥ ५० ॥
कर्मारम्भं चपठत स्तस्य दक्षिणदिङ्न्यसेत् ।
ऋक्सामपूर्वा न्वामेतु ब्राह्मणांस्तु चतु श्चतुः ॥ ५१ ॥
पुरतोस्त्रं स्मर न्यायात् स्वयं विघ्नांस्तु सूदयन् ।
सनृत्तगेयवादित्र स्तुतिमंगळपाठकैः ॥ ५२ ॥
इदं विष्णु र्विचक्रम ऋङ्मयै स्सह पाठयेत ।
एकायनांस्तदन्तेतु ॐ नमो ब्रह्मणेतु यत ॥ ५३ ॥
तथैव शाकुनं सूक्तं श्रीसूक्तेन समन्वितम् ।
स्वर्णादिनार्थिन श्शक्त्या तर्पयं स्ता न्प्रवेशयेत ॥ ५४ ॥

स्वस्थानं यज्ञभूमे र्वै प्रासादाद्यन्तरन्तु वा ।
वक्ष्यमाणविधानेन युक्तं रत्नशिलादिना ॥५५॥
कृत्वा द्रव्याधिवासं प्रा कर्मभूमौ पुरोदितम् ।
स्नानकर्मशिलादीना मीष त्कृत्वातु सार्चनम् ॥५६ ॥
यथावद्रत्नविन्यासं प्रीतिपूर्वं निवेश्य च ।
बृह द्विम्बं ततः कुर्या त्कर्मबिम्बेखिलन्तु वै ॥५७॥
सन्निरोधस्तु मन्त्राणां तत्र लग्नोदये स्मृतः ।
आबृहत्स्नापना त्सर्वं यत्किञ्चि दथ तत्र तत ॥ ५८ ॥
निर्वर्तनीयं पूर्णान्तं बुध्वैवं प्राङ् महामते ।
तथा कार्यं शुभो येन मुहूर्तो नावसीदति ॥ ५९ ॥
एवं हि चित्रपूर्वाणा मन्येषां कमलेक्षण ।
सरत्नब्रह्मपाषाणवर्जितानां समाचरेत् ॥ ६० ॥
स्नानाद्यं कर्मबिम्बेतु तत्समीपेथ दर्पणे ।
कर्मबिम्बंविनाशेषां प्रस्वापाद्यंहिविष्टरे ॥ ६१ ॥
कुर्यात्प्रवेशपूर्वंतु सर्वमुत्सवपश्चिमम् ।
एवंप्रवेश्यतद्विम्बं सांप्रतं विनिवेश्यच ॥ ६२ ॥
निषण्ण दृढकाष्ठोत्थ तोरणेस्त्राहुर्ता स्ततः ।
निवेश्य स्नानकलशान् हेमाद्युत्थांस्तु निर्वृणान् ॥ ६३ ॥
पूर्ववद्धचनोपेतान् सुसमांस्त्रास वर्जितान् ।
निरीक्षणादि संशुद्धान् कृत्वा सहृदयेनतु ॥६४॥
द्वादशाक्षरमन्त्रेण मन्त्रयेत्तान्सकृत्सकृत् ।
तेनैव पूजयेत्पश्चात् अर्घ्यस्रक्चन्दनादिना ॥ ६५॥
तदाहरणहोमन्तु यथाशक्ति समाचरेत् ।
पूर्णांत मथ सम्पूर्य क्रमाद्द्रव्यै र्नियोजयेत ॥ ६६ ॥
पाद्या र्घ्याचमनीयार्थं द्रव्यैः पूर्वोदितै स्त्रयन् ।
नागाद्याद्यन्त मध्येभ्यो नदीमृत्तीर्थ सम्भवा ॥ ६७ ॥

हृदाद्वल्मीक शिखरात् गजदन्त क्षतकृतात् ।
हलोत्था वृषभृंगोत्था शालिक्षेत्रेषु सम्भवा ॥ ६८ ॥
तथैव पद्म षण्डोत्था त्वेकस्मिन् गोमयं परे ।
वनदाहसमुद्भूतं तथैव च महानसात् ॥ ६९ ॥
त्रेताग्नि भस्मत्वपरे विनिवेश्यं घटान्तरे ।
अन्यस्मि पंचगव्यन्तु कुशोदक समन्वितम् ॥ ७० ॥
सघृतं तैलकुम्भन्तु चमसीवारि पूरितम् ।
पलाश खदिरा श्वत्थ शमी लोहित चन्दनम् ॥ ७१ ॥
कषायोदक मन्यस्मिन् परस्मि स्त्रिफलोदकम् ।
वचा शतावरी कन्या व्याघ्री सिंही कृतांजलिः ॥ ७२ ॥
गोलोमी सिंहलोमी च कुष्ठं भूतजटा तथा ।
महागरुड वेगाच कलशे न्यत्र लांगलिन् ॥ ७३ ॥
महानील [ निला ] गडूचीत्रा सहदेवी शतावरी ।
विष्णुक्रान्ताच कार्कोटी साह्वावह्नि शिखापरे ॥ ॥ ७४
यष्टीवराहकर्णीचा प्यन्यस्मिन् गजपिप्पली ।
श्रीफलाद्यानिचान्यस्मिन् पावनानिफलानिच ॥ ७५ ॥
दधि क्षीराज्य कुम्भाश्च द्वौ मध्विक्षु रसान्वितौ ।
मूलान्यम्भोरुहाणांच तान्यन्यस्मि न्द्वयेन्यसेत ॥ ७६ ॥
द्रुमाणां पावनानान्तु सक्षीराणां विशेषतः ।
पुष्पपत्र फलोपेत मेकस्मि न्मंजरीगणम् ॥ ७७ ॥
जात्यादिकं मथैकस्मिन् कौसुमीय लताचयम् ।
रोचना रजनीयुग्मं बलामोटाच पद्मकम् ॥ ७८ ॥
इतिपंचक मेकस्मिन् दर्भा न्दूर्वांकुराणिच ।
सास्यं शाल्यंकुरचयं कलशेन्यत्रवै न्यसेत् ॥ ७९ ॥
सिद्धार्थकान् सिताद्यांस्तु प्रियंगु गन्धसंज्ञकम् ।
अपरस्मिन्नयसेत्कुंभे सहवैनागकेसरैः ॥ ८० ॥

ग्राम्याश्चौषधय स्सप्त सप्तारण्या घटद्वये ।
बाह्लीकं च्चन्दनं चैव रसं कर्पूर संयुतम् ॥ ८१ ॥
चतुष्कमेतदपरे त्वन्यस्मि न्धातवश्शुभाः ।
ताम्रजाम्बूनदाद्यास्तु परेरत्नचयंमहत ॥ ८२ ॥
न्यसेद्विद्रुमजालंच द्वयो र्मुक्ताफलानिच ।
अर्घ्योदकमथैकस्मि न्नदीतीर्थोदकंद्वये ॥ ८३ ॥
सर्वौषधि घटंचैव सुशीताम्भोघट न्ततः ।
सुगन्धिपुष्पकलश श्चत्वारिंशत्स्वमीस्मृताः ॥ ८४ ॥
वामभागेतु देवस्य अग्निकोणादितोन्यसेत् ।
पुनरीशानकोणात्तु शयनेसप्तधान्यसेत् ॥ ८५ ॥
गन्धोदकेन सम्पूर्णा स्तथावायुपदावधि ।
सर्वाण्याधाररूढानि पूरितान्यमलांभसा ॥ ८६ ॥
मूलमन्त्रेणतदनु पूजयेद्वादशात्मना ।
संवेष्टयच्च पुरासूत्रै श्छादयेत्तदनन्तरम् ॥ ८७ ॥
विधानैस्सूत्रसम्बन्धै र्वस्त्रेणाच्छाद्यवैततः ।
तदर्पणावसानेथ शयनंकल्पयेद्विधा ॥ ८८ ॥
सर्वोपकरणोपेत मनन्तंतदधोयजेत् ।
प्रभवाप्ययोगेन तदूर्ध्वेसर्वगंप्रभुम् ॥ ८९ ॥
पाठयेत्सर्पसामाथ संज्ञां ज्ञानबलात्मिकाम् ।
हुत्वाशताष्टसंख्यंच मूलंतदनुकल्पयेत् ॥ ९० ॥
मण्डलंपावनैरागै स्सिताद्यैर्मांगलीयकैः ।
तदूनाधिकशान्त्यर्थं हुत्वाकुण्डगणन्ततः ॥ ९१ ॥
संस्कुर्यात प्रतिकुण्डस्थ निकटेकुम्भमध्यगम् ।
प्रभवाप्ययोगेन चातुरात्म्यन्तु संयजेत ॥ ९२ ॥
हृदादियद्वादिक्स्थेषु विदिक्स्थेषु तदस्त्रराट् ।
दत्वातदर्थपूर्णान्तु पूर्णात्पूर्णंचपाठयेत् ॥९३ ॥

एकायना न्यजुर्मया नाश्रावितदनन्तरम् ।
यथाक्रमन्त्रेणपुरा मङ्गल्यकलशांभसा ॥ ९४ ॥
संसेच्यबिम्बंतदनु स्नापयेत्तन्मृदम्भसा ।
पाठयेत्तत्रकूश्माण्डान् बलमन्त्राननन्तरम् ॥ ९५ ॥
ततोगोमयकुम्भेन इहगावःप्रपाठयेत् ।
भूतिस्त्वमितिमन्त्रेण पठ्यमानेनभूतिना ॥ ९६ ॥
पंचगव्येनतदनु पाठयेच्चतुरस्ततः ।
पूर्ववच्चततोभ्यज्य विधिवच्चमसांबुना ॥ ९७ ॥
क्षाळयित्वार्चयित्वाच निवेश्यशयनान्तरे ।
नेत्राभिमन्त्रितांकृत्वा शलाकान्तैजसींस्वयम् ॥ ९८ ॥
संस्मरन्परमंज्योति रीक्षनेत्रेतु चोल्लिखेत् ।
तन्मन्त्रितेनशस्त्रेण शिल्पीस्नातोवलोकितः ॥ ९९ ॥
यथावत्प्रकटीकुर्यात विधिदृष्टेनकर्मणा ।
वारुणंपाठयेत्साम सहचान्द्रेणसामगान् ॥ १०० ॥
ततःपात्रद्वयेकृत्वा तैजसेमधुसर्पषी ।
वौषडन्तेनमूलेन सम्पूज्यजुहुयात्ततः ॥ १ ॥
मुञ्चन्तममृतौघन्तु हृदाद्यन्तेनसेचयेत् ।
तन्मूर्ध्निशशिबिम्बन्तु ध्यायेत्ताडनशान्तये ॥ २ ॥
सदक्षिणंशलाकाद्यं दद्याच्छिल्पिजनायच ।
गोदानमाचरेत्पश्चात् गुरोराराधकस्ततः ॥ ३ ॥
यथाशक्ति तथान्येषां मूर्तिपानां च दक्षिणाः ।
दत्वा समाचरे त्पश्चा द्दार्ढ साप्यायनन्तु वै ॥ ४ ॥
आमूर्ध्नो द्वादशार्णन्तु मूर्त्यर्थं पूर्ववन्न्यसेत् ।
व्याप्तिसत्ता समायुक्ते संस्कृत्य प्रोक्षणादिना ॥ ५ ॥
पीठेवतार्य संवेष्ट्य वाससा ह्यधरोर्ध्वतः ।
अधःक्रमोदितैः कुम्भै र्द्विष्षोडावर्तितै र्हृदा ॥ ६ ॥

स्नापये त्पाठये द्विप्रान् ओषधीना मिति श्रुतिम् ।
या ओषधय इत्यादि ऋग्वेदांस्तदनन्तरम् ॥ ७ ॥
एवं दशावशिष्टान्तै स्सेचिते कलशै स्सवि ।
ततः कुम्भचतुष्केण चतुर्भि र्मूर्तिधारकैः ॥ ८ ॥
ऋक्सामपूर्वं विधिवत् स्नापनीयं च पाठयेत् ।
उदुत्तमं हि ऋग्वेदान् पाठये द्रविणं यजुः ॥ ९ ॥
ततस्तु वारुणं सामसामज्ञोथर्वण स्ततः ।
अयं ते वरुणश्चेति पवित्रं ते ततो ऋचा ॥ ११० ॥
वसोः पवित्रं हि यजुः पाठयेत् सामगांस्ततः ।
पवित्रं तेहि य स्सामसश्चैवैकायनां स्ततः ॥ १ ॥
मूर्तिपान् समुद्रायेन पावमानी चतुष्टयम् ।
तदन्तेतु परं मन्त्रं व्यूहीयं भगवानिति ॥ २ ॥
पवित्रमन्त्रं तदन्तु इदं विष्णु विचक्रमे ।
ततो विभवमन्त्रैस्तु सर्वै स्सम्मन्त्रितेन च ॥ ३ ॥
कुम्भेन सेचयित्वातु व्यूहमन्त्रैः परेणतु ।
स्नापयित्वा र्चयित्वातु जुहुयात् साधितं शतम् ॥ ४ ॥
यथावत्प्रणवेनाथ व्याप्तिं कृत्वा च पाठयेत् ।
मामगामेति ऋग्वेदा नाग्नेनायु र्यजुर्मयान् ॥ ५ ॥
प्राणापानं हि यत्साम ततः प्राणाय वै नमः ।
यातव्येति परं मन्त्रं विप्रा नेकायनां स्ततः ॥ ६ ॥
ध्यानयुक्तो धिया सम्य क्पठे दाराधक स्ततः ।
ॐ ॥ आवाहया म्यमरबृन्दनतांघ्रियुग्मं
लक्ष्मीपतिं भुवनकारण मप्रमेयम् ।
आद्यं सनातनतनुं प्रणवासनस्थं
पूर्णेन्दुभास्करहुताशसहस्ररूपम् ॥ ७ ॥

ध्येयं परं सकलवेदविदां च वेद्यं
वाराहकापिलनृकेसरिसौम्यमूर्तिम् ।
श्रीवत्सकौस्तुभमहामणिभूषितांगम्
कौमोदकीकमलशंखरथांगहस्तम् ॥ ८ ॥
सर्वत्रगोसि भगवन् किल यद्यपि त्वा
मावाहयामि हि यथा व्यजनेन वायुम् ।
गूढो यथैव दहनो मथना दुपैति
ह्यावाहितोपि हि तथा त्व मुपैहि चार्चाम् ॥ ९ ॥
मालाधराच्युत विभो परमात्ममूर्ते
सर्वज्ञनाथ परमेश्वर सर्वशक्ते ।
आगच्छ मे कुरुदयां प्रतिमां भजस्व
पूजां गृहाण मदनुग्रहकाम्ययाद्य ॥ १२० ॥
ततो विसृज्य वस्त्रेण भोगैः पूर्वोदितैर्यजेत् ।
अर्घ्याद्यैर्दक्षिणान्तैस्तु पाठयेद् द्वह्मयांस्ततः ॥ १ ॥
अर्चामितेतिवैमन्त्रं सामयच्चार्चितस्त्विति ।
भगवानितितज्ज्ञांस्तु ततस्संतर्प्यतेनले ॥ २ ॥
स्तुत्वाजितन्ते मन्त्रेण सामज्ञान् पाठयेत्पुनः ।
सद्गायत्रसाम्नातु तद्रथन्तरसंज्ञितम् ॥ ३ ॥
प्रजप्य द्वादशार्णन्तु मुद्राम्बद्ध्वा प्रणम्यच ।
अष्टांगेनाथविज्ञाप्यो भगवान्भूतभावनः ॥ ४ ॥
मूर्तिभूतेनरूपेण अनेनैवहिसांप्रतम् ।
लोकानज्ञाततत्वांस्तु समाह्लादय नागरान् ॥ ५ ॥
येनान्तस्सम्प्रविष्टेनं ईषत्कालवशात्तुवै ।
जन्मान्तरसहस्रोत्था न्मोक्षमायान्तिकिल्बिषात् ॥ ६ ॥
एवमभ्यर्थ्योहि भगवां ल्लोकानुग्रहकृत्प्रभुः ।
करावञ्जिगतौकृत्वा पाठयेद्द्वह्मयांस्ततः ॥ ७ ॥

उत्तिष्ठेति ऋचो मन्त्रं कृत्वा ब्रह्मरथे स्थिरे ।
सुयन्त्रितेच क्षीराज्ये दध्योधनसमन्विते ॥ ८ ॥
दुर्भिक्षक्षामशान्त्यर्थं परमान्नफलैर्युते ।
पाठयेदस्यवामीय मृङ्मयां स्तदनन्तरम् ॥ ९ ॥
तन्मयान्वलमन्त्रन्तु दशार्धैतिमहामते ।
स्वयमाद्यन्तसंरुद्धं हृदातुकवचञ्जपेत् ॥ १३० ॥
भ्रामयेद्बलिदानन्तु क्रियमाणन्तुसर्वदिक् ।
रत्नकाञ्चनवस्त्राणां पूर्ववत्क्षेपमाचरेत् ॥ १ ॥
दिव्याद्यायतनानांच कार्यापूजायथेदिता ।
पंचरात्रविदांचैव यतीनां ब्रह्मचारिणाम् ॥ २ ॥
षट्कर्मनिरतानांच दानन्दीनजनेष्वपि ।
रथस्थेमन्त्रबिम्बेतु यावत्पदशतं व्रजेत ॥ ३ ॥
स्वरथस्तूर्यघोषेण तावत्क्रतुफलम्बहु ।
आप्नोत्याराधकश्शश्वत् सकामोनियतव्रतः ॥ ४ ॥
ततस्तोरणदेशस्थं रथंकृत्वार्चयेत्प्रभुम् ।
पाद्यार्घ्यपुष्पधूपैस्तु नमस्कृत्यचपाठयेत् ॥ ५ ॥
उत्तिष्ठेतिद्विषट्कार्णं सजितन्तन्तु चाखिलम् ।
सम्पठन्पौरुषंसूक्तं यागवेश्मप्रवेशयेत् ॥ ६ ॥
हृदाशयनगंकृत्वा यात्राहोमं समापयेत् ।
ततस्तच्छिरसोदेशे चक्राधारस्थितेघटे ॥ ७ ॥
पूर्वोक्तलक्षणेनेत्र मन्त्रसम्पुटितंयजेत् ।
पूजयित्वार्घ्यपुष्पाद्यै श्शयनस्थंचवैपुनः ॥ ८ ॥
वर्मणाच्छाद्यवस्त्रेण ततोऽङ्घ्रिनिकटे विभोः ।
स्थित्वालांछनमन्त्रांस्तु यथास्थानगतान्न्यसेत ॥ ९ ॥
पादाद्वैद्वादशांगेषु ततोदामोदरादिकान् ।
तच्छक्तिकांस्तथामन्त्रान् भास्वद्व्यापक लक्षणान् ॥ १४० ॥

ऐश्वरेणाथ बीजेन यथावस्थेनभावयेत् ।
पादादितन्मयेनैव तद्वन्मन्त्रवरेणतु ॥ १ ॥
प्राग्वदप्यययुक्त्यातु अन्तर्ज्योतिर्मयात्मना ।
विभुनावाक्स्वरूपेण तदेवाथपरम्परम् ॥ २ ॥
सुशान्तंसर्वगम्बुध्वा निस्तरंगमिवोदधिम् ।
विद्यांगदामित्याद्यंच त्पाठयेत त्पांचरात्रिकान् ॥ ३ ॥
देहस्थान्नयासिकंमन्त्रं धारणाख्यमनन्तरम् ।
जीमूतस्येतिऋग्वेदा न्नासदासीन्निपाठयेत ॥ ४ ॥
क्रमेणानेनभुक्त्वा[हुत्वा]तु पादार्घशतसंख्यया ।
तिलानान्तुतथाज्यस्य मन्त्रैरेभिर्महामते ॥ ५ ॥
दत्वापूर्णाहुतिंसम्य गुपसंहारलक्षणाम् ।
ततस्तत्परमंब्रह्म ह्युदितंपूर्ववत्स्मरेत् ॥ ६ ॥
सर्वशक्तिमयेनैव स्वभावेनस्वकेनतु ।
ओजोबलात्मनायद्वत् गन्धद्रव्यात्मनातुवै ॥ ७ ॥
बीजन्तद्स्वरूपेण समुद्रोबुद्बुदात्मना ।
एवमव्यपदेश्याया श्शक्तेस्स्वेशक्तिदर्पणे ॥ ८ ॥
स्थितिमादायविश्वेशः स्वातन्त्र्याच्चमहामते ।
मन्त्ररूपान्तनुन्धत्ते सम्यगाराधनायच ॥ ९ ॥
नानात्वमुपयातस्य प्रसरन्तस्यचस्वयम् ।
निष्प्रभत्वंप्रयातस्य चिद्बीजनिचयस्यच ॥ १५० ॥
आविष्कृतस्यभेदेना प्यमूर्तेनबलीयसा ।
अज्ञानगहनेनैव नित्यानित्यमयात्मना ॥ १ ॥
स्मृत्वैवंमूलमन्त्रन्तु बिम्बहृत्पद्मगंस्मरेत् ।
षट्शक्तिकिरणोपेतै स्तैस्तद्द्रव्यमयीन्ततुम् ॥ २ ॥
संस्मरेत्संहरन्तंच प्रागुक्तेनैववर्त्मना ।
स्वरूपममलम्भूय स्मरेन्मूर्त्यात्मनाततः ॥ ३ ॥

[illegible] ।

नयन्स्वंपूर्वविधिना एवंसपरमेश्वरः ।
मन्त्रात्मनाभ्वतन्त्रत्व मुपयातोयदातदा ॥ ४ ॥
सहस्रशिरसन्देव मितिस [ ?यध ] र्षास्तु चोदयेत् ।
पाठयेत ब्राह्मणान्धातर्यध्यक्षेति च मन्त्रराट् ॥ ५ ॥
योविश्वतश्चक्षुरिति यातध्योभवतीतिच ।
द्वासुपर्णेत्तितदनु अतोदेवेतिवैपुनः ॥ ६ ॥
ऋङ्मयानूपौरुषं सूक्तंततःपरतमाति [ न्निवति ] ति ।
ततोर्चयित्वामन्त्रेशं श्चयनेबिम्बवृत्तिगम् ॥ ७ ॥
नित्यसन्निधिसिद्ध्यर्थं मासमात्रिन्तुमण्डले ।
संरोद्ध्यसन्निधीकृत्य महताविभवेनतु ॥ ८ ॥
सांगसन्तर्प्यविधिवत सद्यमूर्तिं धरैस्ततः ।
स्वमूर्तिकुम्भान्मन्त्रेण जलमुद्धृत्यभाजने ॥ ९ ॥
बिम्बमूर्ध्निक्रमाद्दयं सर्वैरेकायनादिकैः ।
सन्तर्पयित्वातदनु मन्त्रंसपरिवारकम् ॥ १६० ॥
आज्यादिनाप्रभूतेन दत्वापूर्णाहुतिन्ततः ।
बिम्बात्मनाप्रयातानां क्ष्मादीना मंगरूपिणाम् ॥ १ ॥
आपादानेपिपूर्णत्वात् पिण्डीभावार्थमेवच ।
आरम्भादेवजातानां छिद्राणांशमनेतुवै ॥ २ ॥
आप्यायनार्थमन्त्राणां द्रव्यैर्होमंसमाचरेत ।
द्विषट्केनाहुतीनान्तु एकैकेनचतुर्दश ॥ ३ ॥
आचांघ्रे जानुपर्यन्तं स्पृष्ट्वाज्यं होमयेत्पुरा ।
आनाभिजानुदेशाच्च तथैव जुहुया दधि ॥ ४ ॥
नाभे राकर्णतः क्षीर माकर्णा दाशिरो मधु ।
सम्मेळ्य जुहुया त्सर्वं स्पृष्ट्वा देहन्तु चाखिलम् ॥ ५ ॥
संस्कृत्य बिम्बवत्पीठं भिन्नं ब्रह्मशिलां तथा ।
प्राणाभिमानदेवं वा यस्य यो विहित स्तु वै ॥ ६ ॥

वेष्टयित्वाम्बरै श्चित्रै श्चक्रमन्त्रेण वै ततः ।
कार्यो ब्रह्मशिलाहोम श्शताष्टाधिकसंख्यया ॥ ७ ॥
गायत्रीभि स्तदर्थं च बह्वृचाद्यैः पृथ क्पृथक् ।
अजस्य नाभावित्यादिमन्त्रै रेकायनै स्ततः ॥ ८ ॥
अध्वाधिभूतमूर्तन्तु   भोग्यं वापि पृथ क्स्थितम् ।
देवतानां त्वधिष्ठानं पीठं कृत्वा थ बुद्धिगम् ॥ ९ ॥
होतव्यं प्रणवेनैव स्वयं व्याहृतिभि स्तुतैः ।
अपरे मूलमन्त्रेण प्रणवान्तेन लांगलिन् ॥ १७० ॥
ततो वाहनमन्त्रेण   तर्पणीय स्सदैवहि ।
स्वनाम्ना प्रणवेनैव स्वाहान्तेनापरै स्ततः ॥ १ ॥
संरोध स्तर्पितानान्तु कार्यः पूर्णान्त एव हि ।
साम्भसा विष्टरेणैव भावेन सजपेनच ॥ २ ॥
सर्वेश्वरस्य देवस्य स्वकीयासु च मूर्तिषु ।
शब्दात्मिकासु मूर्तासु तद्वच्छुतिमयस्य च ॥ ३ ॥
कृत्वैवंच तथादिक्षु मूर्तिपान् विनिवेश्य च ।
पार्श्वदेशेषु कुण्डानां तर्पये त्पायसेनतु ॥ ४ ॥
गृहीत्वा दक्षिणां मन्त्रः प्रीणनीयस्तु तै स्ततः ।
अथ निद्रायमाणन्तु देवं स्मृत्वावकुण्ठ्य च ॥ ५ ॥
अर्चयित्वा नमस्कृत्य तत्र सर्वान् प्रवेशयेत् ।
स्तुतिपाठकपूर्वांस्तु नृत्तगेयपरायणान् ॥ ६ ॥
विदिक्स्थान् प्रणवे जापे द्वादशार्णेन दिक्स्थितान् ।
सार्घ्यपुष्पाक्षतकरः प्रासादन्तं व्रजेत्ततः ॥ ७ ॥
हन्यात् सिद्धार्थकै स्तस्मा द्विघ्ना नस्त्राभिमन्त्रितैः ।
प्राङ्मध्ये विधिनानेन श्वभ्रं वा साम्प्रतं खनेत् ॥ ८ ॥
विनिश्चितं यथा मानं गार्भ कुर्यात्तु सप्तधा ।
द्वारदेशा त्समारभ्य समै स्सूत्रैस्तु सर्वदिक् ॥ ९ ॥

द्वारमध्ये पदान्तन्तु पादाना मधिदेवताः ।
पिशाचां न्मानवा देवा परमः पुरुषो हि यः ॥ १८० ॥
चातुरात्म्यं विनान्येषां स्थापितानां महामते ।
आराधनं च स्वस्थाना दचिरादेव सिद्धिकृत् ॥ १ ॥
आक्रम्य देवभागं च देव आराध्यते यदि ।
भवन्ति बहवो विघ्नाः वर्जनीया स्ततस्तु सः ॥ २ ॥
शुभेन भद्रपीठेन दैवीयेनाथ लांगलिन् ।
चातुरात्म्यप्रतिष्ठायां शिलाख्यं मध्यमं पदम् ॥ ३ ॥
गर्भमध्यपदस्योर्ध्वे योजनीयं प्रयत्नतः ।
अतोन्वितांश मेकन्तु त्यक्त्वा वै पृष्ठदेशतः ॥ ४ ॥
शिलापदद्वयस्यान्ते योजनीया महामते ।
अग्रदेशेथ बिम्बस्य वेदि भागद्वयोपरि ॥ ५ ॥
चतुरश्रायतस्यैतत पीठस्यस्थापनेहितम् ।
एवंहिचतुरश्रस्य विधानंकिन्तुलांगलिन् ॥ ६ ॥
संचार्यात्वग्रतोवेदि नित्यमाराधनार्थतः ।
पीठोपर्यथवादेवं यस्त्वाराधयतेसदा ॥ ७ ॥
निवेशनीयावैतेन मध्यदेशेनसाशिला ।
एवमाराधनवशा त्तथाफलवशात्तु वै ॥ ८ ॥
सपीठानांचबिम्बानां कार्यंसम्यङ्निवेशनम् ।
देवमानुषभागाच्च ऐहिकामुष्मिकम्भवेत् ॥ ९ ॥
विबुधब्रह्मभागाच्च सैहिकन्तुगुणाष्टकम् ।
अपवर्गेतुसामान्य मकामानामयंविधिः ॥ १९० ॥
भिन्नेपेक्षावशान्मध्ये सतिभूयस्समाचरेत् ।
गालितेस्त्वांबुनालिप्ते हृदावैचन्दनादिना ॥ १ ॥
श्वभ्रेथोघाटरुद्धानां मन्त्राणांचनिरोधनम् ।
पूर्वोक्तेनविधानेन धियास्वेस्वेयनेतथा ॥ २ ॥

कृत्वार्चनंयथोद्दिष्टं पूर्णान्तंतत्रविन्यसेत् ।
बाहुल्येनतुषट्‌पंच चतुर्गोळकसम्मिताम् ॥ ३ ॥
पीठाद्विनिर्गतांकिंचित् भूतयेह्युस्थिरांशिलाम् ।
अस्तांपीडेनमुक्त्यर्थं नवरन्ध्रकृताम्पुरा ॥ ४ ॥
सुमन्त्रेणतुतत्रापि प्रतिष्ठासीतिपाठयेत् ।
प्रागादौप्राभवेनाथ पंचकंपंचकंन्यसेत ॥ ५ ॥
शिलावटेषुद्रव्याणां तत्रवज्रश्चहाटकम् ।
हरितालमुशीरंच व्रीहयोदक्षिणेत्वथ ॥ ६ ॥
षाष्टिकांस्त्वीशदिग्वाय्वोः पुष्परागोहरीतकी ।
मध्येसर्वाणितद्वत्तु ततोगर्तगणन्तुतत् ॥ ७ ॥
लेपैराच्छादितंकृत्वा सांगंमन्त्रंपदेपदे ।
पूजयित्वाथजुवैदां श्चमषट्कांश्चपाठयेत ॥ ८ ॥
तदूर्ध्वेविन्यसेत्पीठं तच्छ्वभ्रेविनिवेश्यच ।
अष्टलोहमयंचक्रं तदूर्ध्वेतुमहामते ॥ ९ ॥
द्वादशाख्याद्विशेषोत्था दाधारोयस्ययःस्वकः ।
हैमंतदूर्ध्वेकमलं तज्जंवाताम्रमेववा ॥ २०० ॥
यथाक्रमस्थितंह्येत त्पंचकंचतुरात्मनि ।
न्यसेदनन्तंचक्रस्य मीनकूर्माकृतस्यच ॥ १ ॥
सर्वस्यविहितंपद्मं तस्यानन्तन्तुविन्यसेत् ।
मण्टपेतुखगेशस्य चक्रस्थापनकर्मणि ॥ २ ॥
न्यस्यपूर्वान्तिकंकृत्वा कर्मण्यत्रचसर्पणम् ।
सहमूर्तिधरैःप्राग्वत् कार्यादर्भोदकक्रिया ॥ ३ ॥
ततःप्रबोधयेद्देवं अर्चयित्वा इदंपठेत ।
मन्त्रात्मनूरूपमात्मीय मान्नेयमुपसंहर ॥ ४ ॥
समाश्रयस्वसौम्यत्वं स्थित्यर्थंपरमेश्वर ।
नमस्तेस्तुहृषीकेश उत्तिष्ठपरमेश्वर ॥ ५ ॥

मदनुग्रहहेत्वर्थं पीठभूमिसमाश्रय ।
उद्घास्यहृदयेनाथ त्यक्तनिद्रन्तुमन्त्रराट् ॥ ६ ॥
उत्थाप्यमूर्तिमन्त्रेण सहमूर्तिधरैर्बलात ।
तोरणेनचनिष्क्रम्य प्रदक्षिणचतुष्टयम् ॥ ७ ॥
कुर्यात्प्रासादपीठस्य द्वाराग्रेसन्निरोध्यच ।
पाद्यार्घ्याचमनन्दत्वा हृन्मत्रेणप्रवेशयेत् ॥ ८ ॥
शाखाद्यमस्पृशन्तंच पाठयेत्तद्विदस्ततः ।
चतुश्चक्रेतितदनु पुरमेकादशेतियत् ॥ ९ ॥
वर्माभिमन्त्रितेनाथ दुकूलेनसितेनच ।
पादांबुरुहनाळम्मा क्शिखामन्त्रेणवेष्टयेत् ॥ २१० ॥
अग्नीषोमौसमीकृत्य प्रणवाद्यन्तगेनतु ।
निवेश्यमूलमन्त्रेण वामतोमारुतंत्यजेत् ॥ १ ॥
प्रतिष्ठालिंगशब्दौच द्वौमन्त्रौ पाठयेत्क्रमात ।
शांतम्ब्रह्ममयंरूपं स्वकंसमवलम्ब्यच ॥ २ ॥
यतोहितार्थंसर्वेषां निर्गतष्षड्गुणात्मना ।
अतोब्रह्मपदादीष द्देवभागेसमानयेत् ॥ ३ ॥
मोक्षादिफलसिद्धीनां प्रापयेद्ध्यविचारतः ।
करस्थमथमोक्तव्यं कौतुकंहृदयेनतु ॥ ४ ॥
सर्वांगमर्घ्यमन्त्रेण दत्वामूलमनुस्मरेत् ।
इतिसामान्यसन्धानं प्राक्कृत्वातद्विशेष्यच ॥ ५ ॥
हृदास्त्रपरिजप्तेन वज्रलेनेनवैततः ।
बिम्बपीठशिलानांतु एकत्वेनाचरेत्स्थितिम् ॥ ६ ॥
मूलमन्त्रन्ततोध्यात्वा सुशान्तब्रह्मलक्षणम् ।
आत्माधाराद्ध्वजाक्रांतं व्याप्तन्तेनाखिलंस्मरेत ॥ ७ ॥
इतिसामान्यसन्धानं प्राक्कृत्वातद्विशेष्यते ।
स्थूलसूक्ष्मपरत्वेन स्थूलंषोढ़ाशिलान्तगम् ॥ ८ ॥

पिण्डिकायां तथासूक्ष्मं तत्परंबिम्वविग्रहे ।
विन्यासंपीठमूलेथ देवतानां समाचरेत् ॥ ९ ॥
भद्रोपकरणीयानां पीठोर्ध्वैत्वथतद्विना ।
न्यसेद्विम्बदेवांस्तु उपर्युपरिपूर्ववत ॥ २२० ॥
घटोद्देशात्समारभ्य परमर्चागतन्ततः ।
एवंहिसर्वदेवानां सन्निवेशवशात्तुवै ॥ १ ॥
चिन्तामणिमयोन्यासः कृतोभवतिसिद्धिदः ।
अथमण्टपमध्येतु देवदेवस्यसम्मुखम् ॥ २ ॥
स्थिलेपितःमुहूर्तांशे स्थापनीयश्चपक्षिराट् ।
ज्ञातेनुलिमोमन्त्रेण स्वेनयस्संस्कृतःपुरा ॥ ३ ॥
अशक्त्यासहबिम्बेन यस्माद्भिन्नेषुवस्तुषु ।
बिम्बसन्निकटस्थेषु अथवान्यत्रलांगलिन् ॥ ४ ॥
तत्कालमंगभावत्वं व्रजमानेषुसर्वधा ।
हवनांतंचनिश्शेषं ध्यानार्चनपुरस्सरम् ॥ ५ ॥
स्वयमेवानुरूपेण कर्मसामान्यतांत्यजेत् ।
तस्मात्तद्यागभवनात उत्थाप्यादायबिम्बवत् ॥ ६ ॥
देवंप्रदक्षिणीकृत्य प्रागवत्संस्थापनावनौ ।
एकस्मिन्मध्यरन्ध्रेतु वज्राद्यंपंचकंन्यसेत् ॥ ७ ॥
एकएवतदूर्ध्वेच आधारोय उदीरितः ।
प्रागवन्निवेशनीयंच तत्पीठोर्ध्वास्तुभावनाः ॥ ८ ॥
भावनीयं शरीरेच शेषं विज्ञप्तिलक्षणम् ।
पाठये द्ब्राह्मणां स्तद्वत्सुपर्णोसीति मन्त्रराट् ॥ ९ ॥
तमेवाभ्यर्चितं कृत्वा यायाद्देवनिकेतनम् ।
कलशैः पृष्ठभागस्थै स्स्नापनीय स्ततो विभुः ॥ २३० ॥
सह मूर्तिधरै स्सर्वै र्यथाचानुक्रमेणतु ।
सद्यावमर्षणेनैव गायत्र्या वर्तितेनतु ॥ १ ॥

प्रागुक्तमयस्तु तदनु चतुर्थावर्तितै स्स्वयम् ।
हृदाद्यावर्तितै ष्षड्भि र्यजु र्हस्तेन सेचयेत् ॥ २ ॥
भूय स्स्वयं तथा कुम्भै स्सामवित् स्नापये त्ततः ।
षड्भि रन्यै स्स्वयं पश्चात् तेनैवाथर्ववित्ततः ॥ ३ ॥
पवित्रावर्जितै रेवं कलशै रन्तरान्तरा ।
सह चैकायनीयैस्तु स्नपनीय मनन्तरम् ॥ ४ ॥
चतुर्मूर्तिमयै र्मन्त्रैः बहुशः परिभावितैः ।
स्नापये त्कलशेनाथ शेष मादाय वै घटम् ॥ ५ ॥
तच्छतावर्तितं कृत्वा समूलेनाद्य मूर्तिना ।
सार्धं वै देवदेवस्य मूर्ध्नि चोत्क्षिप्य पाठयेत् ॥ ६ ॥
जितन्त इति वै सर्वां स्ततश्चास्त्रोदकेन च ।
प्रासादं शोधयित्वा च स्नानवर्जं समाचरेत् ॥ ७ ॥
पूर्वोक्त मासनाद्यं यथागन्धानावसानिकम् ।
सदक्षिणं विशेषेण गुरो मूर्तिधरेष्वथ ॥ ८ ॥
देवं प्रणम्य विज्ञाप्य कर्मणा मनसा गिरा ।
त्वमर्चान्तर्गतो देव मया यच्छयनादिषु ॥ ९ ॥
नीतोसि चाभिमुख्यन्तु क्षन्तव्यं तन्ममाच्युत ।
एवं प्रणम्य विज्ञाप्य क्षान्त्वा निष्क्रम्य सम्मुखम् ॥ २४० ॥
आचम्य च बलिं दत्वा याया द्देवगृहं ततः ।
तत्रासनादिकै रिष्ट्वा स्नानान्तैः पूर्ववत्प्रभुम् ॥ १ ॥
अपनीताम्बरैः कुम्भै र्धान्यपीठोपरि स्थितैः ।
हृन्मन्त्रपूजितै र्भूय स्सलिलेन सुपूरितैः ॥ २ ॥
सह मूर्तिधरैः प्राग्वदन्तरान्तरयोगतः ।
कार्यं वा स्नानकर्माथ विधिदृष्टेन कर्मणा ॥ ३ ॥
निरोदकेथ प्रासादे पुन राराध्य पूर्ववत् ।
भोगै रासनपूर्वैस्तु सम्प्रदानान्त मच्युतम् ॥ ४ ॥

मुद्रां बध्वा जपेन्मन्त्रं स्तुत्वा क्षान्त्वा बहिर्व्रजेत् ।
शतं सहस्रं साष्टं वा जुहुयान्मन्त्रराट् स्वयम् ॥ ५ ॥
सांगं सपरिवारं च संहितोच्चारयुक्तितः ।
मूर्तीयैः प्रणवाद्याभि र्गायत्रीभि श्शतं शतम् ॥ ६ ॥
एकायनै रभिज्ञाभि स्स्वकीयाभिस्तु तत्समम् ।
प्रदापयेत्ततः पूर्णा मृग्वेदाद्यां स्तु मूर्तिपान् ॥ ७ ॥
एकायनांस्तदन्तेतु क्रमात्तान्पाठयेत्ततः ।
पूर्णात्पूर्णेतिवैमन्त्र माद्यात्पूर्णमसीतियत् ॥ ८ ॥
सनमस्केनमन्त्रेण स्वयंसांगेन निक्षिपेत् ।
बलिभिस्तुततस्सर्वान् भूतपूर्वांस्तुतर्पयेत ॥ ९ ॥
प्रविश्याचम्यतदनु क्षान्त्वादेवन्तुकुम्भगम् ।
पूर्ववन्मण्डलस्थन्तु कुण्डस्थन्तदनन्तरम् ॥ २५० ॥
भूषयेद्गुरुपूर्वांस्तु भूषणैः कटकादिकैः ।
गुरोर्वागुरुपुत्रस्य यागद्रव्यं निवेदयेत् ॥ १ ॥
बिम्बमेकायनान्तन्तु सर्वसाधनसंयुतम् ।
दासीकर्मकरोपेतं शुद्धदेवलकान्वितम् ॥ २ ॥
शैलोत्थं, पूर्ववत्कुम्भं कृत्वाधातुमयन्तुवा ।
तद्विगोलकमानेन मन्त्रबिम्बेनवैसह ॥ ३ ॥
शुभेन्यस्मिन्दिनेयाग मण्टपेह्युक्तलक्षणे ।
अधिवास्ययथान्यायं सर्वोपकरणान्वितम् ॥ ४ ॥
स्नानाद्यमखिलन्ताभ्या मापाद्यचयथाविधि ।
तस्मिन्हृदादिसंयुक्ते बिम्बंकुम्भेनिवेश्यच ॥ ५ ॥
वस्त्रैराभरणैःपुष्पै स्स्वच्छंकृत्वार्घ्यं पुष्पहृत ।
शनैःप्रासादपर्यन्त मारोहेन्मूर्तिपैस्सह ॥ ६ ॥
तत्रप्रागासनादींस्तु कृत्वासंक्षाळनान्तिमान् ।
आचरेद्बीजविन्यासं सर्वेवावाहनोदितम् ॥ ७ ॥

निवेश्यानीयतम्मध्ये बिम्बंकुम्भसमन्वितम् ।
हृदाद्यन्तनिरुद्धेन मूलमन्त्रेणलांगलिन् ॥ ८ ॥
तत्राद्यमनुसन्धान मेवं कृत्वापरात्मकम् ।
सामान्यलक्षणं पश्चा त्पूर्वोद्दिष्टेनवर्त्मना ॥ ९ ॥
समालभ्यार्चयित्वाच स्रगाद्यैर्मण्टपेततः ।
पूर्ववत्पाठयेद्विप्रान् तत्प्रतिष्ठापनेतुवै ॥ २६० ॥
संरोध्यवर्ममन्त्रन्तु तत्रध्यानधियास्वयम् ।
पूर्णांतमखिलंकृत्वा विधिनानेनवैपुनः ॥ १ ॥
आरोहेतितुवैसाम पाठयेत्सामगांस्तुवै ।
चक्रमामलसारस्य मध्यतःसन्निवेशयेत ॥ २ ॥
यथाभिमतरूपन्तु दिग्वक्त्रंत्वाम्बराननम् ।
स्वशक्तिवर्णदृष्ट्वःस्थं चण्डमार्तण्डभासुरम् ॥ ३ ॥
चक्रमन्त्रंन्यसेत्तस्मि न्वर्णाध्वानम्पुरोदितम् ।
गत्यागतिप्रयोगेन प्राक्प्रमेयजलक्षणम् ॥ ४ ॥
नान्यथावत्पुराज्ञात्वा द्रव्यमूर्तित्वमागतम् ।
कुर्यात्तसोर्ध्वसन्धानं नान्यथातुमहामते ॥ ५ ॥
अमलंशांतसंज्ञंवै तथाशांतोदितोदितम् ।
एवमेवहितन्मूर्ति यश्चक्रंवेत्तितत्वतः ॥ ६ ॥
सोस्मिन्संसारचक्रेतु सर्वाश्रमनिवासिनाम् ।
सर्वधर्मरतानांच चक्रमूर्तित्वमाप्नुयात ॥ ७ ॥
यच्छक्तिर्ब्रह्ममूर्त्यैव सिद्धामाक्षान्निराश्रया ।
अन्तर्बहिस्थं सर्वेषां मोक्षदंचामलंस्मृतम् ॥ ८ ॥
क्षीरोदार्णवतुल्यंच सहस्रादित्यसन्निभम् ।
निरंगर्न्ताक्ष्णधारंवै तच्छान्ताख्यंहियोगतः ॥ ९ ॥
यत्तुनानांगभावेन स्वासन्त्वात्स्वयमेवहि ।
सर्वादिक्प्रसृतांकृत्वा स्वात्मवृत्तिर्हिवर्तते ॥ २७० ॥

ईषद्धलयवर्णाभे नराणामन्तरेखवत् ।
शांतोदितंच तद्विद्धि चक्रमिच्छाप्रदंचयत् ॥ १ ॥
यावन्मूर्तौंचसम्बन्ध स्सर्वंकृत्वावतिष्ठते ।
प्रवृत्तं नाभिपूर्वन्तु उदिताख्यं हि चक्रराट् ॥ २ ॥
तस्मि न्नाराधितो मन्त्र स्तद्धै सम्पूजितं स्मृतम् ।
जप्तं सन्तर्पितं भक्त्या सर्वेषां सर्वं मृच्छति ॥ ३ ॥
एवं चाभिमतं चक्रं सर्वविघ्नक्षयंकरम् ।
प्रतिष्ठाप्य समभ्यर्च्यं तस्यैव समनन्तरम् ॥ ४ ॥
ऽयंशेन शिखरा दुच्चं खगराट्परिभूषितम् ।
संस्कृत्य ध्वजदण्डंच शिखामन्त्रेण विन्यसेत् ॥ ५ ॥
ततो विविधवर्णं च किंकिणीगणभूषितम् ।
ध्वजाग्रा च्छिखरार्धं च यावद्दीर्घं मकृत्रिमम् ॥ ६ ॥
दैर्घ्याद्द्वादशमांशेन द्विनवांशेनवाततम् ।
कृत्वास्त्रसान्निधिं तस्मिन् लांछनाख्ये पुरा पटे ॥ ७ ॥
निवेश्य ध्वजदण्डाग्रे गन्धाद्यै रर्चये ततः ।
स्वयंकृतानां बिम्बानां मयेदं सम्प्रकाशितम् ॥ ८ ॥
प्रतिष्ठापन मब्जाक्ष स्वतन्त्रे ष्वयनेषु च ।
सांकर्येण विना त्वेवं कृतं भवति सिद्धिदम् ॥ ९ ॥
अन्यथा सिद्धिदं विद्धि नृणां व्यामिश्रयाजिनाम् ।
एकस्मि न्नासने स्थाने चतुस्त्रिद्व्यादिमूर्तिना ॥ २८० ॥
व्यक्तीभुतं यथा लोके लोकानुग्रहकाम्यया ।
स्वयं नानास्वरूपेण स्वर्गादौ स्थापनं तथा ॥ १ ॥
न कार्यं मनुजै र्वर्ण धर्मज्ञै र्नैकभावनैः ।
तथा वै समबुद्धिस्थैः कृपया सम्प्रवर्तकैः ॥ २ ॥
क्रियाभेदरतै श्शुद्धै र्नानाविबुधराजकैः ।
प्रणवैकप्रलापस्थै श्शान्तचित्तै रमत्सरैः ॥ ३ ॥

मन्त्रमुद्राक्रमध्यान सम्भूतिलयलक्षकैः ।
तथा तत्संकरोत्पन्नदोषाणां ध्वंसनक्षमैः ॥ ४ ॥
प्रस्थापितस्तु वै सम्यक् ज्ञानमूर्तिं जगद्गुरुः ।
भिन्नमन्त्रक्रियारूपं न कुर्यात्तदपेक्षया ॥ ५ ॥
साधार मालयं पीठं भवाख्यं विभवात्मनाम् ।
देवानां मर्त्यधर्मस्थैः प्रतिष्ठा यज्ञकर्मणि ॥ ६ ॥
संसारदेवतानां च स्थापितानां तु वै पुरा ।
कृत्वातु भगवद्बिम्ब मालयेवा तदासने ॥ ७ ॥
निवेशयति यो मोहात् बिम्बेन सह तस्य वै ।
जायते च भयं घोर मिहामुष्मिकदोषदम् ॥ ८ ॥
नाप्नोत्याराधकानान्तु सकाशा दर्चनं परम् ।
यथा बिम्बं तथा कर्ता नाप्नुया दुत्तमं फलम् ॥ ९ ॥
अर्चाया माधिके पीठे ह्यपेक्षा लक्षणोज्झिते ।
स्वक द्विभवदेवानां स्थापनं न विरोधकृत् ॥ २९० ॥
नान्यकाले न चान्यस्य नान्यमूर्तिनिवेशनम् ।
विहितं भगवत्पीठे विनष्टव्यत्ययं विना ॥ १ ॥
यथा भवोपकरण देवानां मण्डलेर्चनम् ।
विहितं न तथापीठे ह्येकस्मिन् सन्निवेशनम् ॥ २ ॥
भिन्नक्रमेपि यः कुर्या त्पृथग्वा पिण्डिकोपरि ।
वामदक्षिणयो रेवं देवानामप्रदक्षिणम् ॥ ३ ॥
सदक्षिणस्य वै तेन प्रतिष्ठाख्यमखस्य च ।
निहता चोन्नता कीर्ति स्तेनाथ स्वय मेव हि ॥ ४ ॥
प्राक्स्थितस्याधिकं माना द्दक्षिणेनोर्जहानिकृत् ।
शस्तमद्यतनस्यैव प्राक्स्थितंयत्ततोधिकम् ॥ ५ ॥
नेच्छत्यन्योन्यसामन्तु स्थानवृत्तिधनैस्सह ।
उन्नतासनसंख्यादि मानहीनस्तुसर्वदा ॥ ६ ॥

मानहीनस्तुकर्तॄणां कुर्यात्सुतसुखक्षयम् ।
बिम्बस्यबिम्बकर्तुर्वै देहिनांस्थापकस्यच ॥ ७ ॥
वामकुरस्थापनं [वामे] यद्वा समभूनन्तुवाधिकम् ।
एवंज्ञात्वायथाशक्ति पृथक्कुर्यान्निवेशनम् ॥ ८ ॥
सिद्धयेचापवर्गार्थं मर्चनांदेवतालये ।
प्रतोळीसांगनागार जगतीदेवमन्दिरम् ॥ ९ ॥
सपीठंभगवद्बिम्बं भक्तानांयत्रयुज्यते ।
सम्यक्प्रदक्षिणीकृत्य बलिधूपपुरस्सरम् ॥ ३०० ॥
श्वेतद्वीपसमंविद्धि देवतायतनंतुतत् ।
सन्निवेशस्स्वयंमुख्यः अमुख्यस्त्वपरोहियः ॥ १ ॥
मुख्यात्पूर्णफलप्राप्ति र्मुख्याभावात्तथाविधा ।
सम्यक्स्थाप्यादिदेवीया मूर्तयोयाःपुरोदिताः ॥ २ ॥
स्थलंविनानचैवार्च्या नित्यंविप्रैस्तुबिम्बगाः ।
गृहेपीठगताबिम्बे पुनस्तापत्रगाबहिः ॥ ३ ॥
सद्वैतैस्समाराध्या भूतयेपिहिमुक्तये ।
सवाहनेऽवाहने वा बहिर्वास्वगृहान्तरे ॥ ४ ॥
नार्चनीयानृपाद्यैस्तु बिम्बेवैमण्ड [सक] लाहते ।
सुपर्णसंस्थितास्सर्वे बिम्बावैब्राह्मणैर्नृपैः ॥ ५ ॥
स्वगृहादौचसर्वत्र पूजनीयास्सदैवहि ।
एवमन्यास्तुवैश्यान्तै स्सत्तमैरखिलास्तुयाः ॥ ६ ॥
सहशक्तीशभेदैस्तु नशक्तीशास्सवाहनः ।
बिम्बगोब्राह्मणाद्यैश्च नित्यमर्च्यःपृथग्विना ॥ ७ ॥
स्वाश्रमे बन्धुवर्गस्य मध्यस्थो ह्यनिशन्तुवै ।
अविमासौम्यरूपेण अभ्युत्पन्नजनस्यच ॥ ८ ॥
दृग्गतंभगवद्वक्त्रे कार्यंत्रैलोक्यभीतिदं ।
यच्छन्तिशुभमात्रार्थी श्चित्रस्थाश्चाशुभंगृहे ॥ ९ ॥

बहिष्कृताविशेषेण हर्म्यप्रासादभूमिषु ।
आहूवैर्भोगपदस्थैस्तु साम्प्रतंविद्धिकालसैः ॥ ३१० ॥
निष्प्रभत्वान्नमृच्छैली कार्षादारुमयीगृहे ।
कृतेसांन्यासिकैश्शान्तै श्शश्वन्मोक्षपरायणैः ॥ १ ॥
तदुत्थाश्चबहिस्सर्वैः कार्यास्तासुसदैवहि ।
जनयन्तिमहद्दीप्तिं चन्द्रसूर्योदयेनिशम् ॥ २ ॥
आचैकमूर्तेस्सर्वासां मूर्तीनान्तुमहामते ।
तथामूर्त्यन्तराणांच प्रादुर्भावगणस्यच ॥ ३ ॥
प्रादुर्भावान्तराणान्तु स्थितानांयत्रकुत्रचित् ।
सर्वेषांसर्वदातेषां हितआराधनायच ॥ ४ ॥
प्रणवःपीठपूजार्थं नमस्कारपदान्वितः ।
प्रसिद्धंचातुरात्मीयं संज्ञामन्त्रचतुष्टयम् ॥ ५ ॥
अर्चनेसाजितंतन्तु विनामन्त्रेणयोन्यथा ।
करोतिपूजनंमूढ अर्काबिम्बगणस्यच ॥ ६ ॥
गृहेवाज्ञातमन्त्रस्य दोषस्तस्यप्रजायते ।
विनासामान्यमन्त्रैर्वै अर्काबिम्बगतस्यच ॥ ७ ॥
कुर्याद्विशेषमन्त्रेण विशेषाख्यस्यचार्चनम् ।
तदुत्थमचिरेणैव शबलन्तस्य दोषकृत् ॥ ८ ॥
ज्ञात्वैवंसावधानेन क्रियासक्तेनसर्वधा ।
भवितव्यं विशेषाद्वै गृहाश्रमपरेणतु ॥ ९ ॥
क्ष्माभंगाद्येषु दोषेषु ध्वजान्तेष्वेवमेवहि ।
उपोद्धारे प्रवोक्तव्यं प्रणवाद्यंच्चपंचकम् ॥ ३२० ॥
होमार्चनविधानेषु सृष्टिसंहारकर्मणि ।
ध्वजाद्यमुद्धरेत्सर्वं मवनीचलनेसति ॥ १ ॥
आधारोपलपर्यंतं तन्निवेश्यं तथापुनः ।
चक्रप्रासादभंगेषु सोर्ध्वंबिम्बम्महामते ॥ २ ॥

पीठभंगेतुवैबिम्बं बिम्बभंगेतदेवहि ।
यद्यदिच्छतिचेद्धर्तुं तत्तदादौतुसंयजेत् ॥ ३ ॥
मध्वाज्यगुग्गुलुक्षीर दधिलाजादिभिः क्रमात् ।
सन्तर्प्य तिलहोमैस्तु सहस्रशतसंख्यया ॥ ४ ॥
मन्त्रौघं हृदयात्तस्मिन् समुद्धार्यविनिक्षिपेत् ।
जालवद्वाङ्कुराकारं तत्रचिच्छक्तयोखिलाः ॥ ५ ॥
विश्रान्तिपूर्वसंरुद्धा मन्त्रौघं पुनराहरेत् ।
पाठयेद्दृक्क्रमयान्सर्वा स्तुतिष्ठेत्यथतद्विदः ॥ ६ ॥
कर्मारम्भेतदन्तेवै परमां प्रकृतिन्निवति ।
चतुर्भिरनिरुद्धाद्यै स्वै स्वै र्मन्त्रैः पृथक्पृथक् ॥ ७ ॥
कृत्वाहोमंचसद्बन्तु तत्संज्ञार्णैर्विलोमतः ।
प्रणवाद्यन्तगैस्सर्वैः प्राग्वदष्टासुदिक्षुच ॥ ८ ॥
प्रासादस्यतुहोतव्यं गायत्रीभिस्तथैवच ।
वासुदेवाद्यभिज्ञाभि र्होमांतेत्वथतैस्सह ॥ ९ ॥
न्यासंवाहनमन्त्रेण सांगंकृत्वात्मनातदा ।
वाहमानां तथाचैव ब्रह्मैवं संस्मृशेदथ ॥ ३२० ॥
संचाल्यहृदयेनैवं जपन्नक्षमथोद्धरेत् ।
विमानेवारथेकृत्वा ह्यगाधेभासितनिक्षिपेत् ॥ १ ॥
जपेत्संज्ञामनु [नारसिंहं] स्पृष्ट्वा त्वायश्चित्तार्थमेवच ।
सहस्रमेकमर्धन्त होतव्यं सर्वशांतये ॥ २ ॥
पूर्वसत्तोषयेत्सर्वान् कांचनाद्यैः स्वशक्तितः ।
तर्पयेदन्नपानाद्यै स्सर्वानाचार्य पूर्वकान् ॥ ३ ॥
वान्ययन्तद्वादशाहेन ह्यच्छिद्रं हृष्टमानसैः ।
भूयस्संस्थापनंकुर्या दुद्धृतस्यकृतस्यच ॥ ४ ॥
सामान्यलक्षणैर्मन्त्रै श्चतुर्मूर्तिमयैस्सह ।
गुरुस्सप्रणवेनैव यस्सम्यग्भगवन्मयः ॥ ५ ॥

यतस्सप्रणवादन्य श्चातुरात्म्यंचविद्यते ।
मन्त्रोवादेवतारूप स्तत्वतोब्रह्मवेदिनाम् ॥ ६ ॥
प्रपंचःप्रणवोमन्त्रो देवस्य चतुरात्मनः ।
एवंज्ञात्वापुराकर्म स्थापनोत्थापनांतिमम् ॥ ७ ॥
विधिवद्यागपूर्वंतु बिम्बसंचाळनंविना ।
योदिव्यायतनादीनां भक्त्याभूयः करोतिच ॥ ८ ॥
ध्वजंवामन्दिरंशुभ्रं पीठं भासञ्चपिण्डिकां ।
सल्लोहशैलकाष्ठोत्थैः पद्माद्यैरूर्ध्वतोंकितां ॥ ९ ॥
एकानेकदळैश्चैव बद्धैरायसपूर्वकैः ।
सुबद्धां सूर्यसोमाग्निप्रभाभ्यां सुमनोरमाम् ॥ ३४० ॥
स लोके शाश्वतीं कीर्तिं स्थापयित्वाकुलै स्सह ।
स्थानं सायुज्यतापूर्वं देहान्ते नून माप्नुयात् ॥ १ ॥
नानारत्नप्रभाढ्यानि लांछनान्यंगदानि च ।
निर्मितानि सुवर्णाद्यै र्विभो स्संयोजयन्ति ये ॥ २ ॥
ते धौतकल्मषा स्सर्वे देह मासाद्य पावनम् ।
सम्यज्ज्ञानेन युज्यन्ते भवन्नायान्ति येन च ॥ ३ ॥
आत्मन श्चोपकाराय सर्वदुःखनिवृत्तये ।
अंगुष्ठाग्राच्च गुल्फान्त माजान्वंसावधीहवा ॥ ४ ॥
मणिमुक्ताप्रवाळाढ्य कवचं कांचनादिकम् ।
यः क्षिपत्यतिभक्त्या वै स्वशक्त्यार्च्यागते च्युते ॥ ५ ॥
स याति परमं स्थानं सपुत्रपशुबान्धवः ।
लग्नं यद्भगवन्मूर्ता वंगदं नूपुरादिकम् ॥ ६ ॥
वियोजयति यो मोहात् तस्य वीचौ स्थिरा स्थितिः ।
यः पंचकालसक्तानां विप्राणा मधिकारिणाम् ॥ ७ ॥

पञ्चरात्रविदां चैव द्विजानां सिद्धिकांक्षिणाम् ।
अथ योऽच्छिन्नशाखानां नारायणरतात्मनाम् ॥ ८ ॥
तपस्विनां वा व्रतिनां स्नातकब्रह्मचारिणाम् ।
भक्ताना मथवान्येषां मार्जनादौ रतात्मनाम् ॥ ९ ॥
प्रीतये परमेशाय कृत्वा सम्य क्प्रयच्छति ।
शालाद्यायतनोपेत मश्मपक्केष्टकान्वितम् ॥ ३५० ॥
ग्राम्यै र्धान्यै स्तथारण्यैः पूर्ण सम्प्रति संयुतम् ।
वणिक्कुटुम्बभृतक रक्षापालै स्समन्वितम् ॥ १ ॥
सोऽनन्तं फल माप्नोति काल माचन्द्रतारकम् ।
संस्थितिं शाश्वतीं लोके प्राप्नुया दक्षयं यशः ॥ २ ॥
भोगोपभोगिनीं भद्रां रम्यां पूर्वोक्तलक्षणाम् ।
यागनिष्पत्तये कुर्या द्योग्रतः पीठसन्निधेः ॥ ३ ॥
बहि राराधनार्थं वा कर्मिणां ब्रह्मचारिणाम् ।
मनुष्यपितृदेवाख्या न्मुच्यते स ऋणत्रयात् ॥ ४ ॥
मध्यतो गरुडाक्रान्तं सचक्राम्बुरुहांकितम् ।
तुर्याश्रमथवा वृत्तं कुण्डवत्पदवीयुतम् ॥ ५ ॥
बलिपीठं बहिः कुर्या द्भक्त्या यस्त्वच्युतालये ।
स याति शाश्वतं स्थानं विमानै रिन्दुवर्चसैः ॥ ६ ॥
य स्सप्रकार मारामं सम्प्रयच्छयति वै विभोः ।
नाना पुष्पफलोपेतं वापीद्रुम [ कूप ] समाकुलम् ॥ ७ ॥
साञ्जलो याशयोपेतं मारखड्गसमन्वितम् ।
स नन्दनवने भोगान् भुक्त्वा यात्यच्युतालयम् ॥ ८ ॥
क्षोणीं य स्सस्यसम्पूर्णां युक्तां वा गन्धशालिना ।
केदारं जलपातैस्तु परिच्छन्नं समन्ततः ॥ ९ ॥
सं यच्छति जगद्योनेः काल मासाद्य शाश्वतम् ।
स यायात् सुसितद्वीपं तत्रास्ते भगवानिव ॥ ३६० ॥

स्नानोपभोगमन्त्रार्थं सवृषेन्द्रन्तु गोगणम् ।
समर्चयित्वा देवेशं वैष्णवं प्रतिपादयेत् ॥ १ ॥
सोचिरा न्मुक्तदोषस्तु विष्णुलोकं प्रयाति च ।
गजं रथं वराश्वं च दीपस्थालीं सुलक्षणाम् ॥ २ ॥
व्यजनं चामरं छत्रं वादित्रं गणिकागणम् ।
शुभवस्त्राणिनेत्राणि दिव्यान्याभरणानिच ॥ ३ ॥
वितानंवैजयन्तींच चित्रपत्रलतागणम् ।
सुस्वरामुपघण्टाश्च धूपस्थालींसुलक्षणाम् ॥ ४ ॥
भृंगारंदर्पणन्तोयकुम्भंगन्धोपलंमहत् ।
पूर्वोद्दिष्टानिचान्यानि धान्यानिविविधानिच ॥ ५ ॥
योद्‌दातिहरेर्भक्त्या सतल्लोकमवाप्नुयात् ।
ईक्षमाणंविभोर्वक्त्रं वहन्तंदीपभाजनम् ॥ ६ ॥
महान्तमथवादीपं यन्त्रंकूर्मादिरूपघृत् ।
शरयन्नासनस्थंच चित्रसम्पुटभूषितम् ॥ ७ ॥
सच्छास्त्रा ि ठंविविधं श्रद्धयायोमहामते ।
ददातिदेवदेवस्य सतत्स्थानंप्रयातिच ॥ ८ ॥
पुरस्कृत्यजगद्योनिं यद्यतभक्त्याप्रदीयते ।
तदाराधनसक्तानां तत्तदक्षय्यतामियात् ॥ ९ ॥
इतिसम्बोधिताविप्रा लोकधर्मव्यवस्थिताः ।
लांगलीदेवदेवेन सर्वानुग्रहकाम्यया ॥ ३७० ॥
मयाप्राप्तंजगद्धातुः प्रसादान्मोक्षसिद्धये ।
यथावदद्यसर्वेषा मग्रतःप्रकटीकृतम् ॥ १ ॥
परम्पापहरम्पुण्यं पावनंवृद्धिभूतिदम् ।
इदंभव्याशयानांच सक्तव्यंभावितात्मनाम् ॥ २ ॥
भक्तानाममत्तानां पुण्डरीकाक्षसेविनाम् ।
गोपनीयमभक्तानां वाक्छलादिरतात्मनाम् ॥ ३ ॥

अन्यायेनोपसन्नानां नास्तिकानांविशेषतः ।
योगोपायत्ययोग्यानां योग्यानांसम्प्रयच्छति ॥ ४ ॥
इममर्थंसमाम्योमे स्वस्तिवोस्तुव्रजाम्यहम् ॥ ३७५ ॥

इति श्रीपाञ्चरात्रे श्रीसात्वतसंहितायाम्

प्रतिष्ठादिविधि नाम

पंचविंशः परिच्छेदः ॥ २५ ॥

समाप्ता च सात्वतसंहिता